श्रीगणेशायनमः ॥ श्रीकृष्णायनमः ॥ श्रीकृष्णोविजयते ॥ अथआदिपर्वप्रारंभः ॥ अथप्रथमन्त्रेकोद्देक्कर्तंः
फलप्राप्त्यर्थंश्रीभारतसारंशोधनसंक्षेपसर्ग कथाप्रबंधं चिकीर्षुर्ग्रंथादौमंगलमाचरति ॥ श्रीकृष्णस्यपदांबुजंसमु
मादौमुहुःसारासारविवेकिनांरतिविदंपाखंडमूलोच्छिदम् ॥ संसारामयभेषजंकृतमखैर्ध्येयंपरैराश्रितं कुर्वेभारतस्र९
थः संक्षेपतःसर्गजः ॥ १ ॥ प्रथमेभारतश्रुत्याःफलंजन्मेजयंनृपम् ॥ व्यासस्यागमनंतत्रहस्तिनापुरउत्तमे ॥ २ ॥
तस्त्वृषिस्तेनपूर्वजाकुशलोद्भवे ॥ पृष्ठोऽब्रवीन्नमन्यंतेवचोस्माकंततोऽसुखम् ॥ ३ ॥ प्रापुस्तवापिकुष्ठांगोमद्वाक्यान्नारदः ॥
भविताभवितव्येनस्मर्त्तव्योहंतदात्वया ॥ ४ ॥ गतेव्यासेनृपःकन्यासक्ताभाव्येनकर्मणा ॥ कुष्ठांगश्वस्मृतस्तेनव्यासस्त्वंच
नमुच्यते ॥ ५ ॥ योगोशतंकनकशृंगमयंददातिविप्रायवेदविदुषेचबहुश्रुताय ॥ पुण्यांचभारतकथांशृणुयाच्चनित्यंतुल्यंफल
भवतिमाणवकस्यतस्य ॥ १ ॥ द्वैपायनोष्ठपुटनिःसृतमप्रमेयंपुण्यंपवित्रमथपापहरंशिवंच ॥ योभारतंसमधिगच्छतिवाङ्म
नोभिःकिंतस्यपुष्करजलैरभिषेचनेन ॥ २ ॥ पाराशर्यवचःसरोजममलंगीतार्थगंधोत्कटंनानाख्यानककेसरंहरिकथासंबोध
नाबोधितम् ॥ लोकेसज्जनषट्पदैरहरहःपेपीयमानंमुदाभूयाद्भारतपंकजंकलिमलप्रध्वंसिनःश्रेयसे ॥ ३ ॥ दुर्लभाविप्रगो
ष्ठीचगंगास्नानंचदुर्लभम् ॥ दुर्लभाविष्णुभक्तिश्वदुर्लभाभारतीकथा ॥ ४ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसर
स्वतींव्यासंततोजयमुदीरयेत् ॥ ५ ॥ जयतिपराशरसूनुःसत्यवतीहृदयनंदनोव्यासः ॥ यस्यास्यकमलगलितंवाङ्मयममृ
तंजगत्पिबति ॥ ६ ॥ कृष्णद्वैपायनोव्यासःकुरूणांवंशकारकः ॥ जन्मेजयंनृपंद्रष्टुंहस्तिनापुरमागतः ॥ ७ ॥ दृष्ट्वागंगातटं
रम्यंसूपविष्टोमहामुनिः ॥ मिलनायसमायातोराजाजन्मेजयोमुनिम् ॥ ८ ॥ प्रणम्यशिरसापादौपादार्घमकरोत्तदा ॥ अ

॥ १४ ॥ अपीतं
रोनिपातितः ॥
न्यायुगपंचकं
पस्यक्षाल
ति ॥
ससो

द्यमेसफलंजन्मयत्त्वयासहदर्शनम् ॥ ९ ॥ किंकारणंसमुत्पन्नंयेनात्रागमनं कृतम् ॥ धन्योऽहंकृतकृत्योऽहंधन्यंराज्यंचमे
प्रभो ॥ १० ॥ एवमुक्त्वातदाराजासूपविष्टःसमीपतः ॥ तावद्द्वैपायनेनात्रसर्वंराज्यंनिरीक्षितम् ॥ ११ ॥ दृष्ट्वासभांसम
हर्तींप्रमाणेनत्रियोजनाम् ॥ राजापार्श्वेस्थितस्तत्रक्षत्रियाःकोटिशस्तदा ॥ १२ ॥ यौवनस्थाश्चशूराश्चसर्वेशस्त्रास्त्रपारगाः ॥
जन्मेजयःसभामध्येस्थितोदेवेषुवासवः ॥ १३ ॥ तंदृष्ट्वामनसाप्रीतोव्यासोवचनमब्रवीत् ॥ व्यासउवाच ॥ साधुसाधु
महाराजविख्यातोऽसि जगत्त्रये ॥ त्वत्समोनास्तिराजन्योयोस्मिन्कालेसुधर्मवान् ॥ १४ ॥ जन्मेजयउवाच ॥ विष्णुरूप
द्विजश्रेष्ठकथयस्वमहामुने ॥ पांडवाःकौरवाःस्वामिन्कथंनाशंगतास्त्विमे ॥ १५ ॥ पांडवानांकौरवाणांसादृश्यंनैवविद्यते॥
पांडवाःसत्यशूराश्चमहाबलपराक्रमाः ॥ राज्यंत्यक्त्वातुतेसर्वेकिमर्थंचवनंगताः ॥ १६ ॥ व्यासउवाच ॥ पांडवाःकौरवारा
जन्मदगर्वितचेतसः ॥ नमन्यंतेवचोस्माकंतस्माद्दुःखतरंगताः ॥ १७ ॥ तवापिराज्येचोत्पातोदृश्यतेपुरुषर्षभ ॥ यदित्वं
मन्यसेदेवह्यधुनाकथयामिते ॥१८॥ तवदुःखेननोदुःखंतेनाहमागतःसुत ॥ ममवाक्यंकुरुविभोयदिकल्याणमिच्छसि ॥१
व्यासस्यवचनंश्रुत्वाराजावचनमब्रवीत् ॥ करयोःसंपुटंकृत्वाविनयाचारपूर्वकम् ॥२०॥ राजोवाच ॥ वचनंतेकरिष्य
खिलंमुनिसत्तम ॥ कथमुत्पातकंतातशांतिंगच्छतितद्वद ॥ २१ ॥ व्यासउवाच ॥ भोभोवत्सनृपश्रेष्ठभवितव्येनमो
षण्मासाभ्यंतरेचैवतवदेहोविनश्यति ॥ २२ ॥ राजोवाच ॥ कथंदेवत्वयाज्ञातंसत्यंमेकथ्यतांविभो ॥ कथमुत्पद्
सार्द्धप्रजायते ॥ एतन्मेब्रूहिसर्वंत्वंप्रसादंकुरुमेप्रभो ॥ २३ ॥ व्यासउवाच ॥ उदीच्यामागतोह्यश्वोनग्राह्य
तस्यपृष्ठंसमारुह्यनगंतव्यंवनंप्रति ॥२४॥ वनेयादृश्यतेराजन्नारीसर्वांगसुंदरी ॥ सानग्राह्यातुमोहे

तयासहक्रतुश्रेष्ठोह्यश्वमेधोनरोचतां ॥ नामंत्रितव्यास्तेराजंस्त्वयालघुतराद्विजाः ॥२६॥ पश्चात्क्रोधानकर्तव्‍ ॥ १४ ॥ अपीतं
ष्यति ॥ एतत्तेकथितंराजन्सत्यंवाक्यंमयातव ॥२७॥ भवितव्येननाशेनमद्वाक्यंनकरिष्यसि ॥ यदादुःखेसमु ोनिपातितः ॥
हंत्वयानृप ॥ २८ ॥ आगमिष्यामिशीघ्रंवैकरिष्यामिगतिंतव ॥ इत्युक्त्वावचनंश्रेष्ठमगमत्स्वाश्रमंद्विजः ॥ २९ न्यायुगपंचकं
पुरेराजासूपविष्टःसुखासने ॥ एतस्मिन्नंतरेकालेआगतोहयविक्रयी ॥ ३० ॥ दृष्टंहयंमहावेगंसर्वावस्थासुसुंदरम् ॥ पस्यक्षाल
हयरूपेणमोहितोनृपसत्तमः ॥ ३१ ॥ तमारुह्यगतोराजावनांतरमकंटकम् ॥ एतस्मिन्नंतरेकालेवराहंदृष्टवान्नृपः ॥ ति ॥
पुरस्कृत्यगतस्तत्रबाणेनैकेनपातितः ॥ तद्देहान्निःसृताकन्यासुंदरीचसुयौवना ॥ ३३ ॥ पृष्टातत्रैवराज्ञासाकासित्वंच तसो
नने ॥ अप्सराःकिन्नरीचैवकिंदेवीऋषिपुत्रिका ॥ ३४ ॥ त्वादृशंतुमयाक्कापिनदृष्टंरूपमुत्तमम् ॥ अप्सराउवाच
ऋषिपुत्रीह्यहंदेवकुमारीवरकांक्षिणी ॥ पितृवाक्यावसानेतुतवदेशेसमागता ॥ ३५ ॥ राजोवाच ॥ कथंतेपितुरादेशः
सत्यंमेकथ्यतांशुभे ॥ ३६ ॥ अप्सराउवाच ॥ जंबुद्वीपस्यमध्येतुहस्तिनापुरमुत्तमम् ॥ तत्रजन्मेजयोराजातव
भर्त्ताभविष्यति ॥ ३७ ॥ एतत्त्वांचैवपृच्छामिकस्त्वंराजासुरूपवान् ॥ राजोवाच ॥ अहंजन्मेजयोराजाह्यागतोहयवाह
नः ॥ ३८ ॥ कन्योवाच ॥ क्रतुंकुरुमयासार्द्धंपट्टराज्ञीभवाम्यहम् ॥ ततोविवाहिताकन्याराज्ञाजन्मेजयेनसा ॥ ३९ ॥ दंप
तीहयमारुह्यवनाद्गेहमुपागतौ ॥ स्त्रीवर्गंचसमुत्सार्यकन्यासक्तोभवन्नृपः ॥४०॥ कन्योवाच ॥ स्वामिन्वरद्वयंदत्तंत्वयामेसफ
लंकुरु ॥ पट्टराज्ञीह्यहंजातामयासहक्रतुंकुरु ॥४१॥ तस्यावचनमाकर्ण्यराज्ञाचारंभितःक्रतुः ॥ राजादेशात्ततोविप्राह्यागतावे
दपारगाः ॥ ४२ ॥ आचार्याऋत्विजःसर्वेआगताराजमंदिरे ॥ तत्रैवारंभितोहोमोराजाराज्ञीपुरःस्थितः॥४३॥ गतंप्रहरमेकं

तुद्वितीयंवर्त्ततेतदा ॥ द्विजाज्ञयातदाराज्ञीहयशिश्नंकरेस्थितं ॥४४॥ प्रफुल्लंवर्द्धमानंचदृष्ट्वाहास्यंकृतंद्विजैः॥ मोहितास्तुद्विजाः
सर्वेतस्यारूपेणविह्वलाः ॥ ४५ ॥ ततोग्निःकुप्यमानस्तुभक्षयामासतद्धविः॥राजगृहाणिदग्धानितथादग्धंगजाह्वयं ॥४६॥
लज्जिताचतदाराज्ञीराजापिक्रोधभृत्तदा ॥ करवालंकरेकृत्वाहतास्तेचद्विजोत्तमाः ॥ ४७ ॥ अष्टादशहताविप्राहोमकुंडेप्रज्वा
लिताः ॥ मंडपंसर्वसंदह्यअदृष्टामोहिनीह्यभूत् ॥ ४८ ॥ तेनकर्मविपाकेनराजाविकलचेतनः ॥ पश्चात्तापंकरोच्चित्तेहाकिंचिद्दु
रितंकृतम् ॥ ४९ ॥ गतंतत्सुकृतंसर्वंयन्मयापूर्वसंचितम् ॥ तदाशरीरंकुष्ठेनगलितंगजचर्मणा ॥ ५० ॥ ओष्ठौघ्राणंचभ्रूअंगंक
र्णौगात्रंतथैवच ॥ अंघ्रीपल्लवहीनाश्चपतितानखकेशकाः ॥ ५१ ॥ मज्जामांसस्यपिंडंचदौर्गंध्यमभवद्वपुः ॥ तदासंस्मारित
स्तेनराज्ञाव्यासःसमागतः ॥ ५२ ॥ इतिश्रीमहाभारते आदिपर्वणिव्यासागमोनामप्रथमोऽध्यायः ॥ १ ॥ ब्रह्महत्यानि
वृत्तिश्चनृपकुष्ठविनाशनम् ॥ वैशंपायनविप्रस्यद्वितीयेप्राप्तिरुच्यते ॥ १ ॥ व्यासउवाच ॥ त्वंपापीचदुराचारीतवास्यंनविलो
कये ॥ यन्मयाकथितंपूर्वंतत्त्वयानकृतंवचः ॥१॥ राजोवाच ॥ मूढोहंदेवदुष्टोहंदुर्बुद्धिःपापमोहितः ॥ लुप्तंमयागुरोर्वाक्य
हपाशैर्हताद्विजाः ॥ २ ॥ अथकिंबहुनोक्तेनताततारयरौरवात् ॥ व्यासउवाच ॥ नीलरंगानपटान्कृत्वासंख्याचाष्टा
दा ॥ ३ ॥ अंतराप्रस्थितोनित्यंभारतंशृणुतत्त्वतः ॥ अष्टादशेषुपर्वेषुहत्याश्चाष्टादशास्तव ॥४॥ गमिष्यंतिनसंदे
मन्यसेध्रुवम् ॥ यदिशुद्धंनमन्येतनगमिष्यतिपातकम् ॥ ४ ॥ पर्वेपर्वेपटंशुभ्रंएतदेवानिदर्शनम् ॥ तस्मात्त्वंचमह
सकलंशृणु ॥ ५ ॥ आक्षेपोनैवकर्त्तव्यःसर्वंसत्यंहिमन्यतां ॥ पश्चाच्छ्रुतानिपर्वाणिराज्ञाव्यासमुखात्तदा ॥ व
षुव्यासेनपरिभाषितम् ॥६॥ जन्मेजयमहाराजकुरुक्षेत्रेमहाशुभे ॥ भीमेनोच्चाटिताऽद्यापिमातंगा चलंतिवि

5

तोऽव्यासोराज्ञाजन्मेजयेनच ॥ ७ ॥ शिरःप्रकंपितंतत्रतद्वचोनैवमानितम् ॥ तदाऽव्यासेनगगनाद्वायुनाकृष्यत
पातिताःकरितुंगाश्चहस्तिनापुरमध्यतः ॥ तदाविस्मयमापन्नोरणंमत्वाजगादह ॥ ९ ॥ जन्मेजयउवाच ॥ ब्रह्म
दासंमूर्खंहिमानिनम् ॥ तदाऽव्यासःस्थिरीभूतोवचनंचेदमब्रवीत् ॥ १० ॥ व्यासउवाच ॥(ततोऽव्यासश्चराजाच
माययौ)॥ हत्यैकादेहतोराजन्नगमिष्यतितेप्रभो ॥ ११ ॥ तन्नाशायमयासार्द्धंबद्रिकाश्रममाव्रज ॥ ततोऽव्यासश्चराज
काश्रममाययौ ॥ तत्रगत्वातुव्यासेनब्राह्मणाग्रेनिवेदितम् ॥ १२ ॥ व्यासउवाच ॥ भोभोविप्रगणाःसर्वैःशृणुध्वंवचनंम
राजाजन्मेजयोनामसोमवंशोद्भवःशुचिः ॥ १३ ॥ परीक्षितसुतोलोकेहत्यैकाचविनाश्यताम् ॥ व्यासवाक्यंसमाकर्ण्य
हत्याविनाशिता ॥ १४ ॥ गृहीत्वातिलशःकृत्वातच्चिन्हंवाससिस्थितं ॥ ततस्तौव्यासराजानावागतौहस्तिनापुरं ॥ १५ ॥
आगत्यतंनृपंव्यासःस्वेचराज्येन्यवेशयत ॥ पश्चात्तेनमहादानंविप्रेभ्यश्चनिवेदितम् ॥ १६ ॥ पट्टाभिषेकंराज्ञश्चतिलकंकृतवा
न्मुनिः ॥ पूर्वयत्संचितंद्रव्यंधनधान्यहयागजाः ॥१७॥ दीयतांरत्नभांडारंगृहंहेमविभूषितम् ॥ भारतंपठनित्यंहिपूर्णंकृत्वा
भुजीकुरु ॥ १८ ॥ इत्युक्त्वाचततोऽव्यासस्तमनुज्ञाप्यभूपतिं ॥ स्वस्थानमगमद्व्यासोराजाभूमिमपालयत् ॥ १९ ॥ तस्मि
न्कालेतदाराजाप्रत्यहंभारतंपठन् ॥ दशमेदिवसेपूर्णंकृत्वाभोजनमाचरत् ॥ २० ॥ प्रत्यहंक्रियतेतद्वन्महत्कष्टंप्रजायते ॥
तत्कष्टस्यविनाशायव्यासेनपरिभाषितम् ॥ २१ ॥ महतोभारतात्सारंसमुद्धृत्यसमुच्चयं ॥ तत्कृत्वाप्रेषितोविप्रोवैशंपायनको
मुनिः ॥ २२ ॥ व्यासेनकष्टनाशायतत्क्षणात्तंसमागतः ॥ तंदृष्ट्वासहसोत्त्थायअर्घ्यपाद्यंददावसौ ॥ २३ ॥ कृतांजलिपुटो
भूत्वाप्रश्रयावनतोऽब्रवीत् ॥ राजोवाच ॥ धन्योऽहंकृतकृत्योऽहंधन्यंराज्यंचमेद्विज ॥२४॥ नियमंनित्यपाठार्थंतथाभारतसं

भारत चयम् ॥ व्यासेनकथितंयच्चतत्सर्वंब्रूहिमेप्रभो ॥ २५ ॥ वैशंपायनउवाच ॥ तुष्टोऽहंतवराजेंद्रभारतंशृणुभक्तितः ॥ सर्वपापवि सार.
निर्मुक्तोभविष्यसिनसंशयः ॥ २६ ॥ राजोवाच ॥ शृणोमिह्येकचित्तेनचादिमध्यावसानकं ॥ अष्टादशानांपर्वाणांयत्सारंकथ्य अ० २
॥ ३ ॥ तांत्वया ॥ २७ ॥ वैशंपायनउवाच ॥ भारतस्यपदैकेनसर्वस्यदर्शनेनच ॥ विष्णोःस्मरणमात्रेणसर्वपापैःप्रमुच्यते ॥ २८ ॥
जन्मेजयउवाच ॥ मेपूर्वजांस्त्वांप्रच्छामिपांडवाःपंडुनंदनाः ॥ तेवीराःकथमुत्पन्नाब्रूहिमेऋषिसत्तम ॥ २९ ॥ इतिश्रीमहाभा
आदि. १ रतेवैशंपायनप्रवेशोनामद्वितीयोऽध्यायः ॥ २ ॥ तृतीयेजांतमोधेनोरजमस्तकभेदनम् ॥ त्रिपुरासुरपंचत्वमन्यच्चापीहवर्ण्यते
॥ १ ॥ वैशंपायनउवाच ॥ पुराकैलासशिखरेपार्वतीपरमेश्वरौ ॥ सिंहासनेचोपविष्टौचेरतुःस्मयथासुखं ॥ १ ॥ तत्रागताकाम
धेनुःपंचवृषभसंयुता ॥ तांदृष्ट्वाकामधेनुंहिशिवाहास्ययुताभवत् ॥२॥ पार्वत्युवाच ॥ अहोपश्यमहच्चित्रंकामधेनोश्वसाहसं ॥
सुराणांवंदिताधेनुर्दृश्यतेपंचभर्तृका ॥ ३ ॥ तस्यावचनमाकर्ण्यकामधेनुःशशापताम् ॥ ४ ॥ कामधेनुरुवाच ॥ अहोमनुष्यदे
हेषुशिवेत्वंपंचभर्तृका ॥ भविष्यसिनसंदेहःसत्यंसत्यंवचोमम ॥ ५ ॥ तस्याःशापंसमाकर्ण्यपार्वतीदुःखपीडिता ॥ शिवंक
थयामासकिमिदंचभविष्यति ॥ ६ ॥ कथंशापविनिर्मुक्तिस्तथोपायंकुरुप्रभो ॥ विचार्य्यमनसारुद्रोब्रह्माणंशरणंययौ ॥
नंदीगणसमायुक्तःशापमुक्तेश्वकारणात् ॥ आगतंचशिवंदृष्ट्वासर्वदेवैःप्रपूजितं ॥ ब्रह्मणापूजितस्तत्रपश्चात्स्तोत्रंसमा
ओंकारेणस्तुतिंचक्रेशिवायचचतुर्मुखैः ॥ ९ ॥ तदाचैकेनवक्रेणनिःसृतःखरवत्स्वरः ॥ दुर्विनीतंचविज्ञायहेत्वर्थंब
॥ १० ॥ त्रोटितंतत्करेलग्नंरुद्रेणपंचमंशिरः ॥ नपपातधरादेशेब्रह्मभालंकरेस्थितं ॥ ११ ॥ ब्रह्महत्याभयत्रस्त
वोगृहं ॥ उमयातत्करेदृष्टंह्यपरंब्रह्मणःशिरः ॥१२॥ अवाङ्मुखीततोगौरीमागच्छत्वंगृहंमम ॥ दत्तंगौर्य्यापा

क्त्वास्वमालयं ॥ १३ ॥ आगतोमृत्युलोकेचभ्रमत्तीर्थैपृथक्पृथक् ॥ एकदाविप्रगेहेगोदोहनंब्राह्मणीगता ॥ १४ ॥ अपीतं
वत्समाकृष्यबंधितंब्राह्मणेनतं ॥ तदावत्सेनसोविप्रःशृंगेणविनिपातितः ॥१५॥ धेन्वानिवारितःपश्चात्कथंविप्रोनिपातितः ॥
द्विजस्यहननेदोषःसंसक्तोनैववारितुं ॥१६॥ विहितंबालहत्यायाःप्रमाणंचयुगैककं ॥ स्त्रीहत्यात्रियुगैर्यातिगोहत्यायुगपंचकं
॥ १७ ॥ आत्महत्यातुकल्पांतंब्रह्मघ्नोरौरवंव्रजेत् ॥ वत्सउवाच ॥ सानस्पृशतिमांहत्यादारुणाब्राह्मणोद्भवा ॥ पापस्यक्षाल
नोपायंसुक्षेत्रेप्रकरोम्यहं ॥ १८ ॥ इतिवार्ताश्रुतातस्यरुद्रेणाकाशगामिना ॥ विप्रदेहात्तथाहत्यावत्संप्रतिप्रधावति ॥
॥ १९ ॥ तांदृष्ट्वादुद्रुवेवत्सोयावद्वाराणसीपुरी ॥ महत्पुरेमृतोवत्सोरुद्रलोकंगतोध्रुवम् ॥ २० ॥ मंदाकिन्याःपयःपीत्वावत्सो
मुक्तःसकिल्बिषात् ॥ तस्मिन्कालेचगंगायांब्रह्मशीर्षंविनिःसृतं ॥ २१ ॥ रुद्रहस्तात्सतुबहिस्तिष्ठत्येवचकेवलं ॥ तदा
तद्दिनमारभ्यवाराण्यस्यांस्थितोहरः ॥ २२ ॥ वैशंपायनउवाच ॥ वाराणस्यांयदाप्राप्तस्तदाहत्याबहिःस्थिता ॥ पति
तंचशिरोदृष्ट्वाईश्वरोहृष्टमानसः ॥ २३ ॥ पुरीत्यक्त्वायदायाति तदाहत्यातुदारुणा ॥ पुनर्लग्नारुद्रदेहेहत्याभीतोस्वयं
शिवः ॥ २४ ॥ बहिर्ननिःसरत्येवमुक्तिपुर्यांस्थितोहरः ॥ उत्पन्नस्त्रिपुरोदैत्यस्त्रैलोक्यंतेनमर्दितं ॥ २५ ॥ चिंतितंसकलैर्देवैः
कथमस्यक्षयोभवेत् ॥ ब्रह्मणोक्तंतदातेभ्योमरिष्यतिहरात्सतु ॥ २६ ॥ पृच्छंतिदेवताःसर्वेगौरींक्वापिगतःशिवः ॥ पार्वत्यु
वाच ॥गतोऽसौमर्त्यलोकेस्मिन्तीर्थेतीर्थेस्वयंशिवः ॥ अन्विष्यंतुसुराःसर्वेभूलोकेतुभ्रमंतिच ॥२७॥ केशवेनशिवोदृष्टोवारा
णस्यांसुरोत्तमाः ॥ प्रणम्यशिरसाशंभुंस्थित्वासर्वेसमीपतः ॥ २८॥ शिवेनोक्तंहिभोदेवाःकिमर्थंगमनंकृतं ॥ देवाऊचुः ॥
निर्जितंत्रिपुरेणेदंत्रैलोक्यंतुमहेश्वर ॥ २९ ॥ तदर्थमागताःसर्वेप्रयातुंस्वपुरेशिव ॥ ३० ॥ शिवउवाच ॥ नागच्छामिहिकैला

संहत्याभीतोजनार्दन ॥ पूर्वंकथानकंयद्यत्तत्सर्वंकथितंहरेः ॥ ३१ ॥ पुनराहयदादेवोहत्यामेयदिगच्छति ॥ आगमिष्यामि
कैलासेहत्यामुक्तोजनार्दन ॥ ३२ ॥ वैशंपायनउवाच ॥ शिवार्थंहितदाशीघ्रंहत्यास्थानेगतोहरिः ॥ वासुदेवउवाच ॥ शि
वांगंमुंचहत्येत्वमन्यंयाचयमांवरं ॥ तत्तवैवप्रदास्यामिनदास्येचेदघंमम ॥ ३३ ॥ हत्योवाच ॥ नृगजाश्वखरराज्ञांमहिषोष्ट्रा
णांनृणांतथा ॥ अष्टादशाक्षौहिणीनांशोणितंदेहिमेप्रभो ॥३४॥ हरिरुवाच॥ द्वापरेयुगमध्येतुसोमवंशोभविष्यति ॥ तदादास्या
मिहत्येतेशोणितंहियथेप्सितं ॥३५॥केशवस्यवचःश्रुत्वाहत्यामुक्तःशिवःस्वयं ॥ शीघ्रमायैवैस्वर्गेशिवेनत्रिपुरोहतः ॥ ३६॥
इतिश्रीमहाभारतेभारतसारेआदिपर्वणिशिवहत्यामुक्तिर्नामतृतीयोध्यायः॥३॥चतुर्थेवासनामुक्तःशिवोगांगेयजन्मच ॥ इति
दासस्यकन्यायांव्यासोत्पत्तिश्चवर्ण्यते ॥१॥ वैशंपायनउवाच॥ स्वेस्वेस्थानेगतादेवाःस्वस्थानेतुगतोहरिः॥ब्रह्मणाकथितंरु
द्रंत्वयाहत्याविनाशनम् ॥ १ ॥ कर्तव्यंतुप्रयत्नेनयतःकल्याणमाप्स्यसि ॥ गंतव्यंतत्रदेवेशयत्रास्तेमधुसूदनः ॥ २ ॥
विष्णुमुद्दिश्यनिष्क्रांतौसंप्राप्तौब्रह्मसंकरौ ॥ शंकरउवाच ॥ मयामूढेनदेवेशकृतंकर्मसुदारुणं ॥ ३॥ देहिमेनुग्रहंदेवप्रायश्चित्त
स्यकर्मणः ॥ श्रीभगवानुवाच ॥ संधार्यातिथिरूपंचविचरस्वमहीतले ॥ तीर्थयात्रांकुरुत्वंचरुद्रवर्षाणिद्वादश ॥ ४ ॥ ब्र
ह्मशीर्षंकरेधृत्वाप्रत्यहंभोजनंकुरु ॥ विशुद्धस्त्वंतुतदाभासियदायास्यसिगौतमीं ॥ ५ ॥ यत्रतिष्ठतिसीतेशस्तत्रपूतोभविष्य
सि ॥ अहमग्रेतुतांहत्यांरक्तंदास्यामिद्वापरे ॥ ६ ॥ हरिवाक्यंसमाकर्ण्यरुद्रेणाचरितंतथा ॥ गोदावर्यांकपालेशस्त्रिषुलोके
षुविश्रुतः ॥७॥ रुद्रहस्तात्कृतस्नानाद्ब्रह्मशीर्षंविनिःसृतं ॥ कुंभराशिस्थितेसूर्येसिंहेदेवपुरोहिते ॥८॥ एवंयोगेहितांकुर्यात्
यात्रांगोदावरींवरां ॥ सपुमान्सर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ ९ ॥ ब्रह्मविष्णुप्रसादेनशंकरोमुक्तकल्मषः तत्तीर्थंदुर्लभं

मन्येस्वर्गेमर्त्येरसातले ॥ १० ॥ श्रीभगवानुवाच ॥ पंचाशात्तवदेहस्यअवतीर्यधरातले ॥ पुत्रीभवभवानित्वंराज्ञोवैद्रुप
दस्यच ॥ ११ ॥ विष्णुनाप्रेरितोरुद्रःस्वागतोनिजमंदिरे ॥ ब्रह्मणाकोपमुत्पद्यप्रेषितःशंकरालयं ॥ १२ ॥ समागम्यशनैः
कोपोगंगायांशंकरस्यवै ॥ प्रविष्टेकलहोजातोगंगागौरीशिवेपुच ॥ १३ ॥ पिनाकीरोषपूर्णोऽभूद्यथावह्निर्घृताहुतैः ॥ सकोपे
नशिवेनोक्तंगंगांचपार्वतींप्रति ॥ १४ ॥ गंगेत्वंचधरापीठेभार्याभवतुशंतनोः ॥ गौरित्वंचविशेषेणराज्ञाद्रुपदजाभव ॥ १५ ॥
इतिभर्तृवचःश्रुत्वाताभ्यामाताडितंशिरः ॥ निवृत्तेकल[illegible] ।ततगौरीशिवमभाषत ॥ १६ ॥ गौर्युवाच ॥ यत्रत्वंदेवदेवेशति
ष्ठेहंतत्रतत्रतु ॥ यत्रावतारोमेदेवतत्रभुंक्ष्वकलेवरं ॥ १७ ॥ एकांशंमामकंजन्मपंचमूर्तिवसुंधरां ॥ त्वयासहसमंदुःखंसुखंरा
ज्यमथापिवा ॥१८॥ गंगेत्वंचधरापीठेकृत्वारूपंचमानुषं ॥ शंतनुंवरभर्त्तारंममांशंहस्तिनापुरे ॥ १९ ॥ इतिशंभुवचःश्रुत्वा
गंगारूपेणमानवी ॥ गंगातीरेसमायाताकामिनीकामचारिणी ॥ २०॥ एतस्मिन्नंतरेकालेशंतनुःसोमवंशजः ॥ वसुरूपधराधा
रोद्विपदेशिवरूपधृक्॥ २१ ॥ द्वापरेशंतनूराजाबभूवहस्तिनापुरे॥ खेलनार्थंसमायातोनदीतीरेगणैर्वृतः ॥ २२ ॥ तत्रगंगानदी
नारीदिव्यरूपधरास्थिता ॥ तेनदृष्टातुसानारीमोहितःशंतनुस्तदा॥ २३ ॥ तस्याःसमीपमागत्यपप्रच्छरूपमोहितः ॥ शंतनु
रुवाच ॥ कासित्वंकस्यवाकांताकस्यपुत्रीवदस्वमे ॥ २४॥ गंगोवाच ॥ गंगाहंशिवशापेनआगताधरणीतले ॥ हिमाचलसु
ताराजन्वांच्छामिवरमुत्तमं ॥ २५ ॥ शंतनुरुवाच ॥ वरंमांवरयाशुत्वंशांतनुजंचशंतनुं ॥ पृथिव्यामेकभूपोहंसर्वभूपेषुपू
जितः ॥ २६॥ गंगोवाच ॥ साधुसाधुमहाराजयावद्वाक्यंकरोषिमे ॥ तावद्भवामितेभार्याकामिनीकामचारिणी ॥ २७ ॥
॥ जनमेजयउवाच ॥ कोसौशंतनुराजावैकस्यपुत्रवदस्वमे ॥ वैशंपायनउवाच ॥ सोमवंशोद्भवोराजादुष्कृतस्तस्यपुत्रकः ॥

प्रतीपइतिविख्यातस्तस्यपुत्रश्चशंतनुः ॥ २८ ॥ शंतनोःशांतनुश्चैवगंगातस्यप्रियाभवत् ॥ तथेतिप्रतिगृह्यासौतामादायगृहं
प्रति ॥ २९ ॥ नकरिष्यामितेवाक्यंतदायाहिस्वमालयं ॥ इत्युक्तातेनराज्ञावैपरिणीतास्वमंदिरे ॥ ३० ॥ किंचित्कालंतया
सार्द्धंक्रीडांचक्रेसशंतनुः ॥ कालेप्राप्तेतयाराजन्प्रसूताश्चाष्टपुत्रकाः ॥ ३१ ॥ यंयंजनयतेपुत्रंप्रवाहेतंविनिक्षिपेत् ॥ शंतनुः
कामलोभेनगंगायाःप्रेरितोनृप ॥ ३२ ॥ एवंनक्षिप्तवान्तत्रवृद्धत्वात्पुत्रमष्टमं ॥ गंगोवाच ॥ यन्मयाकथितंपूर्वंनकृतंतुत्व
याकथं ॥ अधुनाह्यनृणीभूत्वागमिष्यामिनिजालये ॥ ३३ ॥ वसूनामष्टमोनामगांगेयोनामनामतः ॥ अजेयस्त्रिषुलोकेषुदे
वदानवदुर्जयः ॥ ३४ ॥ यन्नाम्नानामसंग्राह्यंगांगेयोनामविक्रमी ॥ इत्युक्त्वावचनंगंगागताकैलासमंदिरे ॥ ३५ ॥ गांगेयोराज
पुत्रस्तुप्रसिद्धोभुवनत्रये ॥ ततोबहुतरंकालमभार्यःशंतनुःस्थितः ॥ ३६ ॥ पितरंस्त्रीविहीनंचदृष्ट्वाभीष्मेणधीमता ॥ हरिदास
स्यकैवर्त्तैःपुत्रीमत्स्याविवाहिता ॥ ३७ ॥ जनमेजयउवाच ॥ कैवर्तपुत्रीसातेनकथंराज्ञाविवाहिता ॥ एतंमेसंशयंस्वामि
न्छिंधिसर्वंद्विजोत्तम ॥ ३८ ॥ वैशंपायनउवाच ॥ सुधन्वानामराजावैगतोदेशांतरंप्रति ॥ तस्यभार्यासुशीलावैगृहेजातारज
स्वला ॥ ३९ ॥ निजदासीतयाराजन्प्रेषितावल्लभंप्रति ॥ श्येनीरूपाचसाजातागताशीघ्रंनृपंप्रति ॥ ४० ॥ तस्यवीर्यंचसं
गृह्ययावदायातिमार्गणे ॥ तावदभ्यागताश्येनीतयोर्युद्धमभून्नृप ॥ ४१ ॥ गंगायांपतितंवीर्यंगलितंभत्स्यिनातदा ॥ महा
मत्स्यस्यसंयोगात्मत्स्यकाजनितार्भका ॥ ४२ ॥ गृहीतामत्स्यघातैश्चकन्यैकारूपसुंदरी ॥ ततःसावर्द्धमानाचपंचवर्षदशा
ष्टिका ॥ ४३ ॥ कैवर्त्तस्यगृहेराजन्गंगानावंप्रवाहति ॥ ततःप्रभातसमयेसमायातःपराशरः ॥ ४४ ॥ बालानावंप्रवहती
दृष्ट्वातेनतुसुंदरी ॥ नावमानयभोबालेह्यागमिष्याम्यहंतटे ॥ ४५ ॥ मुनेर्वचनमाकर्ण्यतयानिस्तारितस्तदा ॥ तस्यामारुह्य

आयातीगंगामध्येसतापसः ॥ ४६ ॥ तस्यास्तद्वदनंदृष्ट्वामोहितःसपराशरः ॥ एतदृष्ट्वातयातेनकामचेष्टाविनिर्मिता ॥
॥ ४७ ॥ किमब्जेकिंमीनौकिमुमदनबाणौकिमुदृशौखगौवाभोबालेकिमुनकुलदेहौकिमुकुचौ ॥ तडिद्वातारावाकिमुकनककु
म्भौकिमपरौवदत्वंसत्यंमेमदनवशगोहंरतिवशे ॥४८॥ तद्रूपमोहितोविप्रोदेहःस्पर्शपुनःपुनः ॥ करोतिचतयासोवैवारंवारंनिषे
धितः ॥ ४९ ॥ मत्स्यगंध्युवाच ॥ स्वामिन्माकुरुमच्चेष्टांपश्यंतितीरजाजनाः ॥ तत्रतेनचविप्रेणलज्जंतितिमिरंकृतं ॥
॥ ५० ॥ तेनैवाच्छादितोभानुर्दिनंरात्रिसमंकृतं ॥ तयोःप्रीतिःसमुत्पन्नासद्योगर्भधराभवत् ॥ ५१ ॥ तदाव्यासःसमुत्पन्नो
गंगापारेतटेशुभे ॥ पश्चाद्योजनगंधाहिकृतातेनतपस्विना ॥ ५२ ॥ एवंकृत्वागतोविप्रःस्वस्थानेसपराशरः ॥ ततस्तुजनि
तःपुत्रोरूपौदार्यगुणान्वितः ॥ ५३ ॥ कमंडलुजटाधारीवेदव्यासोमहामुनिः ॥ मातरंचनमस्कृत्यतपस्तप्तुंव्रजेन्मुनिः ॥ ५४ ॥
वनांतरंयदायातितदामात्रानिवारितः ॥५५॥ इतिश्रीमहाभारतेभारतसारे आदिपर्वणिव्यासोत्पत्तिर्नामचतुर्थोध्यायः ॥ ४ ॥
पंचमेव्यासनिर्याणंवनंचित्रविचित्रयोः ॥ निधनंधृतराष्ट्राणांजन्महेतुश्चकथ्यते ॥ १ ॥ व्यासउवाच ॥ किमिदंक्रियतेमातर्मु
चमांमानिषेधय ॥ यदायदासमायातिदुःखंतेवसुधातले ॥ तदातदाहंस्मर्त्तव्योह्यागमिष्यामिनिश्चितं ॥ १ ॥ विश्वामि
त्रपराशरप्रभृतयोयेचांबुपर्णाशनास्तेपिस्त्रीमुखपंकजंसुललितंदृष्ट्वैवमोहंगताः ॥ आहारंसघृतंपयोदधियुतंभुंजंतियेमानवास्ते
षामिंद्रियनिग्रहःकथमभूद्दंभस्वरूपंजगत् ॥ २ ॥ मत्तेभकुंभदलनेभुविसंतिशूराःकेचित्प्रचंडमृगराजजयेपिदक्षाः ॥
किंतुब्रवीमिबलिनांपुरतःप्रसह्यकंदर्पदर्पदलनेविरलामनुष्याः ॥ ३ ॥ इत्युक्त्वासजगामाशुव्यासोरेवातटंप्रति ॥ पुनरद्वत्य
साकन्यानविवाहंकरोतिवै ॥ गंधलोभेनचायातोगांगेयोजान्हवीतटे ॥ ४॥ तांकन्यांप्रच्छयामासकस्यपुत्रीसुशोभने ॥ त

यातस्यतथैवोक्तंहरिदासस्यकन्यका ॥ अहंमत्स्यात्समुत्पन्नामत्स्यगंधाभिधानका ॥ ५ ॥ तस्यावचनमाकर्ण्यहरिदासंजगा
मह ॥ कैवर्त्तंज्ञातिदुष्टंचगांगेयोराजसत्तमः ॥ ६ ॥ तांकन्यांयाचयामासपित्रर्थेंहरिदासकं ॥ ७ ॥ हरिदासउवाच ॥ जनका
र्थेंनदास्यामितवदास्यामिकन्यकां ॥ तवपुत्रोहिराजास्यात्तस्यपुत्रोहिभूपतिः ॥ ८ ॥ एवमुक्तेतुकैवर्तेंगांगेयोनृपसत्तम ॥ व्र
तंतत्कारयामासभीष्मंकामविमर्दनं ॥ ९ ॥ तदातेनचसादत्तागृहीत्वास्वगृहंययौ ॥ विवाहिताचसाबालातेनकन्यास्ववेश्मनि
॥ १० ॥ तस्यांपुत्रौचसंजातौनाम्नाचित्रविचित्रकौ ॥ एतस्मिन्नंतरेकालेमृतःशंतनुभूपतिः ॥ ११ ॥ गांगेयोमातृकाभक्तोभूमिशा
यीकुंशासने ॥ चित्रविचित्रौदुर्बुद्धिश्चक्रतुर्भीष्ममातरि ॥ १२ ॥ किमितिस्थीयतेनित्यंमाताभीष्मस्यमंदिरे ॥ कुर्वातेकथमे
कांतंतावुभौमंदिरेस्वके ॥ १३ ॥ चित्रविचित्रौरात्रौवैगतौभीष्मंनिरीक्षितुं ॥ पश्यंतियात्रदेकांतेतावद्दृष्टश्चभीष्मकः ॥ १४ ॥
मातृभक्तःसदाचारोभीष्मोव्रतविधायकः ॥ तदातौतप्यमानौचभीष्मंदृष्ट्वाविलज्जितौ ॥ १५ ॥ धिक्कारंचक्रतुस्तौहिचात्मा
नंपापचारिणं ॥ आवांचपापभाग्जातोचिंत्यतामस्यनिष्कृतिः ॥ १६ ॥ ताभ्यांप्रभातेविज्ञप्तंगांगेयंधर्मसुव्रतं ॥ आवा
भ्यामीदृशीबुद्धिस्तातकिंतस्यनिष्कृतिः ॥ १७ ॥ गांगेयउवाच ॥ येचान्येमातरंघ्नंतिब्रह्महत्यासहस्रशः ॥ शमीकाष्ठेतथा
श्वत्थेस्वदेहंदह्यतेवने ॥ १८ ॥ ततस्तेशुद्धिमायांतिनैवशुद्ध्यंतिचान्यथा ॥ पश्चाद्विचारयामासचित्रश्चैवविचित्रकः ॥ १९ ॥
गत्वातत्रमहारण्येतेनैवविधिनामृतौ ॥ गांगेयोनरशार्दूलोमहच्छोकेनपीडितः ॥ २० ॥ मदनंभर्त्सयामासतथाभीष्मेणक
र्मणा ॥ पुत्रोराजधरोनास्तिनास्तिपुत्रश्चभूपतिः ॥ २१ ॥ ततश्चिंतापरोनित्यंगांगेयोधर्मतत्परः ॥ उवाचमातागांगेयंममा
स्तिपूर्वपुत्रकः ॥ २२ ॥ वेदव्यासोमहातेजारेवातीरेस्थितःसदा ॥ तेनेदंकथितंवत्सव्यसनेस्मरणंमम ॥ २३ ॥ कर्तव्यंच ॥ ६ ॥

त्वयामातरागमिष्यामिनिश्चितं ॥ भीष्मेणोक्तंतदामातःसत्वरंस्मरतंमुनिं ॥ २४ ॥ [illegible]
गतः ॥ प्रणम्यपरयाभक्त्यागांगेयःपरिपृच्छति ॥ २५ ॥ गांगेयउवाच ॥ इदंराज्यंच [illegible]
श्चमृतौपुत्रौनाम्नाचित्रविचित्रकौ ॥ २६ ॥ अपुत्रंविद्यतेराज्यंपुत्रंराज्यधरंवद ॥ व्यासउवाच ॥ [illegible] मानस्त्वयांव
बालाचतथांबिका ॥ २७॥ मद्दृष्ट्यग्रेसमायातांवस्त्राच्छादनकंविना ॥ प्रथमाचागताराज्ञीसितचंदनलेपना ॥ २८ ॥ ता
मागतांततोदृष्ट्वाव्यासोदोधूयतेशिरः ॥ व्यासाग्रेनिःसृताराजन्द्वितीयाचक्षुबंधिनी ॥ २९ ॥ पुनस्तथैवव्यासेनशिरःसंकंप
नंकृतं ॥ सत्सर्वंचसमालोक्यभीष्मःप्रपच्छव्यासकं ॥ ३० ॥ व्यासउवाच ॥ अंगेचंदनलेपोवैयथावध्वाविनिर्मितः ॥
तस्याःपुत्रोभवेत्कुष्ठीसर्वांगेतुनसंशयः ॥ ३१ ॥ ययावैचक्षुबंधस्तुकृतस्तस्यांधकःसुतः ॥ विष्णुनामयुतायावैतस्याःपुत्रस्तुवै
ष्णवः ॥ ३२ ॥ एवमुक्त्वागतेव्यासेपुत्रास्तेचप्रजज्ञिरे ॥ धृतराष्ट्रश्चपंडुश्चविदुरोधर्मतत्परः ॥ ३३ ॥ भीष्मेणपालितास्तेवैवर्द्धं
तेनिजवेश्मनि ॥ ३४ ॥ इतिश्रीमहाभारतेभा[illegible]रेआदिपर्वणिव्यासवरदानोनामपंचमोध्यायः ॥ ५ ॥ षष्ठेदुर्वाससःकु
न्तीलेभेमंत्राणिचोद्भवम् ॥ कर्णस्यकर्णमालस्य[illegible]शापस्त्रियामुनेः ॥ १ ॥ वैशंपायनउवाच ॥ शृणुराजन्महाबाहोकथांपापह
रांशुभां ॥ ततःकांतारदेशस्यकुंतीयादवपुत्रिका ॥ १ ॥ दुर्वासनामविख्यातःसाक्षान्मूर्तिःस्वयंहरः ॥ तद्भक्तिमकरोत्कुंती
मंत्रस्तोत्रेणतोषितः ॥ २ ॥ दुर्वासाउवाच ॥ तुष्टोहंतवकल्याणिमंत्रंदास्यामिशोभनम् ॥ तेनमंत्रेणतेभर्ताह्यागमिष्यतिवां
छितः ॥ ३ ॥ प्रभातेचगताकुंतीनदीतीरेसुशोभने ॥ सवितुर्ध्यानमाराध्यमंत्रेणाकर्षितोरविः ॥ ४ ॥ आगतःसत्वरंसूर्यः
कुंतींप्रोवाचसप्रियम् ॥ सूर्यउवाच ॥ स्मृतोऽहंकेनकार्येणवरंदास्यामिनिश्चितम् ॥ ५ ॥ कुंत्युवाच ॥ दुर्वाससावरोदत्तो

यःस्त्वयात्विच्छतेनरः ॥ आगमिष्यतिसद्योवैतत्परीक्षायत्वंस्मृतः ॥६॥ सूर्यउवाच ॥ यद्यहंतेस्मृतःसुभ्रुसंभोगंदेहिमेशुभे ॥
तवपुत्रंप्रदास्यामिदातारंधन्विनांवरम् ॥ ७ ॥ कुंत्युवाच ॥ अत्युग्रतापंतेदेवनैवसोढुंसमर्थका ॥ अल्परश्मीन्तदाकृत्वासं
भोगस्तुकृतस्तया ॥८॥ सद्योगर्भधराकुंतीकर्णंप्रासूततंसुतम् ॥ पुत्रंमुक्त्वानदीतीरेसागतास्त्वंगृहंतदा ॥९॥ विकर्तदेशराजाभू
त्धृतराष्ट्रस्यसेवकः ॥ तस्यभार्यातुराधास्यात्तयासंवर्द्धितश्वसः ॥ १० ॥ सामुद्रकोक्तचिन्हानिराजलक्षणशोभितः ॥ तत्सु
तःसुकुमारांगोववृधेचंद्रवद्गृहे ॥ ११ ॥ वैशंपायनउवाच ॥ गांगेयोपिमहाराजसर्वज्ञानविशारदः ॥ शूरसेनंप्रतितदातेनदत्तं
सुबुद्धिना ॥ १२ ॥ भीष्मेणचव्हतेपांडोःकुंतीतेनैवयाचिता ॥ विवाहिताचसाकन्यापंडुराजायधीमता ॥ १३ ॥ मथुरांशूर
सेनेनपश्यतांसर्वभूभुजाम् ॥ गांधारस्यचगांधारीविषकन्यासमुद्भवा ॥ १४ ॥ अग्रेभर्तृशतंवेद्यांतयादेव्याविनाशितम् ॥
पश्चाद्विवाहितारार्ज्ञाधृतराष्ट्रेचिरायुषि ॥ १५ ॥ बलवान्मदमत्तश्चराजापंडुर्धनुर्द्धरः ॥ विचचारवनेघोरेमृगयार्थंकुरूद्व
ह ॥ १६ ॥ कर्णमालोमहायोगीतपश्चक्रेचतद्वने ॥ तस्यकर्णेवसेयुस्तेक्रीडासक्ताश्चपक्षिणः ॥ १७ ॥ पक्षिणोपिवदंत्येव
मसौस्त्रीणांचघातकी ॥ एकाकिनींगृहेभार्यांत्यक्त्वातुकुरुतेतपः ॥ तत्रतस्यफलंनास्तिबालहत्यादिनेदिने ॥ १८ ॥ मुनिरुवा
च ॥ किंकारणेनपक्षींद्रहत्यामेचाग्रताःस्त्रियः ॥ तपस्तीर्थान्यनेकानिपुण्यानिविविधानिमे ॥ १९ ॥ पक्षींद्रउवाच ॥ भार्यां
त्यक्त्वायःपुरुषस्तपस्तीर्थानिसंचरेत् ॥ सर्वैनिरयमाप्नोतितत्सर्वंनिष्फलंभवेत् ॥ २० ॥ तवभार्यासतिश्रेष्ठ उवाचमांतीगांगेयंममा
भ्रती ॥ विरहानलदग्धांगीवनेकांतंनपश्यति ॥ २१ ॥ एतद्वाक्यावसानेतुधृत्वारूपंमृगःतर्वत्सव्यसनेस्मरणंमम ॥ २३ ॥ कर्तव्यंच
तिसादरम् ॥ २२ ॥ मृगीणांवृंदमध्येतुभार्यावैप्राप्तवान्मृगीम् ॥ तयासहकृतोभोगरु

वसंयोगात्पंडुराखेटमागतः ॥ मृगयूथंततोदृष्टंतन्मध्येतौचदंपती ॥ २४ ॥ व्याघरू ह्रमोदते ॥ १० ॥ शृंगार
तोराजानिरीक्षेततौदृष्टौनिजरूपिणौ ॥ २५ ॥ हादेवकिंकृतंपापंमत्समोनास्तिपातकी ॥ ... त्रारि... हत्याव ॥
च्छति ॥ २६ ॥ महादुःखेनसंतप्तोधनुरुत्सृज्यपाणिना ॥ करयोःसंपुटंकृत्वातामाहभूपतिस्तदा ॥ २७ ॥ मातस्त्वयोांव
धेयंमेयत्तेमनसिरोचते ॥ दंपत्युवाच ॥ स्त्रीणांसंभोगकालेतुतवमृत्युर्भविष्यति ॥ २८ ॥ एवंशापमिदंदत्व तीचहतौग
तौ ॥ स्वस्थानेचागतोराजादुःखशोकेनपूरितः ॥ २९ ॥ शास्त्रोक्तविधिनाराजन्प्रायश्चित्तंततःकृतम् ॥ कुंती... गकालेतुते
नैवविनिवेदितम् ॥ ३० ॥ तेनदुःखेनसाकुंतीदेवाराधनतत्परा ॥ ततोबहुतरेकालेह्यागतोमुनिसत्तमः ॥ ३१ ॥ दुर्वासानाम
विख्यातःकुंत्यापूज्यःसुतार्थया ॥ ३२ ॥ दुर्वासाउवाच ॥ तुष्टोहंतवभक्त्याचवरंयाचयशोभने ॥ कुंत्युवाच ॥ प्रसादंदेहिमे
स्वामिन्ममान्नेपारणंकुरु ॥ ३३ ॥ दुर्वासाउवाच ॥ पारणंतवगेहेवैकरिष्यामितदाशुभे ॥ यद्येकदिवसेपक्वंशालिबीजंप्रयच्छ
सि ॥ ३४ ॥ कुंत्युवाच ॥ एवंतवकरिष्यामिगत्यादत्तेमहामुने ॥ मुनिर्नैमित्तिकंकर्मकर्तुंनद्यांगतस्तदा ॥ ३५ ॥ एवंवि
धेतदाकालेतावत्साप्रार्थयद्रविं ॥ प्रार्थितोरविरागत्यकिंतुकार्यंतदुच्यताम् ॥ ३६ ॥ तावत्तिष्टरवेनाकेयावत्शाल्योनवाभवे
त् ॥ द्विमासंचस्थितोभानुर्यावच्छालिःसुपाचिता ॥ ३७ ॥ ऋषिणातत्रगेहेचनवान्नेपारणंकृतम् ॥ तद्भक्त्याचातिसंप्रीतोव
रंवृणुसुशोभने ॥ ३८ ॥ कुंत्युवाच ॥ ममास्तिसर्वसंपन्नंपुत्रहीनाह्यहंद्विज ॥ ३९ ॥ द्विजउवाच ॥ पवित्रात्वंसदाचारास्नान
दानादिकंकुरु ॥ पश्चाद्वरंप्रदास्यामियत्तेमनसिरोचते ॥ ४० ॥ स्नानार्थंचागताकुंतीगांधार्याश्छन्नतःकृतं ॥ संयोज्यहस्तौ
गांधारीवरंदेहिममप्रभो ॥ ४१ ॥ ऋषिणात्रवरोदत्तःशतपुत्राभवानघे ॥ ततःप्रहृष्टागांधारीचागतानिजमंदिरे ॥ ४२ ॥ स्ना

नदानादिकंकृत्वाकुंतीचैवाग्रतःस्थिता ॥ प्रसादंकुरुमेस्वामिन्वरदानेमहामुने ॥४३॥ ऋषिरुवाच ॥ दत्तंमयापुत्रशतंबालेऽद्यापिनतृप्यसे ॥ कुंत्युवाच ॥ ममानुरूपागांधारीदत्तंतस्याःसुतंशतम् ॥ ४४ ॥ विचार्यैवतदातेनपंचपुत्राःसमर्पिताः ॥ गांधार्याःशतपुत्राश्चममपंचसुतामुने ॥ ४५ ॥ ऋषिरुवाच ॥ तवपंचसुतादेवीसंग्रामेसमुपस्थिते ॥ गांधार्यास्तुशतंहन्युश्छद्मनिष्पादितंचयत् ॥ ४६ ॥ राज्यंगृह्णंतुतेपुत्राःसत्यंसत्यंवचोमम ॥ वैशंपायनउवाच ॥ एवंमुनेर्वचःश्रुत्वाकुंतीसाभर्तुराज्ञया ॥ ४७ ॥ धर्मानिलेंद्रसंयोगात्पुत्रत्रयमजीजनत् ॥ धर्मानिलेंद्रसंभूताअश्विभ्यामंशतःसुताः ॥ ४८ ॥ क्षेत्रजाः पंचपंडोर्हिकुंत्यास्मरणपुत्रकाः ॥ युधिष्ठिरोधर्मपुत्रोभीमसेनस्तुवायुजः ॥ ४९ ॥ देवेंद्रतनयोह्यासीदर्जुनोरूपसुंदरः ॥ नकुलःसहदेवश्चदस्रजौमाद्रिपुत्रकौ ॥ ५० ॥ इतिश्रीमहाभारतेभारतसारेआदिपर्वणिपांडवोत्पत्तिर्नामषष्ठोध्यायः ॥ ६ ॥ सप्तमेशतपुत्राणांधृतराष्ट्रस्यजन्मच ॥ कुरुपांडवविद्याप्तीराज्यप्राप्तिश्चकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ एवंपंडोर्नृपस्येहपुत्राःपंचमहौजसः ॥ कालेकालेप्रसूताश्चतेपुत्राःपंडुनंदनाः ॥ १ ॥ सकृत्प्रसूतागांधारीअंडमध्येसमुद्भवाः ॥ बभूवुःशतपुत्राश्चतेपुत्राधृतराष्ट्रजाः ॥ २ ॥ तदंडंचद्विधाभूतमाद्योदुर्योधनोनृपः ॥ परभागेधृतराष्ट्रस्यसंजाताःकलिरूपिणः ॥ ३ ॥ ततस्तेनकृतोमानोविवर्द्धंतेंदुवत्तदा ॥ बुद्धिमंतोमहोत्साहादानशीलाःप्रियंवदाः ॥४॥ संपूर्णलक्षणाःशूरानितंद्राःकामकांतयः ॥ गुणानुरागिणोदक्षनीतिज्ञाःसत्यवादिनः ॥ ५ ॥ लोकपालोपमान्पार्थपुत्रान्पंचमहाबलान् ॥ इंद्रादधिकमात्मानंनृपःपांडुरमन्यत ॥ धर्ममा ॥ ६ ॥ अथागतेवसंतेचकामिनांकामवर्द्धने ॥ माद्रिंसिषेवेदयितांपंडुःकामकलार्दितः ॥ ऋषिणानिस्मरणेशापितो ॥ ७ ॥ कर्तव्यंच सक्तोमृतोनृपः ॥ विवेशपुत्रौसंवेश्यकुंतींमाद्रीहुताशनम् ॥ ८ ॥ ततःसहैवसातेनज्वलं

...नवमे॥ ९ ॥ देहेयावंतिरोमाणिमृतंकांतानुगामिनी ॥ स्वर्गंतावंतिवर्षाणिस्त्रीभर्त्रासहमोदते ॥ १० ॥ शृंगार
...त्यंचतथासंसारिकंसुखम् ॥ नातंत्रीवाद्यतेवीणानाचक्रोभ्रमतेरथः ॥ ११ ॥ नापतिःसुखितासास्यान्नारीपुत्रशतैरपि॥
...त्प्रधानायेतस्यपंडोःशापंतथात्ययम् ॥ १२ ॥ सुतास्तेकथयामासुर्धृतराष्ट्रस्यवैतदा ॥ ततोभागीरथीतीरे...णःसपुरो
...ताः ॥ १३ ॥ पारत्रिकांक्रियांपांडोर्यथोक्तंचक्रिरेऽखिलाम् ॥ १४ ॥ पदानिमातंगरथाश्वयुक्तंसमर्पयंतेचधनप्र... ॥ वासां
सिगोविप्रगणाधिशय्यागृहाणिचोपस्करसंयुतानि ॥ १५ ॥ कुंतीस्वतनयान्पश्चाद्गांधारीमर्पयेत्तदा ॥ हस्तिनापुरमागत्यभ
र्दुःखंनिवेदयेत् ॥ १६ ॥ गांधारीपालयामासस्वपुत्रानिवपांडवान् ॥ तेषांनामानिपुत्राणांधृतराष्ट्रस्तदाऽकरोत् ॥ १७ ॥ भू
...लःकारयामासवेदोक्तविधिनाततः ॥ तेषुचभ्रातृपुत्रेषुभ्रातृस्नेहेनपश्यति ॥ १८ ॥ काकपक्षधराःसर्वेनानाभूषणभूषिताः॥
तेहितंपितरंवृद्धंधृतराष्ट्रंसिषेविरे ॥ १९ ॥ अथोन्यबद्धसौहार्दाःसर्वेन्योन्यंहितैषिणः ॥ अभिन्नाधृतराष्ट्रस्यतेवैकौरवपां
डवाः ॥ २० ॥ एकत्रसुषुपुःसर्वेभुंजंतोलेभिरेसुखं ॥ कदाचित्कंदुकैःसर्वेकदाचिच्चवराटकैः ॥ २१ ॥ सारिभिस्तंतुना...श्चते
सर्वेरेमिरेमिथः ॥ धनुर्विद्यांतदासर्वेद्रोणात्कौरवपांडवाः ॥ २२ ॥ बभूवुःकुशलाःसर्वेविद्यांद्रोणात्द्विजोत्तमात् ॥ सर्वेषामधि
कंपार्थंकर्णंचैवतुतत्समम् ॥ २३ ॥ दुर्योधनोमंदबुद्धिर्धनुर्वेदेषुदृश्यते ॥ कर्णविद्याधिकंमत्वावारितस्तुगुरुस्तदा ॥ २४ ॥
...नेनदुष्टेनकर्णमापालयेदिति ॥ तदाकर्णेनवीरेणसाधितंपरशुरामतः ॥ २५ ॥ युधिष्ठिरस्यराज्येहिनदुर्भिक्षंनपातकम् ॥
...वतीधेनुर्बहुधान्यावसुंधरा ॥ सर्वत्रसुखिनोलोकाभक्ष्यभोज्ययुताभवन् ॥ २६ ॥ इतिश्रीमहाभारतेभारतसारेआदि
...र्वासवरप्रदानंनामसप्तमोऽध्यायः ॥७॥ अष्टमेकर्णसामर्थ्यंनागराजवितोषणम् ॥ सुयोधनस्यसंकष्टान्मोचनंसम्प्रा... ॥ १ ॥
...फललभेत ॥ ० ॥ ...

 ॥ वैशंपायनउवाच ॥ धृतराष्ट्रेणराज्ञावैज्येष्ठंदुर्योधनंसुतं ॥ हस्तिनापुरमध्येतुराज्यस्थानेनिवासितम् ॥ १ ॥ ...शतंबालेऽ 
...तेसर्वेविनयेनवशीकृताः ॥ कर्णःसूर्यसुतस्तेनअतिप्रीत्यावशीकृतः ॥ एकदातुनिशामध्येदुर्योधनप्रियांशुभाम् ॥ २ ॥
 ...तींमहाभागोवासुकीकामयन्ध्रुवम् ॥ पातालादभिनिस्सृत्यविजित्यधृतराष्ट्रजम् ॥ ३ ॥ प्रत्यहंकामयामासपुंडरीकोम 
...पः ॥ तदाकर्णेनतत्ज्ञातंदुर्योधनवदस्वमे ॥ ४ ॥ कथंतेम्लानवदनंकिंदुःखंतेभवन्नृप ॥ ५ ॥ दुर्योधनउवाच ॥ मम
...भार्यांनागराजोवासुकिर्भुज्यतेप्रभो ॥ तेनकर्णातिखिन्नोहंतद्दुःखंकस्यकथ्यते ॥ ६ ॥ कर्णउवाच ॥ पश्यैनंपातयेदुष्टंपाशबाणेन
बंधितम् ॥ एवमुक्त्वातुपाशेननागराजंबबंधह ॥ ७ ॥ तेनबाणेनसोनागोबध्नीतोदुःखसंकटे ॥ ८ ॥ नागराजउवाच ॥
भानुमत्याकृतंकर्मकौटिल्यंकाममोहितम् ॥ यंत्रेसंलिख्यनिक्षिप्तंपृथिव्यांगूढसिद्धिदम् ॥ ९ ॥ तस्यात्रबिंदुमेकांहंपतितं
...ममस्तके ॥ तत्कारणेनराजेंद्रह्यागच्छामिनिरंतरम् ॥ १० ॥ भानुमत्यास्तुशय्यायांतस्यादक्षिणपादकः ॥ तदधोविद्यते
...त्रंनिष्काशयनराधिप ॥ ११ ॥ पश्चात्तेनचकर्णेनपाशान्नागस्तुमोचितः ॥ यंत्रमुद्धरितंतत्रभूमितोमोहनंनृणाम् ॥ १२ ॥
...तस्तद्दिनमारभ्यपातालेनागराजकः ॥ सौख्यमापततःकर्णात्तदाराजासुयोधनः ॥ १३ ॥ तद्दिनेतेननागेनदत्तःकर्णव
...दा ॥ संग्रामेतेमहाराजभविष्यामिसहायकः ॥ १४ ॥ एवमुक्त्वागतोनागःकर्णेतुष्टःसुयोधनः ॥ अयुतेद्वेतथात्रिंशद्ग
...तस्यपुराणिच ॥ १५ ॥ लक्षार्द्धंतुतथाराजन्त्रिलक्षंवाहिनीवरं ॥ ददौराजातुकर्णायप्रीतोराजन्सुयोधनः ॥ १६ ॥ एक
...त्रेणस्वपितासुप्रसादितः ॥ कर्णेनोक्तोहिभोतातनजानेमातरंप्रभो ॥ १७ ॥ सूर्यउवाच ॥ अग्निधौतमिदंवस्त्रंयस्या 
सक्तोमृ... नोदह्यतेचयानारीसातेमाताप्रकीर्तिता ॥ १८ ॥ इतिश्रीमहाभारतेभारतसारेआदिपर्वणिअष्टमोऽध्यायः ॥ ८ ॥

(19)

...नवमेवैरंकुरुपांडवयोस्तथा ॥ गरदानेनभीमस्यगंगापातनमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ धृतराष्ट्रसुताःसर्वेपं
..पांडुनंदनाः ॥ षोडशाद्वातुसंजातामहाबलपराक्रमाः ॥ १ ॥ मलकीपिप्पलीविद्यारेमिरेवनगोचराः ॥ कौरवाश्चतदास
वैजिताभीमेनतद्वने ॥ २ ॥ एकस्मिन्दिवसेराजन्भीमोऽर्ज्जुनमभाषत ॥ अद्याहंरमितोभ्रातःकुरूणांमेशतंजितम् ॥ ३ ॥
निजाश्चकौरवाःसर्वेपादावापातिताध्रुवम् ॥ चक्रुःपरस्परंवैरंकौरवाःपांडुनंदनाः ॥ ४ ॥ बांधवावैरिणोजाताएकद्रव्याभिलाषि
णः ॥ परस्परंकृतोद्वेषोभीमसेनेमहाबले ॥ ५ ॥ लुठ्यंतिकौरवाःसर्वेभग्नपादशिरोकराः ॥ अपमान्याःकौरवास्तेभीमेनैकेनत
द्वने ॥ ६ ॥ दुर्योधनस्तदाकर्णःशकुनिःसौबलस्तथा ॥ एकदैकांतमाविश्यदुर्योधनमभाषत ॥ ७ ॥ किमेभिरन्यैःकार्यनोपां
डवैश्चमहाबलैः ॥ पश्यपांडुसुतावीरमहाबलपराक्रमाः ॥ ८ ॥ त्वतिपित्राधृतराष्ट्रेणकृताराज्यांशभागिनः ॥ येनकेनाप्युपायेनहं
तव्याःपांडुनंदनाः ॥ ९ ॥ ननुतेतवराज्यंहिगृहीष्यंतिनसंशयः ॥ एवमुक्तेतदाकर्णेराजादुर्योधनोनृपः ॥ १० ॥ भोज्यं
जकृतःकर्मविषमिश्राश्चमोदकाः ॥ शतंभुक्तंतुभीमेनमोदकानांसुतृप्तकः ॥ ११ ॥ भोजनांतेततस्तस्यशरीरंशिथिलंह्यभूत् ॥
भीमंपतितमालोक्यप्रक्षिप्तंजान्हवीतटे ॥ १२ ॥ रसातलंगतोभीमोदृष्टोनागगणैश्चसः ॥ भक्षितंचविषंनागैर्जीवितःपांडुनं
दनः ॥ १३ ॥ आतिथ्यंचतदाकृत्वातदानिष्कासितोजलात् ॥ ब्राह्ममुहूर्तेचोत्थायचाजगामाष्टमेदिने ॥ १४ ॥
आगतेभीमसेनेतुसंतुष्टाःसर्वपांडवाः ॥ राज्यंचक्रुर्महाभागाविष्णुभक्ताधृतव्रताः ॥ १५ ॥ इतिश्रीमहाभारतेभारतसारे
आदिपर्वणिनवमोध्यायः ॥ ९ ॥ दशमेपांडवावासइन्द्रप्रस्थेधिप्रायशः ॥ हिडिंबादर्शनंजन्मभीमसून्वोर्निगद्यते ॥ १ ॥
...पायनउवाच ॥ अतःपरंप्रवक्ष्यामिपांडवानांचकीर्त्तनम् ॥ यःशृणोतिनरोभक्त्याराजसूयफलंलभेत ॥ २ ॥ ...

भारत वाः सर्वेआसमुद्राक्षितीश्वराः ॥ युधिष्ठिरस्तदाराजापांडवानांदलेभवत् ॥ २ ॥ कौरमाणांदलेराजन्राजादुय।...
युधिष्ठिरस्यराज्येतुप्रजाःस्युःसुखिनस्तदा ॥ ३ ॥ चत्वारस्तेचापधारीभीमसेनोगदाधरः ॥ नकुलस्तुहयाध्यक्षोज्योतिवि अ० १०
सहदेवकः ॥ ४ ॥ सर्वत्रकुशलोराजन्धर्मपुत्रोयुधिष्ठिरः ॥ त्रिभागांपृथिवींदत्वाधर्मपुत्रायधीमते ॥ ५ ॥ स्वंस्वंराज्यंप्रकुर्वं
तिकौरवाश्चापिपांडवाः ॥ एकस्मिन्दिवसेराजन्नारदोमुनिसत्तमः ॥ ६ ॥ स्वर्गाद्युधिष्ठिरंप्राप्यइदमाहनराधिपम् ॥ दुर्यो
धनस्यविश्वासंमाकुरुष्वविशांपते ॥ ७ ॥ इतितस्यवचःश्रुत्वाधर्मराजोविचक्षणः ॥ राज्यंचकारधर्मात्माबंधुभिश्चगजाह्वये
॥ ८ ॥ पांडवानांस्वपुत्राणांदृष्ट्वाचकलिमद्भुतम् ॥ धृतराष्ट्रोभेदमतिर्वैरोचनमुवाचह ॥ ९ ॥ गच्छवैरोचनत्वंहिशक्रप्रस्थपुरं
प्रति ॥ पांडवानांनिवासार्थंमंदिरंकुरुचाद्भुतम् ॥ १० ॥ ॥ वैशंपायनउवाच ॥ इत्याज्ञाप्यततोमंत्रियावन्निःसरतेबहिः ॥
तावद्दुर्योधनेनैवदृष्टोवैरोचनस्तदा ॥ ११ ॥ क्वयासिमंत्रिणांवर्य्यमांत्वंकथयसुव्रत ॥ वैरोचनउवाच ॥ प्रेषितोधृतराष्ट्रेण
शक्रप्रस्थेसुशोभने ॥ १२ ॥ पांडवानांनिवासार्थंगृहाणिरचयाम्यहम् ॥ इतितस्यवचःश्रुत्वाराजादुर्योधनोऽब्रवीत् ॥ १३ ॥
॥ दुर्योधनउवाच ॥ वैरोचनमहाबुद्धेमंत्रशास्त्रविशारद ॥ यथानज्ञायतेकोपितथामंदिरमाचर ॥ १४ ॥ लाक्षामयंतुविस्तीर्णं
शक्रप्रस्थेमनोहरम् ॥ तत्रस्थान्पांडवान्सर्वान्ज्वालयामिनसंशयः ॥ १५ ॥ ओमित्युक्त्वागतोमंत्रीजगामविदुरालयम् ॥
एकांतेविदुरंप्राहदुर्योधनविचेष्टितम् ॥ १६ ॥ तच्छ्रुत्वाविदुरोमंत्रीहाहाःकारमथाकरोत् ॥ उवाचवचनंतत्रवैरोचनमतिप्रिय
...॥ १७ ॥ लाक्षागृहेमहच्छृंगेविवरंकर्तुमर्हसि ॥ येनमार्गेणयास्यंतिपांडवाधर्मतत्पराः ॥ १८ ॥ इत्येवंचकृतेकार्येब्रह्म ॥१०॥
सत्कान्नृपराः ॥ तुष्टाःस्युर्देवताःसर्वादेव्योलक्ष्मीपुरोगमाः ॥ १९ ॥ तस्मान्मदीयंवचनंकर्त्तव्यंविदुषात्वया ॥ इतितस्य

रिमहाराजते ब्लाधिकाः ॥ सचक्रेस्तंभितस्तंभोहेममत्स्यस्तथोपरि ॥ ५ ॥ अधोविलोक्यपानीयेन्न म

जलस्थल राजोपिदुःखितोवाक्यमब्रवीत् ॥ ६ ॥ द्रुपदउवाच ॥ किंकुर्मःकिंप्रतिब्रूमोदग्धानष्टाश्चपां ॥

ययौ ॥ १ मत्स्यभेदनम् ॥ ७ ॥ अर्जुनेनविनासर्वंनिर्वीरंधरणीतलम् ॥ इतिराज्ञोवचःश्रुत्वासदसश्चोत्थितो

युक्तःसभाम देवेननान्यैर्भूपैस्तदार्जुनः ॥ सर्वेषांपश्यतांराजन्धनुर्जग्राहसत्वरम् ॥ तत्रबाणंसमारोप्यक्षणान्म

द्वारकांगम्यम सौहर्षितोराजाद्रुपदोद्रौपदींददौ ॥ अर्जुनायवरारोहांकामिनींसर्वभूमिपैः ॥ १० ॥ एतत्कर्मसमा

सि ॥ २३ ॥ ॥ भर्त्सयंतोविकत्थंतोघर्षयंतश्चकार्पटान् ॥ ११ ॥ अहोकार्पटकैःकन्यानीयतेपश्यतांहिनः ॥

णिसुभद्राहरणं तांताडयतांदृढम् ॥ १२ ॥ इतितेषांवचःश्रुत्वास्तंभंजग्राहवायुजः ॥ तेनाहतस्तुतेभूपादुद्रुवुश्च

ते ॥ १ ॥ वैश ताःकेचित्केचिद्वाहेतिवादिनः ॥ प्रसिद्धाःपांडवाजातास्तदाप्रभृतिनिश्चितम् ॥ १४ ॥ द्रुप

॥ नारदउवाच । न् ॥ पूजिताःपांडवास्तत्रपूजितःकृष्णआदरात् ॥ १५ ॥ हस्त्यश्वपत्तिसंघातंरथदासं।भज।

किंजीवितेनमेदेवा सुवर्णबहुलंददौ ॥ १६ ॥ एवंविवाहंसंपाद्यपांडवाःस्वगृहंययुः ॥ तावत्सर्वगतस्तूर्णंसहदेवो

॥ नारदउवाच ॥ तिमाहर्षेणाविष्टमानसः ॥ मातरस्माभिःसह्वस्तुकिंचित्प्राप्तंसुलक्षणम् ॥ १८ ॥ इतितस्य

च ॥ कोविधिश्चात्र ९ ॥ कुंत्युवाच ॥ विभज्यभुज्यतांपुत्राःकुरुध्वंवचनंमम ॥ एतस्मिन्समयेसर्वेपांडवागृह

सहस्राणिह्यानेतव्या पर्ययंपरमंगताः ॥ एवंविवाहंसंपाद्यद्रुपदेनसुपूजिताः ॥ २१ ॥ गृहीत्वासकलंसैन्यं

द्वादशंयावत्तावन्मंडपविस्तरम् ॥ ७ नम् ॥ २२ ॥ यादवाःकृष्णसहितागतास्तेद्वारकांप्रति ॥ ग

 वाःसर्वेआसमुद्राक्षितीश्वराः ॥ युधिष्ठि[illegible]भारतेभारतसारेआदिपर्वणिद्रौपदीविवाहोनामएकादशोऽध्या 

युधिष्ठिरस्यराज्येतुप्रजाःस्यः[illegible]वमोचनम् ॥ अर्जुनेनसभालब्धाधनुस्तदिहवर्ण्यते ॥ १ ॥ वैशंपायनउवाच 

॥ ८ ॥ सहदेवकः ॥ ४ ॥ सर्व[illegible]लोचनः ॥ पांडवानांहितार्थायशक्रप्रस्थंजगामह ॥ १ ॥ कृष्णमागतमालोक्यपांडवाहर्ष

तिकौरवाश्चापिपांडवाः धर्मेणचार्जुनेनच ॥ २ ॥ तथैवभीमसेनेनयमाभ्यांचाभिवादितः ॥ वासुदेवोपिधर्मंहिवव

धनस्यविश्वासंमाकरुष कतिचिन्मासान्पांडवानांहितेच्छया ॥ एकदासमयेकृष्णोजगश्चपरवीरहा ॥ ४ ॥ सभा

॥ ८ ॥ पांडवानांस्व ॥ अजीर्णाविष्टदेहश्चकृशानुर्विप्ररूपधृक् ॥ ५ ॥ तावागत्याशिषंपूज्यदीनश्चपुरतःस्थितः ॥

प्रति ॥ पांडवानांनि[illegible]ोब्रवीत् ॥ ६ ॥ स्वामिन्मरुत्तराजेनकृतोयज्ञःसुविस्तरः ॥ पूर्णाहुतिःकृतातेनवर्षमात्रंघृत

तावद्दुर्योधनेनैवदृष्टो काराद्यविच्छिन्नादिवानिशं ॥ तयाचाजीर्णदेहोहंतस्मात्त्वंत्रातुमर्हसि ॥ ८ ॥ इत्युक्तेवचनेव

शक्रप्रस्थेसुशोभने जीर्णतेकथंयातिकथंसौख्यमवाप्स्यसि ॥ ९ ॥ वन्हिरुवाच ॥ शक्रस्यवचनंविष्णोयद्यहंखां

॥ दुर्योधनउवाच क्ष्येममाजीर्णप्रयास्यति ॥ १० ॥ इतितस्यवचःश्रुत्वाकृष्णश्चार्जुनमब्रवीत् ॥ पार्थगच्छवयं

शक्रप्रस्थेमनोहर ॥ ११ ॥ वन्हिंचभोजयामाससोजीर्णोवनदाहतः ॥ सर्वोपकारःकर्त्तव्यःसर्वैश्चधर्मतत्परैः ॥१२ ॥

एकांतेविदुरंप्राह कृष्णेनसंयुतः ॥ जगामखांडवप्रस्थंरक्षितंचेंद्रसेवकैः ॥ १३ ॥ तत्रगत्वातुतेतूर्णंज्वालयामासखांड

॥ १७ ॥ ल[illegible] ात्तत्रस्थाश्चेंद्रसेवकाः ॥ १४ ॥ शक्रंगत्वाब्रुवन्वाक्यंस्वामिन्तेज्वलितंवनं ॥ वन्हिनाप्रेरितेनापि ॥१२॥ १०॥ ६ ॥

सत्कानृपेश्वराः ॥ ॥ इतितेषांवचःश्रुत्वामेघवृष्टिंमुमोचह ॥ तदार्जुनेनवीरेणबाणौघैर्मंदिरंकृतम् ॥१६॥ वनोप

रिमहाराजतेनपातोहुताशनः ॥ रक्षितोमयदैत्यश्चवन्हेश्चदहतोवनम् ॥ १७ ॥तेनदत्तासभातत्रपार्थायप्रणयेनच ॥ तस्यां
जलस्थलभ्रांतिःपश्यतांजायतेध्रुवम् ॥ १८ ॥ स्वप्रयत्नंवृथादृष्ट्वाइंद्रःपादौपपातह ॥ कृष्णस्यचार्जुनस्यापिस्तुतिंकृत्वादिवं
ययौ ॥ १९ ॥ गांडीवंचाक्षयौतूणौपार्थायचसमर्पितौ ॥ तदनुज्ञापितोवन्हिःसंतुष्टोदिवमाययौ ॥ २० ॥ पार्थोपिकृष्णसं
युक्तःसभामादायसत्वरम् ॥ आजगामेंद्रप्रस्थंवैसभास्थानेन्यवेशयत ॥ २१ ॥ कृष्णोपिधर्ममावेद्यद्वारकायांययौमुदा ॥
द्वारकांगम्यमानस्तुकृष्णोर्जुनमुवाचह ॥ २२ ॥ अर्जुनत्वंसमागच्छसुभद्राहरणायवै ॥ यतिर्भूत्वारथस्थांतांसुभद्रांनेतुमर्ह
सि ॥ २३ ॥ वैशंपायनउवाच ॥ इतिकृष्णमतिंज्ञात्वाह्यर्जुनेनतथाकृतम् ॥ २४ ॥ इतिश्रीमहाभारतेभारतसारेसभापर्व
णिसुभद्राहरणंनामद्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशेचपांडूनांराजसूयमहोदयः ॥ योगिन्याःसहदेवस्यसंग्रामोऽभूत्सकथ्य
ते ॥ १ ॥ वैशंपायनउवाच ॥ एकदानारदोलोकान्पर्यटन्मुनिसत्तमः ॥ युधिष्ठिरंसमागत्यवचनंचेदमब्रवीत् ॥ १ ॥
॥ नारदउवाच ॥ तवतातोमहाराजन्कुकर्मसंभवाच्चहि ॥ ब्राह्मणीपतिहत्यातस्तेनपापेनपातितः ॥ २ ॥ युधिष्ठिरउवाच ॥
किंजीवितेनमेदेवपितामेनिरयंगतः ॥ येनकेनाप्युपायेननरकान्मुच्यतेपिता ॥ ३ ॥ तच्छीघ्रंकथ्यतांविप्रकरोम्येतन्नसंशयः ॥
॥ नारदउवाच ॥ शृणुष्वभोमहाराजन्राजसूयोमहाऽध्वरः ॥ तेनपुण्येननरकान्निःसरिष्यतितेपिता ॥ ४ ॥ युधिष्ठिरउवा
च ॥ कोविधिश्चात्रकर्तव्योराजसूयेमहामुने ॥ कोसौदेवःसमभ्यर्च्यःकथयस्वमुनीश्वर ॥ ५ ॥ नारदउवाच ॥ अष्टाशीति
सहस्राणिह्यानेतव्याद्विजोत्तमाः ॥ मंडपंकारयित्वातुतत्रराजसमागमः ॥ ६ ॥ सुंदरंमंडपंराजन्विद्यतेचरसातले ॥ योजनं
द्वादशंयावत्तावन्मंडपविस्तरम् ॥ ७ ॥ लंकायांविद्यतेद्रव्यंकृष्णोद्वारवतींस्थितः ॥ कारागृहेनृपाराजन्जरासंधस्यमंदिरे

॥ ८ ॥ आयातेयदितेसर्वेकामधेनुस्ततःपरं ॥ नारदस्यवचःश्रुत्वापांडवैश्चविचारितं ॥ ९ ॥ किंचैवात्रप्रकर्त्तव्यंकार्यंगुरुतरं
महत ॥ १० ॥ अर्जुनउवाच ॥ लंकापुरींगमिष्यामिचानयिष्यामिकांचनम् ॥ नकुलोपिवदत्येतदानयिष्यामिमंडपम् ॥
॥ ११ ॥ सहदेवोब्रुवत्येवंकृष्णस्यार्थेव्रजाम्यहम् ॥ उवाचभीमोराजेंद्रबंधनेयेनृपाःस्थिताः ॥ १२ ॥ घातयित्वाजरासंधं
बंधितांश्चविमोचये ॥ १३ ॥ युधिष्ठिरउवाच ॥ ममसत्येनधर्मेणकामधेनुंस्मराम्यहम् ॥ पूर्वंकृष्णंसमानीयपश्चात्कर्मसमा
रभेत् ॥ १४ ॥ ततोभव्यमुहूर्तेचसहदेवोगणेश्वरः ॥ प्रतस्थेद्वारकायांचचतुर्दश्यांचपश्चिमे ॥ १५ ॥ षष्ठीचतुर्दशीतिथ्यो
रुद्राणीपश्चिमेस्थिता ॥ ततःसंमुखमागत्ययोगिनीह्यतिदारुणा ॥ १६ ॥ कृष्णवक्त्रालोहिताक्षीत्रिशूलवरधारिणी ॥ तंदृष्ट्वा
योगिनीप्राहकुतोयासिवदस्वमे ॥ १७ ॥ सहदेवउवाच ॥ राजसूयस्ययज्ञस्यकार्यंचविद्यतेऽनघे ॥ तद्द्वारकायांश्रीकृष्णमा
नेतुंगम्यतेमया ॥ १८ ॥ योगिन्युवाच ॥ मायाह्यस्यामाशायांचाग्रेस्थितवतीह्यहम् ॥ यदियासिमहावीरमयात्वंसमरंकु
रु ॥ १९ ॥ सहदेवउवाच ॥ पुरुषोहंत्वमबलाकथंयुद्धंभवेद्वद ॥ योगिन्युवाच ॥ यथाभवान्याशुंभस्यपुरायुद्धमभून्नृप ॥
॥ २० ॥ आवयोश्चतथायुद्धंभविष्यतिनसंशयः ॥ इत्युक्त्वायुयुधातेवैतावुभौचपरस्परम् ॥ २१ ॥ वीरेणाप्यर्धचंद्रेणततक्ष
णाच्छिदितंपरम् ॥ योगिनीवस्त्रहीनाचसहदेवःपराङ्मुखः ॥ २२ ॥ योगिन्युवाच ॥ अहोवीरसमर्थोसियुद्धंकर्तुंमयासह ॥
॥ सहदेवउवाच ॥ नग्नांस्त्रियंयेपश्यंतितेवैनिरयगामिनः ॥ २३ ॥ भीतोऽहंतेनपापेनयतःसंग्राममत्यजम् ॥ परिधायनवंव
स्त्रंपुनःसंग्राममारभत् ॥ २४ ॥ रक्तबिंदुर्यदाभूमौपतत्यस्याःशरीरतः ॥ तावद्रूपास्तदादेव्योबभूवुस्तत्पराक्रमाः ॥ २५ ॥
देवीप्राहमहावीरपश्यमेयुद्धसंचयम् ॥ वस्त्रहीनंविनाकिंचिद्दृश्यतेधरणीतले ॥ २६ ॥ परनारीसहोदर्यसत्यशूरदृढव्रतः ॥



24

प्रसन्नाहिवरंब्रूहियत्तेमनसिरोचते ॥ २७ ॥ सहदेवउवाच ॥ यदित्वंदेवितुष्टासिदीयतांवरमुत्तमम् ॥ बहुरूपधारणेशक्तिः
प्रदेयामेधरातले ॥ २८ ॥ सहदेवेवदत्येवमेतदस्तीतिवादिनी ॥ स्वस्थानंचगतादेवीपंचमोद्धारकांययौ ॥ २९ ॥ सहदेव
उवाच ॥ विजयाख्यप्रतीहारगच्छकृष्णेनिवेदय ॥ समागतंसहदेवंहस्तिनापुरतोध्रुवम् ॥ ३० ॥ प्रतीहारस्ततोगत्वासर्वं
कृष्णंन्यवेदयत् ॥ कृष्णेनोक्तंप्रतीहारपृच्छत्वंकथमागतः ॥ ३१ ॥ प्रतीहारउवाच ॥ ग्रीरकिंकार्यमुत्पन्नंयेनात्रत्वंसमागतः
॥ सहदेवेनवैतेषामुक्तंयुद्धार्थमागतः ॥ ३२ ॥ सहदेवस्यसंग्राममंसंयानोयादवैःसह ॥ षट्कोटिपंचसहस्रशःसहदेवःपृथक्पृथक्
॥ ३३ ॥ संग्रामस्तुमुलोजातस्तेषांतस्यचसांप्रतं ॥ यादवास्ते [illegible]भग्नाःकेचिन्नष्टाःपलायिताः ॥ ३४ ॥ ततःकृष्णोसमाया
तःप्राहेदंवचनंशुभम् ॥ तुष्टोहंनरशार्दूलतवयुद्धपराक्रमैः ॥ ३५ ॥ सहदेवउवाच ॥ अहंतुष्टोद्विवारंतेब्रूहिब्रूहिहिनःप्रभो ॥
कृष्णस्तुवचनंश्रुत्वासहदेवमुवाचह ॥ ३६ ॥ श्रीकृष्णउवाच ॥ संग्रामोहिनकर्त्तव्योयादवैश्चसमंत्वया ॥ अपृष्टंज्योतिषं
शास्त्रंकथनीयंत्वयानहि ॥ ३७ ॥ सहदेवउवाच ॥ यदितुष्टोसिमेदेववरमेकंप्रदीयताम् ॥ युधिष्ठिरादयःपंचभ्रातरोममसंतिये
॥ ३८ ॥ तेषांमध्येमृतेचैकेकर्तव्यंमरणंत्वया ॥ ममदुःखेसमुत्पन्नेभवत्वंचसहायवान् ॥ ३९ ॥ एवमस्तीतिसंभाष्यसहदेवंप्रसा
द्यच ॥ सहदेवस्तथाकृष्णआगतोहस्तिनापुरम् ॥ ४० ॥ पांडवाहर्षिताःसर्वेमिलितास्तेपरस्परम् ॥ ऊचुःश्रीपतिमालोक्यय
ज्ञकार्यंनिवेदय ॥ ४१ ॥ तद्वैकर्मकरिष्यामस्त्वत्प्रसादाच्चमाधव ॥ ४२ ॥ इतिश्रीमहाभारतेभारतसारेसभापर्वणिकृष्णहस्तिना
पुरप्रवेशोनामत्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशेमरुत्सूनोःसमरोविजयस्यच ॥ धनप्राप्तिर्जरासंधोहतस्तदिहकथ्यते ॥ १ ॥
॥ जनमेजयउवाच ॥ कृष्णेनकिंकृतं[illegible]र्मधर्मपुत्रेणकिंकृतम् ॥ नकुलार्जुनयोःकथंकर्मराजसूयेमहाध्वरे ॥ १ ॥ वैशंपायनउ

वाच ॥ कृष्णार्जुनौगतौलंकांयाज्ञीयेधनसाधने ॥ समुद्रस्यसुतीरेचगतोदेवोऽर्जुनेनच ॥ २ ॥ बध्वासेतुस्तदाताभ्यांहनूमा
न्निर्जितस्तटे ॥ हनूमतामहत्कर्मउड्डीयपातनंकृतम् ॥ ३ ॥ तथापिरससेतुश्चनभग्नःकपिपातने ॥ तौयोहरिकूर्मेणकपिवात
स्तदाधृतः ॥ ४ ॥ एवंछलेनताभ्यांसकपिराजस्तुनिर्जितः ॥ तदाहरिसमीपेतुकपिराजोमहाबलः ॥ ५ ॥ अर्जुनस्यध्वजा
ग्रेतुसंयुगेसंस्थितःसदा ॥ ततोहनूमतातौवैनीतौलंकापुरींप्रति ॥ ६ ॥ तत्रत्यंधनमादायचागतौहस्तिनापुरम् ॥ धर्मपुत्रस्तदा
तुष्टःकृष्णंवचनमब्रवीत् ॥ ७ ॥ आदेशंदीयतांस्वामिन्यज्ञेऽस्मिन्राजसूयके ॥ श्रीकृष्णउवाच ॥ विजित्यनृपतीन्सर्वान्कृ
त्वाचजगतींवशे ॥ संहृत्यसर्वसंभारानाहरस्वमहाक्रतुं ॥ ८ ॥ हरेर्वचनमाकर्ण्यसुप्रीतोधर्मनंदनः ॥ भ्रातॄनदिग्विजयेयुक्तवि
ष्णुतेजोपवृंहितान् ॥ ९ ॥ सहदेवंदक्षिणस्यामादिश्यसहसृंजयैः ॥ दिशिप्रतीच्यांनकुलमुदीच्यांसव्यसाचिनम् ॥ १० ॥
प्राच्यांवृकोदरोमत्स्यैःकेकयैःसहमद्रकैः ॥ प्रेषयामासभगवान्स्नेहदृष्ट्याऽभिवंद्यच ॥ ११ ॥ तेविजित्यनृपान्वीरान्धनमा
दायसत्वरम् ॥ अजातशत्रवेभूरिद्रविणंनृपयक्षते ॥ १२ ॥ श्रुत्वाऽजितंजरासंधंनृपतेर्ध्यायतेहरिः ॥ अहोपायंतमेवाद्यउद्ध
वोयमुवाचह ॥ १३ ॥ भीमसेनोर्जुनःकृष्णोब्रह्मलिंगधरास्ततः ॥ जग्मुर्गिरिव्रजंतातबृहद्रथसुतोयतः ॥ १४ ॥ तंगत्वाति
थ्यवेलायांगृहेषुगृहमेधिनम् ॥ ब्रह्मण्यंसमयाचेतराजन्याब्रह्मलिंगिनः ॥ १५ ॥ राजन्विध्यतिथीनस्मानर्थिनोगृहमागता
न् ॥ तन्नःप्रयच्छभद्रंतेयद्वयंकामयामहे ॥ १६ ॥ हरिश्चंद्रोरंतिदेवोउंच्छवृत्तिःशिबिर्बलिः ॥ व्याधःकपोतोबहवोह्यध्रुवेण
ध्रुवंगताः ॥ १७ ॥ स्वरैराकृतिभिस्तांतुप्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबंधून्विज्ञायदृष्टपूर्वानचिंतयत् ॥ १८ ॥ राजन्यबंध
वोप्येतेब्रह्मलिंगानिबिभ्रति ॥ ददामिवांछितंतेभ्यःआत्मानमपिदुस्त्यजम् ॥ १९ ॥ इत्युदारमतिःप्राहकृष्णार्जुनवृकोद

रान् ॥ हेविप्राव्रियतांकामोददाम्यात्मशिरोपिवा ॥ २० ॥ श्रीभगवानुवाच ॥ युद्धंनोदेहिराजेंद्रद्वंद्वंनोयदिमन्यसे ॥ युद्धा
र्थिनोवयंप्राप्ताराजन्यान्नान्नकांक्षिणः ॥ २१ ॥ असौवृकोदरःपार्थस्तस्यभ्रातार्जुनोह्ययम् ॥ अनयोर्मातुलेयंमांकृष्णंजानी
हितेरिपुम् ॥ २२ ॥ एवमावेदितोराजाजहासोच्चैःस्ममागधः ॥ मागधउवाच ॥ अर्जुनोमेसमोनास्तिममाग्रेत्वंपलायितः ॥
भीमेनसहसंग्रामंकरिष्यामिनसंशयः ॥ २३ ॥ इत्युक्त्वाभीमसेनायप्रादायमहतींगदाम् ॥ द्वितीयांस्वयमादायनिर्जगामपु
राद्बहिः ॥ २४ ॥ ततःसमेखलेवीरौसंयुक्तावितरेतरौ ॥ जघ्नतुर्वज्रकल्पाभ्यांगदाभ्यांरणदुर्मदौ ॥ २५ ॥ मंडलानिविचित्रा
णिसव्यदक्षिणमेवच ॥ चरतःशुशुभेयुद्धंनटयोरिवरंगणोः ॥ २६ ॥ ततश्चटचटाशब्दोवज्रनिष्पेशसन्निभः ॥ गदयोःक्षि
प्तयोराजन्दंतयोरिवदंतिनोः ॥ २७ ॥ एवंतयोर्महाराजयुद्ध्यतोःसप्तविंशतिः ॥ दिनानिनिर्जगाद्राजन्सुहृद्वन्निशितिष्ठतोः
॥ २८ ॥ एकदामातुलेयंवैप्राहराज्ञोवृकोदरः ॥ नशक्तोहंजरासंधंनिर्जेतुंयुधिमाधव ॥ २९ ॥ पार्थमाश्वासयामासतेजसा
चिंतयन्हरिः ॥ संचिंत्यारिवधोपायंभीमस्यामोघदर्शनम् ॥ ३० ॥ दर्शयामासविटपंपाटयन्निवसंज्ञया ॥ सविज्ञायमहा
सत्वोभीमःप्रहरतांवरः ॥ ३१ ॥ गृहीत्वापादयोःशत्रुंपातयामासभूतले ॥ एकंपादंपदाक्रम्यदोर्भ्यामन्यंप्रगृह्यसः ॥ ३२ ॥
गुदतःपाटयामासशाखाइवमहागजः ॥ एकपादोरुवृषणकटिपृष्ठस्तनांशके ॥ ३३ ॥ एकबाह्वक्षिभ्रूकर्णेशकलेदहशुःप्रजाः ॥
एवंवारत्रयंकुर्यातपुनरागत्यसंध्यते ॥ ३४ ॥ तदाकृष्णकृतोपायोमध्येरुद्रंप्रकल्पितम् ॥ जरासंधोमहाराजातदामृत्युवशं
गतः ॥ ३५ ॥ हाहाकारोमहानासीन्निहतेमगधेश्वरे ॥ पूजयामासतुर्भीमंपरिरभ्यजयाच्युतौ ॥ ३६ ॥ मोचयामासराज
न्यान्संरुद्धान्मागधेनये ॥ अयुतेद्वेशतान्यष्टौलीलयायुधिनिर्जिताः ॥ ३७ ॥ तेनिर्गतागिरिद्रोण्यामलिनोमलवाससः ॥

गृहेषुतेगताःसर्वेराजसूयेनिमंत्रिताः ॥ ३८ ॥ ततोहत्वाजरासंधंभीमपार्थजनार्द्दनाः ॥ युधिष्ठिरस्ययज्ञार्थमिंद्रप्रस्थंसमा
ययुः ॥ ३९ ॥ इतिश्रीमहाभारतेभारतसारेसभापर्वणिचतुर्दशोऽध्यायः ॥ १४ ॥ पञ्चदशेचमाद्रेणप्राप्तमंडपमुत्तमम् ॥
शिशुपालस्यपञ्चत्वराजसूयेनिगद्यते ॥ १ ॥ वैशंपायनउवाच ॥ ततःकृष्णोऽथनकुलोनागलोकंगतौतदा ॥ दृष्ट्वानागान
नेकांश्चकृतःकोलाहलोमहान् ॥ १ ॥ नागैर्हालाहलंमुक्तंतेनव्याप्तंचराचरम् ॥ कृष्णादेशाच्चमाद्रेणमध्वास्त्रंतत्रमोचि
तम् ॥ २ ॥ पश्चात्पिपीलिकास्त्रेणतेननागाभयंगताः ॥ तैर्नागैर्दर्शितोदेवःप्रणम्यमंडपंददौ ॥ ३ ॥ समरामंडपंनी
त्वासुवर्णपंकजानिच ॥ त्वहृष्टौचकृष्णनकुलौचागतौहस्तिनापुरे ॥ ४ ॥ प्रत्त्हृष्टोधर्मपुत्रश्चदृष्ट्वामंडपमुत्तमम् ॥ सुरभिंप्रार्थया
मासततोराजायुधिष्ठिरः ॥ ५ ॥ कामधेनुःसमायाताधर्मपुत्रस्यसत्यतः ॥ यंयंकामयतेकामंतंतंदुग्धवतीचसा ॥ ६ ॥ म
होत्सवंमहायज्ञंसशांतिंचसमंगलम् ॥ प्रारब्धयज्ञकर्मांगमिंद्रप्रस्थेयुधिष्ठिरः ॥ ७ ॥ अष्टाशीतिसहस्राणिऋषयस्तत्रसंस्थि
ताः ॥ ततस्तान्याज्ञियेकालेववेयुक्तान्सऋत्विजान् ॥ ८ ॥ कृष्णानुमोदितःपार्थोब्राह्मणान्ब्रह्मवादिनः ॥ द्वैपायनोभरद्वा
जःसुमंतुर्गौतमोसितः ॥ ९ ॥ वसिष्ठश्चवनःकण्वोमैत्रेयःकश्यपोऽच्युतः ॥ १० ॥ विश्वामित्रोवासुदेवःसुमतिर्जैमिनिःक्रतुः ॥
पैलःपराशरोगर्गोवैशंपायनएवच ॥ ११ ॥ अथर्वःखल्वोधौम्यश्चरामोभार्गवआसुरिः ॥ वीतिहोत्रोमधुच्छंदोवीररामःकृ
तव्रणः ॥ १२ ॥ उपहूतास्तथाचान्येद्रोणभीष्मकृपादयः ॥ धृतराष्ट्रःसहसुतोविदुरश्चमहामुनिः ॥ १३ ॥ ब्राह्मणाःक्षत्रि
यावैश्याःशूद्रायज्ञादिदृक्षवः ॥ तत्राययुःसर्वराज्ञोराजपत्न्यःप्रजानृप ॥ १४ ॥ ततस्तेदेवयजनंब्राह्मणाःस्वर्णलांगलैः ॥ भू
मिशुद्धंविनिष्पाद्यचक्रिरेदीक्षितंनृपम् ॥ १५ ॥ रुद्रादयोलोकपालाश्चागताविष्णुसंयुताः ॥ सगणाःसिद्धगंधर्वाविद्याधरमहो

रगाः ॥ १६ ॥ मुनयोयक्षरक्षांसिखगाःकिन्नरचारणाः ॥ राजसूयंसमीयुस्मराज्ञःपांडुसुतस्यवै ॥ १७ ॥ सोन्यहम्यवनीपा
लोयाजकान्सदसस्पतीन् ॥ धर्मपुत्रोमहाभागोयथायोग्यमपूजयत् ॥ १८ ॥ क्षत्रियेषुचकःपूज्यःसहदेवस्तदाऽब्रवीत् ॥ सहदे
वउवाच ॥ पूजनेह्यच्युतःश्रेष्ठोभगवान्सात्वतांपतिः ॥ १९ ॥ एषवैदेवताःसर्वादर्शन्योदेवसर्वगः ॥ इतिश्रुत्वातदाराज्ञापूजि
तोमंडपेहरिः ॥ २० ॥ इत्थंसभाजितंवीक्ष्यसर्वेप्रांजलयोनृपाः ॥ नमोजयेतिनेमुस्तंनिपेतुःपुष्पवृष्टयः ॥ २१ ॥ शिशुपालो
निशम्येत्थंपूर्वैचैवानुबंधनः ॥ कृष्णापराधीचैद्यस्तुजगादासन्नमृत्युकः ॥ २२ ॥ शिशुपालउवाच ॥ वर्णाश्रमकुलापेतःसर्व
धर्मबहिष्कृतः ॥ चौरवृत्तिर्गुणैर्हीनःसपर्यांकथमर्हति ॥ २३ ॥ अयंपापीदुराचारीअनेनमातुलोहतः ॥ गोपालःकामिकोमूढःसप
र्यांकथमर्हति ॥ २४ ॥ एवमादिश्यतंश्रुत्वातस्मिन्यज्ञस्यमंडपे ॥ कोपाविष्टेनकृष्णेनमुक्तंचक्रंसुदर्शनम् ॥ २५ ॥ तेनचै
द्यशिरश्छिन्नंनिपपातधरातले ॥ तस्यदेहोत्थितंतेजोवासुदेवमुपाविशत् ॥ २६ ॥ तस्मिन्नृपापेहतेचैद्येसाधुसाध्वितिवादि
नः ॥ सदसस्थाश्चयेलोकाःस्तुतिंकृष्णस्यचक्रिरे ॥ २७ ॥ इतिश्रीमहाभारतेभारतसारेसभापर्वणिचैद्यवधोनामपंचदशोध्या
यः ॥ १५ ॥ षोडशेयज्ञपूर्णार्थमाप्तिर्वायुसुतेनच ॥ विप्रमुख्यस्यमुक्तिश्चपंडुराजस्यवर्ण्यते ॥१॥ वैशंपायनउवाच ॥ ततःप्रवर्त्तते
यज्ञेशिशुपालवधेकृते ॥ अष्टाशीतिसहस्त्राणिऋषयस्तत्रसंस्थिताः ॥१॥ दृष्ट्वासमृद्धिंयज्ञस्यप्रोचुःसर्वेयुधिष्ठिरम् ॥ ऋषयऊचुः ॥
शृणुभूपालवृत्तांतंसर्वेभूपाःसमागताः ॥ यादृशोबलिनोयज्ञःकृतंपूर्वंयुधिष्ठिर ॥ २ ॥ तादृशश्चत्वयायज्ञःकृतोह्यस्मिन्महीतले ॥
एकंन्यूनतमंराजन्अस्मिन्यज्ञेनसंशयः ॥ ३ ॥ युधिष्ठिरउवाच ॥ किंन्यूनंकथयकृष्णतत्करोमिनसंशयः ॥ उवाचकृष्णोराजा
नंवनमध्यैकतापसः ॥४ ॥ सयज्ञेयदिनोयातितदायज्ञफलंवृथा ॥ निमंत्रणेगतोभीमोयत्रतिष्ठतितापसः ॥ ५ ॥ तमाहभीमसे

30

नस्तुस्वामिन्यज्ञोपधार्य्यताम् ॥ तापसउवाच ॥ कोसौयुधिष्ठिरोराजाराजसूयंकरोतियः ॥ ६ ॥ कथंसंपूर्णतांजातोहेमपात्रशतं
विना ॥७॥ युधिष्ठिरस्यकस्तातस्तस्यतातस्तुकःस्मृतः ॥ तस्यापिचैवकस्तातस्तत्सर्वंकथयस्वमे ॥ ८ ॥ भीमउ०॥ युधिष्ठिरोध
र्मसूनुस्तथासत्यंपितामहः ॥ प्रपितामहसंतोषस्त्वंजानीहिमहामुने ॥ ९ ॥ तापसउवाच ॥ संतोषामृततृप्तोहंनागमिष्या
मियज्ञके ॥ बहुविज्ञाप्यसोविप्रोह्यानीतोयज्ञमंडपे ॥ १० ॥ संपूजितस्तदाराज्ञा शिरसःकंपनंकृतम् ॥ युधिष्ठिरउवाच ॥
कथंत्वंरोदयसेब्रह्मन्कथंकंपायितंशिरः ॥ ११ ॥ तापसउवाच ॥ आगमिष्यतिभूलोकेयुगोवैकलिसंज्ञकः ॥ गोद्विजायत्रपी
ड्यंतेक्षितीशायवनासुराः ॥ १२ ॥ पूज्यंतेदेववद्विप्रास्तेविप्रादुःखभागिनः ॥ वैशंपायनउवाच ॥ कृष्णतापसराजानोयज्ञ
कर्मकृतंमहत् ॥ १३ ॥ वेदोक्तविधिनाराजन्दानमन्नंसमर्पयेत् ॥ ततोधर्मसुतोराजादुर्योधनमभाषत ॥ १४ ॥ दुर्योधनम
हाराजकोशोयंदीयतांद्विजान् ॥ ततोदुर्योधनेनैवभांडागारोदशाधिकः ॥ १५ ॥ दत्तोमहोत्सवस्यांतेनिरयान्निःसृतःपिता ॥
पांडुर्वैदिव्यदेहस्थोविभातिवृत्रहायथा ॥ १६ ॥ इतिश्रीमहाभारतेभारतसारेसभापर्वणिषोडशोऽध्यायः ॥ १६॥ सप्तदशे
महाकीर्त्तिर्युधिष्ठिरनृपस्यच ॥ सुयोधनापमानंचसभायामिहवर्ण्यते ॥ १ ॥ जनमेजयउवाच ॥ राजसूयेमहायज्ञेधर्मरा
जस्यबांधवाः ॥ कस्मिन्कर्मणियुक्तास्तेश्रीकृष्णेनाथकौरवाः ॥ १ ॥ वैशंपायनउवाच ॥ अजातशत्रोस्तंदृष्ट्वाराजसूयेम
होदयम् ॥ सर्वेमुमुदिरेराजन्नृदेवायेसमागताः ॥ २ ॥ दुर्योधनमृतेपापंकलिंकुरुकुलामयम् ॥ योनसेहेश्रियंस्फीतांदृ
ष्ट्वापांडुसुतस्यच ॥ ३ ॥ राजोवाच ॥ दुर्योधनःप्रकुपितःकथंयज्ञेतथाविधे ॥ ब्रह्मन्सूचयमेसर्वंदुर्योधनस्यकारणम् ॥ ४ ॥
पितुःपितामहेयज्ञेराजसूयेतथाविधे ॥ बांधवाःपरिचर्यायांतस्यासन्प्रेमबंधनाः ॥ ५ ॥ वैशंपायनउवाच ॥ भीमोमहानसा

ध्यक्षोधनाध्यक्षःसुयोधनः ॥ सहदेवस्तुपूजायांनकुलोद्रव्यसाधने ॥ ६ ॥ सतांशुश्रूषणेजिष्णुःकृष्णःपादावनेजने ॥ परिवेषेद्रुपदजाकर्णोदानेमहामनाः ॥ ७ ॥ युयुधानोविकर्णश्चहार्दिक्योविदुरादयः ॥ बाल्हीकपुत्राभूर्याद्यायेचसंतर्दनादयः ॥ ८ ॥ निरूपितामहायज्ञेनानाकर्मसुतेतदा ॥ प्रवर्ततेस्मराजेंद्रराज्ञःप्रियचिकीर्षवः ॥ ९ ॥ ततोयुधिष्ठिरोराजाब्राह्मणैः क्षत्रियैर्वृतः ॥ अवभृथंचकाराथगंगायांमंगलान्वितः ॥ १० ॥ स्वलंकृतानरानार्योगंधस्रग्भूषणांबरैः ॥ विलिंपंत्योभिषिंचंत्योविजेन्हुर्विविधैरसैः ॥ ११ ॥ तैलगोरसगंधोदहरिद्रासांद्रकुंकुमैः ॥ पुंभिर्लिप्ताप्रलिंपंत्योविजन्हुर्वरयोषितः ॥ १२ ॥ ससम्राट्रथमारूढःसदश्वंरुक्ममालिनम् ॥ व्यरोचतस्वपत्नीभिःक्रियाभिःक्रतुराडिव ॥ १३ ॥ राजानोराजपत्न्यश्चऋत्विजश्चस्त्रियान्विताः ॥ राजानःस्नापयांचक्रुर्गंगायांसहकृष्णया ॥ १४ ॥ देवदुंदुभयोनेदुःनरदुंदुभिभिःसह ॥ मुमुचुःपुष्पवर्षाणिदेवर्षिपितृमानवाः ॥ १५ ॥ तेतुतत्रगताःसर्वेवर्णाश्रमयुताजनाः ॥ महापातकिनोयत्रसद्योमुच्येतकिल्बिषात् ॥ १६ ॥ अथराजाहतेक्षौमेपरिधायस्वलंकृतः ॥ ब्राह्मणान्पूजयामासरत्नांबरविभूषणैः ॥ १७ ॥ बंधुज्ञातिनृपान्मित्रसुहृदोन्यांश्च सर्वशः ॥ अभीक्ष्णंपूजयामासनारायणपरोनृपः ॥ १८ ॥ अथर्त्विजोमहाभागाःसदस्याब्रह्मवादिनः ॥ ब्रह्मक्षत्रियविट्शूद्राराजानोयेसमागताः ॥ १९ ॥ देवर्षिपितृभूतानिलोकपालाःसहानुगाः ॥ पूजितास्तमनुज्ञाप्यस्वधामानिययौनृप ॥ २० ॥ हरिदासस्यराजर्षेराजसूयमहोदये ॥ नैवातृप्यप्रशंसंतःपिबन्मर्त्योमृतंयथा ॥ २१ ॥ ततोयुधिष्ठिरोराजासुहृत्संबंधिबांधवान् ॥ प्रेम्णानिवासयामासकृष्णंचत्यागकातरः ॥ २२ ॥ भगवानपितत्रांगन्यवासीत्तत्प्रियंकरः ॥ प्रस्थाप्ययदुवीरांश्चसांबादींश्चकुशस्थलीं ॥ २३ ॥ इत्थंराजाधर्मसुतोमनोरथमहार्णवम् ॥ दुस्तरंतंसमुत्तीर्य्यकृष्णोप्यासीद्गतज्वरः ॥ २४ ॥ ए

कदांतःपुरेतस्यवीक्ष्यदुर्योधनःश्रियं ॥ अतप्यद्राजसूयस्यमहित्वंचाच्युतात्मनः ॥ २५ ॥ एकदामयदत्तायांसभायांतुयुधि
ष्ठिरः ॥ वृतोऽनुजैर्बंधुभिश्चकृष्णेनचस्वचक्षुषा ॥ २६ ॥ आसीनःकांचनेसाक्षादासनेमघवानिव ॥ पारमेष्ठ्याश्रियाजुष्टःस्तू
यमानश्चबंदिभिः ॥ २७ ॥ तत्रदुर्योधनोमानीपरितोभ्रातृभिर्नृप ॥ किरीटमालीन्यवसदसिहस्तःक्षिपन्रुषा ॥२८॥ सुयोधनो
यदागच्छत्सभादेशेसुशोभने ॥ जलंमत्वातदावस्त्रमूर्द्ध्वंजग्राहमूढधीः ॥ २९ ॥ तदाग्रेगच्छमानोसौस्थलंमत्वाजलेपतत् ॥
तदाचखिन्नोदुष्टात्मामयमायाविमोहितः॥३०॥ सभास्थायादवाःसर्वेजहसुःपांडवैःसह॥ तदाकृष्णप्रयुक्तोसौभीमोवचनमब्रवी
त् ॥ ३१ ॥ भीमउवाच ॥ अंधस्यचसुताश्चांधाःभवेयुर्नात्रसंशयः ॥ कृष्णेनवार्यमाणोपिभीमोब्रूतेपुनःपुनः ॥ ३२ ॥ इ
तिवाक्यंसमाकर्ण्यभीमस्यकुरुनंदनः ॥ लज्जाविष्टोजगामाथसकोपस्तद्गजाव्हयम् ॥ ३३ ॥ धर्मेणवार्यमाणोपिनस्थितोभ्रष्ट
मानसः ॥ अन्येपिकौरवाः सर्वेचाजग्मुर्हस्तिनापुरम् ॥ ३४ ॥ हाहेतिचुक्रुशुर्लोकाःसंजातंकुत्सितंमहत् ॥ बभूवतूष्णींभ
गवान्भूभारहरणोद्यमः ॥ ३५ ॥ एतत्तेकथितंराजन्यत्पृष्टोहंत्वयाऽनघ ॥ सुयोधनस्यदौरात्म्यंराजसूयेमहाक्रतौ ॥ ३६ ॥
इतिश्रीमहाभारतेभारतसारेसभापर्वणिदुर्योधनभ्रंशोनामसप्तदशोऽध्यायः ॥ १७ ॥ अष्टादशेऽक्षविद्यांचदुःशासनमहानय
म् ॥ पाण्डवानांचनिर्याणंवनायेतिनिगद्यते ॥१॥ वैशंपायनउवाच ॥ एकदासमयेराजन्शकुनीचसुयोधनः ॥ दुःशासनश्च
कर्णश्चसंहतामंत्रमाचरन् ॥ १ ॥ शकुनिरुवाच ॥ माविषीदमहाराजदुर्योधनमहामते ॥ उपायोस्तिपरोह्येकोधर्मनिष्काशना
यच ॥ २ ॥ द्यूतंजानामिरमितुंच्छद्ममाश्रित्यचाक्षिकैः ॥ मिथ्याभूतैर्विजेष्यामिधर्मनिष्कासयेवनम् ॥ ३ ॥ द्वादशाब्देव
नेवासंपणीकृत्यजयाम्यहम् ॥ पुनस्त्रयोदशंवर्षनष्टचर्याप्रकल्पवै ॥ ४ ॥ खेलयिष्यामितत्रापिधर्मंजेष्यामिनिश्चितम् ॥ तत्रा

पिनियमंकृत्वाज्ञातीनांचपुनर्वनम् ॥ ५ ॥ प्रेषयिष्यामिराजेंद्रकिमर्थंखिद्यतेवृथा ॥ नष्टचर्य्यास्थितानांचपांडवानांगवेषणे ॥
॥ ६ ॥ चरानूतान्प्रेषयिष्यामिशतशोथसहस्त्रशः ॥ द्वादशाब्दवनेवासंज्ञातीनांनिश्चितंपुनः ॥ ७ ॥ तदाराज्यंकरिष्यामो
कंटकैरपिवर्जितम् ॥ इतिमंत्रंसमालोच्यतदादुष्टचतुष्टयम् ॥ ८ ॥ धर्ममाकारयामासद्यूतखेलनकाम्यया ॥ आकारितःसमा
यातोधर्मश्चबंधुसंयुतः ॥ ९ ॥ द्रौपदीचतदाकुंतीसर्वेतेधर्मसेवकाः ॥ मिलिताःकौरवैःसार्धंसंस्थिताहस्तिनापुरम् ॥ १० ॥
नानाक्रीडाःप्रकुर्वाणाविजन्हुर्हर्षसंयुताः ॥ एकदासमयेकूटंशकुनिर्वाक्यमब्रवीत् ॥ ११ ॥ शकुनिरुवाच ॥ अहोधर्मादयो
वीराःशृण्वंतुवचनंमम ॥ द्यूतंचखेलयिष्यामिभवतांयदिरोचते ॥ १२ ॥ इत्यूचेशकुनिर्वाक्यंभाविकार्यवशात्तदा ॥ आमि
त्युक्त्वातदासर्वैःपांडवैःकौरवान्प्रति ॥ १३ ॥ द्वादशाब्दवनेवासपणंकृत्वातुखेलिताः ॥ त्रयोदशेतुवर्षेतुगुप्तंस्थेयंचकुत्रचित्
॥ १४ ॥ ज्ञातेसतिपुनर्वीरागंतव्यंनिश्चितंवने ॥ एवंपणंविनिर्मायखेलिताःकुरुपांडवाः ॥ १५ ॥ प्रथमंतुजितंतत्रधर्मेणद्यू
तखेलनम् ॥ पश्चात्तुविजितंसर्वंकौरवैःपांडवंधनम् ॥ १६ ॥ राज्यंपुरंगृहंद्रव्यंधनदाराश्चबांधवाः ॥ कौरवाग्रेततोराजन्ध
र्मराजेनहारिताः ॥ १७ ॥ तदातुकौरवाःसर्वेहर्षनिर्भरमानसाः ॥ जितावयंजितास्तत्रइतिसर्वान्जगुस्तदा ॥ १८ ॥ आ
हुःकेनजितंसर्वंकौरवैरजितात्मभिः ॥ तदातेपांडवाःसर्वेम्लानाःस्युःसदसिस्थिताः ॥ १९ ॥ तदादुर्योधनोराजादुःशासनम
थाब्रवीत् ॥ सुयोधनउवाच ॥ दुःशासनमहाराजसभामानयद्रौपदीं ॥ २० ॥ रजस्वलांमुक्तकेशांलज्जमानांगतप्रभाम् ॥
केशैर्गृहीतांदीनांचदुष्टःसंसदिचानयत् ॥ २१ ॥ तत्रानीयतुवस्त्रंचयावन्निष्कासयेच्चसः ॥ तावत्तयास्मृतःकृष्णोद्रौपद्याप्राण
संकटे ॥ २२ ॥ द्रौपद्युवाच ॥ अग्रेकुरूणामथपांडवानांदुःशासनेनाहृतवस्त्रकेशा ॥ संचिंत्यनामानितदागृणातिगोविंददा

मोदरमाधवेति ॥ २३ ॥ दुःखार्णवेहंहिहरेनिमग्नायन्नामधारोभवमेप्रसन्नः ॥ एवंचसाभक्तिपरावदंतिगोविंददामोदरमाध
वेति ॥ २४ ॥ कालेहिचास्मिन्नपितानबंधुर्नभ्रातरोवैनसुतानमाता ॥ नसत्सहायाःसुहृदोनमित्रंतत्रैवविष्णोभवमेशरण्यः
॥ २५ ॥ हेकृष्णविष्णोमधुकैटभारेभक्तानुकंपिन्भगवन्मुरारे ॥ त्रायस्वमांकेशवलोकनाथगोविंददामोदरमाधवेति ॥
॥ २६ ॥ एवंवदतियावत्सातावद्विष्णुःसमागतः ॥ वस्त्ररूपीचसंजातःपांडवानांचपालकः ॥ २७ ॥ सर्वेषांपश्यतांतत्रहा
हाकारोमहानभूत् ॥ तदादुःशासनोदुष्टोद्रोणभीष्मैर्निवारितः ॥ २८ ॥ विररामह्यधर्मात्माद्रौपदीशापत्रासितः ॥ तदाभीमा
दयोवीराःकौरवाणांकुलक्षये ॥ २९ ॥ उत्थिताधर्मराजेनचक्षुषाभिनिवारिताः ॥ तदातेहिसमास्थायवनंजग्मुःसुदुःखिताः ॥
॥ ३० ॥ सर्वेषांपश्यतांतत्रभाविकेननलिप्यते ॥ ३१ ॥ इतिश्रीमहाभारतेभारतसारेसभापर्वणिपांडवप्रस्थानंनामअष्टाद
शोऽध्यायः ॥ १८ ॥ इतिसभापर्वसमाप्तम् ॥ अथारण्यपर्वमाह ॥ एकोनविंशेऐंद्रेणशक्रशंकरमेलनम् ॥ नलराजस्यवृत्तान्तम
न्यच्चापिनिगद्यते ॥ १ ॥ वैशंपायनउवाच ॥ महावनंसमासाद्यपांडवादुःखपीडिताः ॥ शाकान्नभक्षितवंतश्चभीमानीतान्
दिनेदिने ॥ १ ॥ शाकाहारेणतेवीरादुर्बलागतविक्रमाः ॥ क्षुधार्त्तान्पांडवान्वीक्ष्यद्रौपदीदुःखपीडिता ॥ २ ॥ यावद्दुःखादि
तादेवीतावत्पश्यतिनारदम् ॥ नमस्कृत्वाथवृत्तांतंततस्तस्मैनिवेदयत् ॥ ३ ॥ नारदेनतदामंत्रोद्रौपद्यास्तुनिवेदितः ॥ अन्न
दोवस्त्रदश्चैवसिद्धिदोरविर्दैवतः ॥ ४ ॥ प्रातरुत्थायसुस्नातामंत्रसाधनतत्परा ॥ उपतस्थेरविंतत्ररविस्तुष्टोवरंददौ ॥ ५ ॥
रविणाचप्रदत्तावैस्थालीसाचान्नपूरिता ॥ यावच्चद्रौपदीभुंक्तेतावन्नक्षीयतेतदा ॥ ६ ॥ यदाचद्रौपदीभुक्त्वाप्रक्षाल्याधोमुखी
कृता ॥ तस्मिन्दिनेअन्नहीनेतदास्यान्नंपरेहनि ॥ ७ ॥ इतिस्थालींसमासाद्यपांडवाहर्षनिर्भराः ॥ पंचामृतंचभुंजंतेहृष्टपुष्टाः

सुतेजसः ॥ ८ ॥ वनेस्थितेषुसर्वेषुपांडवेषुतदार्ज्जुनः ॥ जगामतीर्थयात्रायांकालंसंप्रेक्ष्यधर्मवित् ॥ ९ ॥ पार्थस्यवनवासे
पिउलूप्यापथिसंगमः ॥ उलूपीनागकन्याचशिवलिंगोपरिस्थिता ॥ १० ॥ तदाक्रोधमुखेनैवपित्राशप्तार्जुनंवरेत् ॥ तथाचि
त्रांगदीयोभूद्बभ्रुवाहनभूमिपः ॥ ११ ॥ अर्जुनस्तीर्थयात्रायांसमागत्यमहावने ॥ धर्माद्यैर्मिलितःसोथयमाभ्यांपरिवंदितः ॥
एवंस्थितेषुसर्वेषुवनेषुपांडवास्तदा ॥ १२ ॥ जयःप्रोवाचराजानंधर्मनंदनमादरात् ॥ अहोभ्रातरहंयास्येतपसेचवनांतरं ॥
॥ १३ ॥ तपःकृत्वापराजेष्येसकलान्कौरवान्रणे ॥ इतितस्यवचःश्रुत्वाधर्मराजोर्जुनस्यच ॥ १४ ॥ व्यासंसंस्मारयामा
सतत्क्षणात्ससमागतः ॥ अर्जुनायददौविद्यामिंद्रस्यजयकारिणीम् ॥ १५ ॥ अर्जुनस्तांप्रगृह्याथइंद्रकीलंजगामह ॥ ज
जापमंत्रंमाहेंद्रंतपःसिद्धिप्रदायकम् ॥ १६ ॥ तपःसिद्धिंतदादृष्ट्वाचार्जुनस्यमहात्मनः ॥ ययुरिंद्रंवनचराइंद्रकीलनिवासिनः
॥ १७ ॥ वनचराऊचुः ॥ स्वामिन्भवद्वनेकश्चित्तपस्यतिनरोत्तमः ॥ विष्णुर्वापद्मजोवापिशिवोवावरुणोथवा ॥ १८ ॥
कश्चिदेववरोवाथसत्यंसत्यंहिनोवदः ॥ इतितेषांवचःश्रुत्वाइंद्रोवचनमब्रवीत् ॥ १९ ॥ भोभोह्यप्सरसोयूयंवनेगच्छंतुसत्व
रम् ॥ तपस्यंतंनरंकश्चिल्लोभयध्वंविचेष्टितैः ॥ २० ॥ इतितस्यवचःश्रुत्वाप्रस्थिताःसहभर्तृभिः ॥ शिबिकाभिस्तथानागैर्ज
गुस्तस्मिन्महद्वने ॥ २१ ॥ विलोभयंत्यस्तंतत्रहासभावविचेष्टितैः ॥ अथार्जुनोमहायोगीतुच्छीकृत्वाप्सरोगणम् ॥ २२ ॥
स्वसिद्धिंसाधयामासतपस्तप्त्वात्वनेकधा ॥ निष्फलंतागतागेहंतादिंद्रअगमद्वनम् ॥ २३ ॥ अर्जुनंप्रत्युवाचाथवासवोविप्रवे
षधृक् ॥ वासवउवाच ॥ किमर्थंतप्यतेवीरगृहीत्वाकवचंधनुः ॥ अनेनैवतुचिन्हेनजानेत्वांकामुकंऋषिम् ॥ २४ ॥ एतेहि
कामविषयापर्य्यंतपरितापिनः ॥ तस्मात्त्वंतत्परित्यज्यशांतिमार्गेमनःकुरु ॥ २५ ॥ मुक्तेर्योग्यंतपोह्येतद्वृथाकर्त्तुनचार्हसि ॥

इतितस्यवचःश्रुत्वाअर्जुनस्तमुवाचह ॥ २६ ॥ अर्जुनउवाच ॥ यत्त्वंवदसिविप्रेंद्रतदयोग्यंविभातिमे ॥ अविज्ञातप्रबंधस्त्वं
तस्मात्तेनिष्फलंवचः ॥ २७ ॥ अविज्ञातप्रबंधस्यवचोवाचस्पतेरपि ॥ व्रजत्यफलतांदेवतस्मान्मावदमांप्रति ॥ २८ ॥ वि
च्छिन्नाभ्राविलीयंतेविलयेनगमूर्द्धनि॥आराध्यवासहस्राक्षमयशःपंकमुद्धरेत् ॥२९॥इतितस्यवचःश्रुत्वास्वंस्वरूपंययौहरिः॥
प्रसन्नंप्रत्युवाचाथजयमालिंग्यहर्षितः ॥३०॥ शैवंमंत्रंप्रत्युवाचपार्थायचमहात्मने॥शिवमाराधयामासशत्रूणांविजयायच ॥
॥ ३१ ॥ शिवमंत्रंजजापाथअर्जुनःपरवीरहा ॥ तस्मात्प्रसन्नोहिशिवोददौपाशुपतंमहत् ॥३२॥तद्गृहीत्वाजगामाशुवनेवैधर्मनंद
नम् ॥ अर्जुनंतेसमालोक्यहर्षनिर्भरमानसाः ॥ ३३ ॥ अथैकदावनेतस्मिन्भीमोबलवतांवरः ॥ ददर्शवानरंकंचित्पतितंप
थिसूक्ष्मकम् ॥ ३४ ॥ तमुवाचतदाभीमोदेहिमेमार्गमुत्तमम् ॥ वानरउवाच ॥ उल्लंघयित्वामांगच्छवाथवाचान्यतोव्रज ॥
॥ ३५ ॥ नोचेत्पुच्छेगृहीत्वामांप्राप्तस्त्वंचाग्रतोव्रज ॥ इत्युक्तेवानरेतंवैभीमेनचतथाकृतम् ॥ ३६ ॥ नाचलज्जवमात्रंहिवा
नरःसूक्ष्मदर्शनः ॥ तदाऽसौविस्मयंप्राप्तःकोसौवानररूपधृक् ॥ ३७ ॥ ब्रह्मविष्णुशिवादीनांमध्येकोन्यतमःस्मृतः ॥ इति
तंविस्मितंदृष्ट्वाहनूमान्तमुवाचह ॥ ३८ ॥ हनूमानुवाच ॥ भीमत्वंहिमहावीरंविद्धिमांपवनात्मजम् ॥ भूमौरामकथांशृण्व
न्विचरामियथासुखम् ॥ ३९ ॥ इतितस्यवचःश्रुत्वाभीमोवचनमब्रवीत् ॥ भीमउवाच ॥ कपिराजत्वयातुल्यअन्योरा
मबलोह्यभूत् ॥ ४० ॥ किंवातुभगवानेवकपिरूपधरःक्षितौ ॥ इतितस्यवचःश्रुत्वाकपिराजस्तमब्रवीत् ॥ ४१ ॥ हनूमानु
वाच ॥ माकुरुत्वंमहाबाहोभीमविस्मयमीदृशम् ॥ मत्तःस्थूलतमोह्यासीत्पुरारामबलेवरे ॥ ४२ ॥ तमन्यसेहिमद्वाक्यंत
थागच्छमयासह ॥ किंचिदाश्चर्यमतुलंदर्शयामिनसंशयः ॥ ४३ ॥ इत्युक्त्वातौकपीभीमौनिःसृतौसागरंप्रति ॥ तदामार्गे

प्रदृष्टंवैभीमेनचमहत्सरः ॥ ४४ ॥ तदागंतुंसमुद्वीक्ष्यकपिमाहपृथासुतः ॥ भीमउवाच ॥ इतःपश्यकपेत्वंहिदृश्यतेचमहत्स
रः ॥ ४५ ॥ तवाज्ञयामहाबाहोस्नापयेऽस्मिन्सरोवरे ॥ इतितस्यवचःश्रुत्वाकपिराजेनभाषितम् ॥ ४६ ॥ साधुसाधुमहा-
वीरकुरुस्नानंमहाबल ॥ स्नानमात्रेणभीमत्वंसंपूतोहिभविष्यसि ॥ ४७ ॥ इत्युक्तेकपिराजेनभीमेनचतथाकृतम् ॥ स्ना
नायचागतोभीमस्तावन्मध्येनिमज्जह ॥ ४८ ॥ आक्रंदितंतदाश्रुत्वाकपिराजेनधीमता ॥ हास्यंकृत्वातदाभीमःकपिराजेन
चोद्धृतः ॥ ४९ ॥ पुच्छेनचोद्धृतोभीमोजगादविस्मयेनच ॥ कपिनाहितडागंहिसमुद्रांगंचदृश्यते ॥ ५० ॥ मयानदृष्टंकुत्रा
पिईदृशंचसरोवरम् ॥ हनूमानुवाच ॥ शृणुभीममहाबाहोनसरोवरमीदृशम् ॥ ५१ ॥ कुंभकर्णशिरोभागंपतितंरामसंगरे ॥
सजलंमेघवृष्ट्याचजानीहित्वंवृकोदर ॥ ५२ ॥ इत्युक्तेकपिराजेनभीमकंपायितंशिरः ॥ तदाभीममतंज्ञात्वाकपिराजेनचो
द्धृतं ॥ ५३ ॥ अंगुष्ठेनशिरोभागंकुंभकर्णस्यभूमितः ॥ तंदृष्ट्वाविस्मितोभीमःप्रशंसतिकपीश्वरम् ॥ ५४ ॥ इतिश्रीमहा
भारतेभारतसारेअरण्यपर्वेभीममानभ्रंशोनामएकोनविंशोऽध्यायः ॥ १९ ॥ विंशेदुर्वाससस्तृप्तिर्वनेकृष्णस्यमेलनम् ॥ कुंभ
कर्णशिरोभागेभीमोन्मज्जनमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ एकदावनमध्येतुवर्तमानंयुधिष्ठिरम् ॥ दुर्वासाचगतस्तत्रद्वाद
श्यांपारणायच ॥ १ ॥ दुर्योधनेनप्रहितअयुतंशिष्यसंयुतम् ॥ तदातुपांडवाःसर्वेभुक्तवंतःस्थितागृहे ॥ २ ॥ भुक्तापिद्रौपदीतत्र
स्थालीरिक्ताकृतातदा ॥ आगच्छंतमृषिंदृष्ट्वापांडवाजातसंभ्रमाः ॥ ३ ॥ दुर्वासातानुवाचाथभिक्षांमेदेहिपांडव ॥ इतितद्वाक्य
माकर्ण्यमनस्येवंविचारितः ॥४॥ पांडवामिलिताःसर्वेकिंकर्तव्यमतःपरम् ॥ द्विजान्स्नानार्थमादिश्यप्रविशामोहुताशनम् ॥ ५ ॥
इतितैर्निश्चयंकृत्वास्नानार्थंप्रेषिताद्विजाः ॥ काष्ठराशिंविरच्याथकृत्वावन्हिप्रदीपनम् ॥ ६ ॥ यावद्विशंतितेवन्हिंतावद्विष्णुःसमा

गतः ॥ पीतांबरधरश्चक्रीवनमालाविभूषितः ॥ ७ ॥ द्रौपदींप्रत्युवाचाथपारणंदेहिमेध्रुवम् ॥ तच्छ्रुत्वाद्रौपदीप्राहनाथरिक्ताहि
स्थालिका ॥ ८ ॥ नास्त्यन्नंहिगृहेऽस्माकंनैववेत्सिकथंप्रभो ॥ दुर्वासाचागतोनाथपारणायस्वशिष्यकः ॥९ ॥ प्रविशामोवयंसर्वे
तदर्थंवन्हिमुज्वलम् ॥ इतितेषांवचःश्रुत्वाकृष्णःपुनरभाषत ॥ १० ॥ श्रीकृष्णउवाच॥ द्रौपदीपश्यसित्वंहिस्थाल्यांलग्नंक्वचि
त्सति ॥ तदाज्ञयाचसादेवीयावत्पश्यतिस्थालिकाम् ॥११॥ तावत्सिक्तंतयादृष्टंदत्तंहरिकरेपुनः ॥ तत्सिक्तंहरिणाभुक्तंकृत्वावि
श्वार्पणंपुनः ॥१२॥ तेनतृप्तोहरिर्यावत्तृप्ताःस्युस्तेपिपांडवाः ॥ तदाभीमोऽब्रवीद्वाक्यंकृष्णस्वानांचपालकः ॥१३॥ द्विजानाव्ह
यभीमत्वंभोजनार्थंत्वरान्वितः ॥ तच्छ्रुत्वातुगतोभीमोऽब्रवीद्वाक्यंसकृत्स्वयम् ॥ १४ ॥ पृच्छमानास्तदाभीमंहरिःकिंगेहमा
गतः ॥ तदाचकथयंस्तेभ्यःस्वस्मिन्कृष्णःसमागतः ॥ १५ ॥ पुनस्तैर्वचनंप्रोक्तंतृप्तास्मोहरिणावयम् ॥ तथापिभीमसेनो
यंबलादाव्हययच्चतान् ॥ १६ ॥ तदापलायितंराजन्मुक्तकेशैश्चतैर्द्विजैः ॥ इतिकृत्वाजगन्नाथोरक्षयित्वाचपांडवान् ॥ १७ ॥
विज्ञाप्यधर्मराजंहिजगामस्वंनिकेतनम् ॥ एकदाचवनेव्यासोजगामधर्मनंदनम् ॥ विश्वसंतंविषीदंतंजगादधर्मतत्परः ॥
॥ १८ ॥ व्यासउवाच ॥ माविषीदनरव्याघ्रदशांदुष्टामवाप्यवै ॥ पुराकृतयुगेराजन्नलोदुष्टदशांगतः ॥ १९ ॥ धर्मउ
वाच ॥ स्वामिन्कोसौनलोराजाकथंदुष्टदशांगतः ॥ पश्चात्सुखीकथंजातस्तन्मांत्वंतत्त्वतोवद ॥ २० ॥ व्यासउवाच ॥
पुराकृतयुगेराजन्नलोनामनराधिपः ॥ दुर्गेनलवरेतिष्ठन्राज्यंचक्रेसुधार्मिकः ॥ २१ ॥ रूपवान्गुणसंपन्नःसुशीलौदार्यसंयु
तः ॥ वीरसेनात्मजोधीरःसत्यवादीजितेंद्रियः ॥ २२ ॥ कौडिन्यनगरेराजानाम्नाभीमेतिविश्रुतः ॥ दमयंतीतस्यपुत्रीसुरू
पागुणशालिनी ॥ २३ ॥ वक्त्रंचंद्रविडंबिपंकजपरीहासक्षमेलोचने वर्णःस्वर्णमपाकरिष्णुनलिनीजिष्णुःकचानांचयः ॥

39

वक्षोजाविभकुंभविभ्रमहरोगुर्वींनितंबस्थली वाचोहारिचमार्दवंयुवतिषुस्वाभाविकंमंडनम् ॥ २४ ॥ एवंरूपवतीबालातया
राजानलोवृतः ॥ स्वयंवरेवृतःसर्वान्त्यक्तोराजातयाध्रुवम् ॥ २५ ॥ इंद्रादयोपियेदेवास्तांदृष्ट्वादुःखिताभवन् ॥ वैशंपायन
उवाच ॥ कलिंसंप्रार्थयामासनलदेहंसमागतम् ॥ २६ ॥ इत्युक्तस्तुकलिस्तस्यराजपर्यंतगोभवत् ॥ द्वादशाब्दानिपर्यंतंपरि
तोभ्रममाचरेत् ॥ २७ ॥ प्रवेष्टुंनैवशब्दोपिनलदेहेसुधर्मगे ॥ एकदासंभ्रमन्तत्रनलदेहंनिरीक्षवान् ॥ २८ ॥ परितःसंभ्रम
न्तत्रनलंचसनिरीक्षवान् ॥ गुदस्याधःप्रवेशोवैजलस्पर्शनवर्जितः ॥ २९ ॥ तत्प्रदेशस्थलंज्ञात्वाप्रविवेशकलिस्तदा ॥ नल
देहेकलिस्पर्शाद्दुर्वस्थासमपद्यत ॥ ३० ॥ दिनेदिनेचदुर्बुद्धिर्मनस्तापःसुदारुणः ॥ तेजोहानिरविश्वासःपत्न्यासहदिनेदिने
॥ ३१ ॥ धर्मःप्रज्वलितस्तपःप्रचलितंसत्यंचदूरेगतं पृथ्वीमंदफलानृपाःकपटिनोलौल्यंगताब्राह्मणाः ॥ लोकाःस्त्रीवशगाः
स्त्रियोपिचपलाःपुत्राःपितुर्द्वेषिणः साधुःसीदतिदुर्जनःप्रभवतिप्रायःप्रविष्टेकलौ ॥ ३२ ॥ जनमेजयउवाच ॥ अस्त्रहेतोर्गतेपा
र्थेशक्रलोकंमहात्मनि ॥ युधिष्ठिरप्रभृतयःकिंप्रकुर्वंतिपांडवाः ॥ ३३ ॥ वैशंपायनउवाच ॥ अस्त्रहेतोर्गतेपार्थेशक्रलोकंमहा
त्मनि ॥ न्यवसन्कृष्णयासार्धंकाम्यकेपुरुषर्षभाः ॥ ३४ ॥ ततःकदाचिदेकांतेविविक्तेमृदुशाद्वले ॥ दुःखार्त्ताभरतश्रेष्ठानि
षेदुःसहकृष्णया ॥ ३५ ॥ धनंजयंशोचमानाःसाश्रुकंठाःसुदुःखिताः ॥ अथभीमोमहाबाहुर्युधिष्ठिरमभाषत ॥ ३६ ॥ धनं
जयवियोगाच्चराज्यनाशाच्चदुःखिताः ॥ अथभीमोमहाबाहुर्युधिष्ठिरमभाषत ॥ ३७ ॥ निदेशात्तेमहाराजन्गतोसौविजयः
किल ॥ अर्जुनःपांडुपुत्राणांप्राणएवनसंशयः ॥ ३८ ॥ योसौगच्छतितेजस्वीबहुक्लेशान्विचिंतयत् ॥ भवन्नियोगात्सभ्राता
ततोदुःखांतरंगताः ॥ ३९ ॥ यस्यबाहूसमाश्रित्यवयंसर्वेमहात्मनः ॥ मन्यामहेजितानाजौपरान्प्राप्तांचमेदिनीम् ॥ ४० ॥

अस्माभिःसहकृष्णेनकृत्वाकर्णमुखान्नरान् ॥ स्वबाहुविजितांकृत्स्नांप्रशशासवसुंधराम् ॥ ४१ ॥ भवतोद्यूतदोषेणसर्वेवयमु
पप्लुताः ॥ अहीनपौरुषाराजन्बलिभिर्बलवत्तराः ॥ ४२ ॥ क्षत्रधर्ममहाराजत्वमावेदितुमर्हसि ॥ नान्यधर्मोमहाराजक्षत्रिय
स्यमहात्मनः ॥ ४३ ॥ राज्यमेवपरंधर्मंक्षत्रियस्यविदुर्बुधाः ॥ त्वंक्षत्रधर्मविद्राजन्धर्मवान्त्वंपृथक्नरः ॥ ४४ ॥ प्राक्द्वा
दशसमाराजन्धार्तराष्ट्रैर्बहिष्कृताः ॥ सर्वानहंहनिष्यामियदिधर्मःसनातनः ॥ ४५ ॥ दुर्योधनश्चकर्णश्चयेचान्येप्रतियोधि
नः ॥ मयाप्रशमिताःपश्चात्त्वमेष्यसिवनात्पुनः ॥ ४६ ॥ एवंकृतेनतेदोषोभविष्यतिविशांपते ॥ यज्ञैश्चविविधैःपार्थकृतंपा
पमरिंदम ॥ ४७ ॥ अवधूयमहाबाहोगच्छन्स्वर्गमनुत्तमम् ॥ एवमेतद्भवेद्राज्यंयदिराजानबालिशः ॥ ४८ ॥ अस्माकं
दीर्घसूत्रीस्याद्भवान्धर्मपरायणः ॥ निघ्नंतंघातयेद्यस्तुतस्यपापंनलिप्यते ॥ ४९ ॥ अहोरात्रिर्महाराजतुल्यंसंवत्सरेणहि ॥
संवत्सरोमहाराजपूर्णोभवतिकष्टतः ॥ ५० ॥ मदीयंवचनंराजन्मनसात्वंविचारय ॥ कालेदुर्योधनंहंतिपुत्रदारादिभिर्युतम्
॥ ५१ ॥ एकाज्ञांपृथिवींसर्वांपुराराजन्करोतिसः ॥ वैशंपायनउवाच ॥ तथाब्रुवाणंभीमंतुधर्मराजोयुधिष्ठिरः ॥ ५२ ॥
युधिष्ठिरउवाच ॥ असंशयंमहाबाहोहनिष्यतिसुयोधनम् ॥ वर्षात्त्रयोदशादूर्ध्वंसहगांडीवधन्वना ॥ ५३ ॥ अनृतंतेमुखाद्भी
मनिःसृतंनकदाचन ॥ अचिरेणैवकालेनघातयिष्येसुयोधनं ॥ ५४ ॥ एवंब्रुवतिभीमेतुधर्मराजेयुधिष्ठिरे ॥ आजगाममहा
योगीबृहदश्वस्तपोधनः ॥ ५५ ॥ तमभिप्रेक्ष्यधर्मात्मासंप्राप्तंधर्मचारिणम् ॥ शास्त्रविन्मधुपर्केणपूजयामासधर्मजः ॥ ५६ ॥
विधिवत्तंसमास्थाप्यधर्मराजोऽब्रवीद्वचः ॥ धर्मउवाच ॥ अक्षद्यूतेनभगवन्धनंराज्यंचमेहृतम् ॥ ५७ ॥ दायादैःच्छलमा
श्रित्यदुष्टकौरवकोविदैः ॥ भार्यामेचसभांनीतातदादुःखंमहाद्भुतम् ॥ ५८ ॥ नमत्तोदुःखितनरःपुमानस्तिधरातले ॥ बृहद

श्वउवाच ॥ धर्मराजमहाबाहोमादुःखंकुरुसर्वथा ॥ ५९ ॥ पुरासत्ययुगेराजन्नलोदुःखेनदुःखितः ॥ युधिष्ठिरउवाच ॥ ब्र
ह्मन्कोसौनलोराजाकथंदुःखेनपीडितः ॥६०॥ किंचित्कालंस्थितोदुःखेकथंदुःखाद्विमोचितः ॥ बृहदश्वउ० ॥ आसीद्राजानलो
नामवीरसेनसुतोबली ॥ ६१ ॥ उपपन्नोगुणैःसर्वैरूपवान्अक्षकोविदः ॥ प्रतिष्ठतिखगेंद्राणांमूर्ध्निदेवपतिर्यथा ॥ ६२ ॥ उ
पर्युपरिसर्वेषामादित्यइवतेजसा ॥ ब्रह्मण्योवेदविद्राजन्निषधेषुमहीपतिः ॥ ६३ ॥ अक्षप्रियःसत्यवादीदशकोक्षौहिणीपतिः
॥ ६४ ॥ ईप्सितोवरनारीणामुदारःसजितेंद्रियः ॥ रक्षिताधन्विनांश्रेष्ठःसाक्षादिवमनुःस्वयम् ॥ ६५ ॥ शूरःसर्वगुणैर्युक्तः
प्रजाकामःसचाप्रजः ॥ सप्रजार्थेपरंयत्नमकरोत्सुसमाहितः ॥ ६६ ॥ तमभ्यगच्छद्ब्रह्मर्षिर्दमनोनामभारत ॥ तमागतंप्रजा
कामस्तोषयामासधर्मवित् ॥ ६७ ॥ महिष्यासहराजेंद्रसत्कारेणसुवर्चसः ॥ तस्मैप्रसन्नोदमनःसभार्यायवरंददौ ॥ ६८ ॥
कन्यारत्नंकुमारांश्चत्रीनुदारान्महायशाः ॥ दमयंतींदमंदांतंदमयंतंसुवर्चसम् ॥ ६९ ॥ उपपन्नान्गुणैःसर्वैर्भीमादीन्सुपरा
क्रमान् ॥ ७० ॥ दमयंतीस्वरूपेणतेजसायशसाश्रिया ॥ सौभाग्येनचलोकेषुयशःप्राप्यसुमध्यमा ॥ ७१ ॥ अथतांव
यसिप्राप्यदासीनांसमलंकृतम् ॥ शतंसखीनांचतथापर्युपासशचीमिव ॥ ७२ ॥ तत्रसाशोभतेभैमीसर्वाभरणभूषिता ॥
सखीमध्येनवीनांगीजीमूतेदामिनीयथा ॥ ७३ ॥ अतिरूपेणसंपन्नाश्रीरिवायतलोचना ॥ नदेवेषुनयक्षेषुतादृक्रूपवतीक्कि
चित ॥ ७४ ॥ मानवेषुनदृष्टंचरूपंमन्मथमोहनम् ॥ चित्रेर्पिताचसाबालापुत्तलींवविराजत ॥ ७५ ॥ नलश्चनरशार्दूलोगु
णैरप्रतिमोभुवि ॥ कंदर्पइवरूपेणमूर्तिमानभवत्स्वयम् ॥ ७६ ॥ तस्याःसमीपेतुनलंप्रशशंसुःसुयाचकाः ॥ नैषधस्यसमी
पेतुतस्यारूपंचवर्णयत् ॥ ७७ ॥ तयोर्विवाहकामोभूत्शृण्वतोःसकलान्गुणान् ॥ अन्योन्यंप्रतिकौंतेयसंवर्द्धतसुहृच्छयः ॥

॥ ७८ ॥ तदानलोमहाराजाहंसानतान्‌सददर्शह ॥ वनेषुगच्छतांतेषामेकंजग्राहपक्षिणं ॥ ७९ ॥ ततोऽब्रवीत्सवचनंनहंत
व्यस्त्वयानल ॥ सुप्रीतंचकरिष्यामिदमयंतीसमागमम्‌ ॥ ८० ॥ यथात्वदन्यंपुरुषंसानमन्यतिकर्हिचित्‌ ॥ एवमुक्तस्ततो
हंसमुत्ससर्जमहीपतिः ॥ ८१ ॥ तेतुहंसाःसमुत्पत्यविदर्भानगमंस्ततः ॥ विदर्भनगरींगत्वादमयंत्यास्तदंतिके ॥ ८२ ॥
निपेतुस्तेगुरुत्मंतःसाददर्शाथतान्‌गणान्‌ ॥ सातानद्भुतरूपान्वैदृष्ट्वासखिगणावृता ॥ ८३ ॥ त्दृष्टागृहीतुंहंसांश्चरमा
णोपचक्रमे ॥ अथहंसाश्चित्ररूपाःसर्वतःप्रमदावने ॥ ८४ ॥ इतस्ततश्चतेहंसाःपृथक्‌भूतास्मजग्मिरे ॥८५ ॥ दमयंतीतुयं
हंसंगृहीतुंसायदेच्छति ॥ समानुषींगिरंकृत्वादमयंतीमथाब्रवीत्‌ ॥ ८६ ॥ हंसउवाच ॥ दमयंतीनलोनामनिषधेषुमहीप
तिः ॥ कंदर्पसदृशंरूपंनसमस्तस्यमानुषः ॥ ८७ ॥ तस्यवैयदिभार्यात्वंभवेथावरवर्णिनी ॥ सफलंतेभवेज्जन्मरूपंचेदंसुम
ध्यमे ॥ ८८ ॥ वयंहिदेवगंधर्वमनुष्योरगराक्षसान्‌ ॥ दृष्टवंतोनचास्माभिर्दृष्टपूर्वस्तथाविधः ॥ ८९ ॥ त्वंचापिरत्नंनारी
णांनिषधेषुनलोवरः ॥ विशिष्टायाविशिष्टेनसंगमोगुणवान्‌भवेत ॥ ९० ॥ एवमुक्तातुहंसेनदमयंतीविशांपते ॥ अब्रवीत्सा
धुतत्वङ्गमपित्वंचनलंवद ॥ ९१ ॥ तथेत्युक्त्वांडजःकन्यांवैदर्भस्यविशांपते ॥ पुनरागत्यनिषधान्नलेसर्वंन्यवेदयत्‌ ॥ ९२ ॥
इतिश्रीमहाभारतेभारतसारेनलोपाख्यानेवनपर्वणिविंशोऽध्यायः ॥ २० ॥ एकविंशेतुशक्राद्यादमयंतींजिघृक्षवः ॥ तांन
लःप्रेषितस्तैस्तुसप्रसंगमिहोच्यते ॥ १ ॥ बृहदश्वउवाच ॥ दमयंतीतुयच्छ्रुत्वावचोहंसस्यभारत ॥ तदाप्रभृतिनस्वस्था
नलंप्रतिबभूवसा ॥ १ ॥ ततश्चिंतापरादीनाविवर्णवदनाकृशा ॥ बभूवदमयंतीचनिश्वासपरमातदा ॥ २ ॥ ऊर्ध्वदृष्टिर्ध्या
नपराबभूवोन्नतलोचना ॥ पांडुवर्णाक्षतेनाथत्दृच्छयाविष्टचेतना ॥ ३ ॥ नशय्याशनभोगेषुरतिंबध्नातिभामिनी ॥ ननक्तंन

दिवाशेतेनाथेतिवदतीमुहुः ॥ ४ ॥ तामवस्थांतदाकारांसख्यस्ताजज्ञिरेगतिम् ॥ ततोविदर्भतनयेदमयंत्यास्ववीगणत ॥
॥ ५ ॥ चिंतयामासतत्कार्यंसुमहत्वात्सुतांप्रति ॥ ससमीक्ष्यमहीपालःसुतांयौवनसंस्थिताम् ॥ ६ ॥ अपश्यदात्मनःकार्यं
दमयंत्याःस्वयंवरः ॥ ७ ॥ अन्येजग्मुस्तदाभीमंराजानोभीमशासनाः ॥ हस्त्यश्वरथघोषेणनादयंतोवसुंधराम् ॥ ८ ॥ वि
चित्रमाल्याभरणैर्बलैर्दृश्यैःस्वलंकृताः ॥ एतस्मिन्नेवकालेतुपुराणौऋषिसत्तमौ ॥ ९ ॥ अटमानौमाहात्मानाविंद्रलोकंततो
गतौ ॥ नारदःपर्वतश्चैवमहात्मानौमहाप्रभो ॥ १० ॥ देवराजस्यभवनंप्रविशातेसुपूजितौ ॥ अर्चयित्वासहस्राक्षस्ततोव
चनमब्रवीत् ॥ ११ ॥ इंद्रउवाच ॥ पप्रच्छकुशलंचैवतयोःसर्वगतोविभुः ॥ नारदउवाच ॥ आवयोःकुशलंवीरसर्वत्रगतई
श्वरे ॥ लोकेचमघवन्सर्वेभूपाःकुशलिनोविभो ॥ १२ ॥ बृहदश्वउवाच ॥ नारदस्यवचःश्रुत्वाशक्रःप्रोवाचसत्वरम् ॥ धर्म
ज्ञःपृथिवीपालास्त्यक्तजीवितयोधिनः ॥ १३ ॥ शस्त्रेणनिधनंकालेयेगच्छंतिपराङ्मुखाः ॥ अयंलोकोक्षयस्तेषांयथैवमम
कामधुक् ॥ १४ ॥ किंतुतेक्षत्रियाशूरानहिपश्यामितानहम् ॥ आगच्छंतिमहीपालादमयंतींजिघृक्षवः ॥ १५ ॥ एवमुक्त
स्तुशक्रेणनारदःप्रत्यभाषत ॥ शृणुमेमघवन्येननपश्यंतिमहीक्षिताम् ॥ १६ ॥ विदर्भराज्ञस्तनयादमयंतीतिविश्रुता ॥
रूपेणसमतिक्रांतापृथिव्यांसर्वयोषिताम् ॥ १७ ॥ तस्याःस्वयंवरेशक्रभवितादेवराडिव ॥ तत्रगच्छंतराजानोराजपुत्राश्चस
र्वशः ॥ १८ ॥ तांरत्नभूतांलोकस्यप्रार्थयंतिमहीक्षितः ॥ आकांक्षतिविशेषेणबलवृत्रनिषूदनः ॥ १९ ॥ एवंकथयतस्तस्यलो
कपालाश्चसाग्निकाः ॥ आजग्मुर्देवराजस्यसमीपममरोत्तमाः ॥ २० ॥ ततस्तुशुश्रुवुःसर्वेनारदस्यवचोमहत् ॥ श्रुत्वाचैवाब्रु
वन्हृष्टागच्छामोवयमप्युत ॥ २१ ॥ ततःसर्वेमहाराजसगणाःसहवाहनाः ॥ विदर्भानभितोजग्मुर्यत्रसर्वेमहीभृतः ॥ २२ ॥

नलोऽपिराजाकौंतेयश्रुत्वाराज्ञासमागमम् ॥ अभ्यगच्छददीनात्मादमयंतीमनुव्रतः ॥ २३ ॥ अथदेवाःपथिनलंददृशुर्भूत
लेस्थितम् ॥ साक्षादेवस्थितंमूर्त्यामन्मथंरूपसंपदा ॥ २४ ॥ तंदृष्ट्वालोकपालास्तेभ्राजमानंयथारविं ॥ तस्थुर्विगतसंकल्पा
विस्मितारूपसंपदा ॥ २५ ॥ ततोंऽतरिक्षेसंस्थाप्यविमानानिदिवौकसः ॥ अब्रुवन्नैषधराजन्नवतीर्यत्रिविष्टपात् ॥ २६ ॥
देवाऊचुः ॥ तेभ्यःप्रतिज्ञांतुनृपःकरिष्यइतिभारत ॥ अथैतान्यरिपप्रच्छकृतांजलिरभाषत ॥ २७ ॥ केभवंतंचकश्चासौकु
तोऽऽयाताःसहिष्णवः ॥ किंचिदत्रमयाकार्यंकथयध्वंयथातथम् ॥ २८ ॥ एवमुक्तेनलेराजन्मघवाइत्यभाषत ॥ अमरान्
वोनिबोधास्मान्दमयंत्यर्थमागतान् ॥ २९ ॥ अहमिंद्रोऽयमग्निश्चतथैवायमपांपतिः ॥ शरीरांतकरोनृणांयमोयमपिपार्थिव
॥ ३० ॥ सर्वैत्वमागतानस्मान्दमयंत्यैनिवेदय ॥ लोकपालाःसहेंद्रास्त्वांसमयांतिदिदृक्षवः ॥ ३१ ॥ प्राप्तुमिच्छंतिदेवा
स्त्वांशक्राग्निवरुणोपमाः ॥ एषामन्यतमंदेवंपत्नीत्वेवरकामिनम् ॥ ३२ ॥ एवमुक्ततुशक्रेणनलःसांतरमब्रवीत् ॥ नलउवाच ॥
एषार्थसमवेतंमांनप्रेषयतुमर्हथ ॥ ३३ ॥ देवाऊचुः ॥ करिष्यइतिसंश्रुत्यपूर्वमस्मासुनैषध ॥ नकरिष्यसिकस्मात्त्वंयदानै
षधमाचिरम् ॥ ३४ ॥ बृहदश्वउवाच ॥ एवमुक्तःसदेवैस्तुव्रजेन्नवसउक्तवान् ॥ सुरक्षितानिवेश्मानिप्रवेष्टुंकथमुत्सहे ॥
॥ ३५ ॥ प्रवेष्यसीतितंतत्रपुनरेवाभ्यभाषत ॥ सजगामतथेत्युक्त्वादमयंत्यानिवेशनम् ॥ ३६ ॥ ददर्शतत्रवैदर्भींसखीग
णसमावृताम् ॥ दीप्यमानांस्ववपुषाश्रियंचवरवर्णिनीम् ॥ ३७ ॥ अतीवसुकुमारांगींतनुमध्यांसुलोचनाम् ॥ आक्षिपंती
मिवचतांशशिनंस्वेनतेजसा ॥ ३८ ॥ तस्यादृष्ट्वैववृद्धेवकामस्थांचारुहासिनीम् ॥ ततस्तानैषधंदृष्ट्वासंभ्रांताःपरमांगनाः ॥
॥ ३९ ॥ अंगणेभ्यःसमुत्पेतुस्तेजसातस्यधर्षिताः ॥ प्रशशंसुश्चसुप्रीतानलंताविस्मयान्विताः ॥४०॥ अहोरूपमहोकांतिरहोधै

र्थंमहात्मनः ॥ कोऽयंदेवोनुयक्षोवागंधर्वोनुभविष्यति ॥४१॥ नन्वेनंशक्नुवंतिस्मव्याहर्त्तुमपिकिंचन ॥ सर्वाभवंश्वसव्रीडाद्दृष्ट्वा
चैववरांगनाः ॥ ४२ ॥ अथैनंसुंदरीबालास्मितपूर्वाभिभाषणी ॥ दमयंतीनलंस्वैरमभ्यभाषतविस्मिता ॥ ४३ ॥ कस्त्वंस
र्वानवद्यांगोममहृच्छयवर्द्धनः ॥ प्राप्तोऽस्यमरवद्वीरज्ञातुमिच्छामितेऽनघ ॥ ४४ ॥ कथमागमनंचेहकथंचासिनलक्षितः ॥
सुरक्षितंहिमेवेश्मभीमश्चैवोग्रशासनः ॥ ४५ ॥ एवमुक्तस्तुवैदर्भ्यानलस्तांप्रत्युवाचह ॥ नलंमांविद्धिकल्याणिदेवदूतमिहा
गतम् ॥ ४६ ॥ देवास्त्वांप्राप्तुमिच्छंतिशक्रोऽग्निर्वरुणोयमः ॥ तेषामन्यतमंदेवंपतित्वेवृणुशोभने ॥ ४७ ॥ तैर्दत्तामममयावि
द्यातयाहंचप्रवेशितः ॥ एतदर्थमहंभद्रेप्रेषितःसुरसत्तमैः ॥ ४८ ॥ तत्तच्छ्रुत्वाशुभेदेविकुरुत्वंयदिरोचते ॥ ४९ ॥ इति
श्रीमहाभारतेभारतसारेअरण्यपर्वणिनलोपाख्यानेएकविंशोऽध्यायः ॥ २१ ॥ द्वादशेविबुधान्हित्वादेवीचक्रेनलंधवम् ॥
देवेशेभ्योवरप्राप्तिर्नलराजस्यवर्ण्यते ॥ १ ॥ बृहदश्वउवाच ॥ सानमस्कृत्यराजानंप्रहस्यनलमब्रवीत् ॥ आदौवृतोस्मिराजें
द्रदेवाःसंतुयथासुखम् ॥ १ ॥ हंसस्यवचनंयत्तुतन्मांवहतिपार्थिव ॥ त्वत्कृतेहिमयावीरराजानःसन्निपातिताः ॥ २ ॥
यदित्वंभजमानांमांप्रत्याख्यास्यसिनेतिच ॥ विषमग्निंजलंरज्जुमास्थास्येतवकारणात् ॥ ३ ॥ एवमुक्त्वातुवैदर्भीनलस्तांप्र
त्युवाचह ॥ नलउवाच ॥ तिष्ठत्सुलोकपालेषुकथंमानुषमिच्छसि ॥ ४ ॥ एषामहंलोककृतामीश्वराणांमहात्मनाम् ॥ नपा
दरजस्तत्तुल्यंमनस्तेतेषुवर्त्तिनाम् ॥ ५ ॥ विप्रायचाचरन्मर्त्योदेवोनोमृत्युमिच्छति ॥ त्यजमामनवद्यांगीवरयस्वसुरोत्तमा
न् ॥ ६ ॥ ततोबाष्पकलांत्यक्त्वादमयंतीसुखेदिता ॥ प्रत्याजहारशनकैर्नलंराजानमब्रवीत् ॥ ७ ॥ दमयंत्युवाच ॥ अस्त्यु
पायोमयादृष्टोनिरुपायोनलेश्वर॥ येनदोषोनभवितातवराजन्कथंचन॥८॥त्वंचेत्त्वेहनरश्रेष्ठोदेवाइंद्रपुरोगमाः ॥ आयांतुसहि

ताःसर्वेममयत्रस्वयंवरे॥९॥ततोऽहंलोकपालानांसन्निधौत्वांनलेश्वर॥वरयिष्येनरव्याघ्रनैवदोषोभविष्यति ॥१०॥ एवमुक्तस्तु
वैदर्भ्यानलोनाममहायशाः॥आजगामततस्तत्रयत्रदेवाःसवासवाः ॥११॥ तमपश्यंस्तथायांतंलोकपालंनरेश्वरं ॥ दृष्ट्वाचैवततो
ऽपृच्छन्वृत्तांतंसर्वमेवच ॥१२॥ देवाऊचुः ॥ कच्चिद्दृष्टात्वयादेवदमयंतीशुचिस्मिता ॥ किमब्रवीच्चतान्सर्वान्वदभूमिपतेऽनघ
॥ १३ ॥ नलउवाच ॥ भवद्भिरहमापृष्टोदमयंत्यानिवेशनम् ॥ प्रविष्टःसुमहाकक्षंदंडिभिःस्थविरैरपि ॥ १४ ॥ प्रविशंतंच
मांतत्रनकश्चिद्दृष्टवान्नरः ॥ विनतांपार्थिवसुतांभवतामेवतेजसा ॥ १५ ॥ सख्याचसामयादृष्टाताभिश्चाहंसुलक्षितः ॥ वि
स्मिताचाभवन्दृष्ट्वासर्वामांविबुधेश्वर ॥ १६ ॥ वर्ण्यमानेषुचमयाभवत्सुरुचिरात्मना ॥ मामेवगतसंकल्पावृणीतेसुरसत्त
माः ॥ १७ ॥ अब्रवीच्चैवअबलाआयांतुसहिताःसुराः ॥ त्वयासहनरश्रेष्ठममयत्रस्वयंवरः ॥ १८ ॥ तेषामहंसन्निधौत्वां
वरयिष्येनरोत्तम ॥ एवंतवमहाबाहोदोषोनभवितेतिह ॥ १९ ॥ एतावदेवविबुधायथावृत्तंतथाकृतम् ॥ मयाकार्यप्रमाणंतु
भवंतित्रिदिवेश्वराः ॥ २० ॥ बृहदश्वउवाच ॥ इतिकालेशुभेप्राप्तेतिथ्योपुण्यक्षणेतथा ॥ आजुहावमहीपालान्भीमोराजा
स्वयंवरे ॥ २१ ॥ तेतच्छ्रुत्वामहीपालाःकनकस्तंभरंजितम् ॥ महासुंदरशोभाढ्यंतोरणेनविराजितम् ॥२२॥ विविशुस्तेमहारंगं
नृपाःसिंहाइवाचलम् ॥ तत्रासनेषुविविधेष्वासीनापृथिवीभृताम् ॥ २३ ॥ तेपुष्पस्रग्धराःसर्वेसुमृष्टमणिकुंडलाः ॥ देवगंधर्वपत
योदद्दृशुर्विस्मयान्विताः ॥ २४ ॥ पौराजनपदाश्चैवयेतत्रासन्समागताः ॥ तत्रतेषांतुदृश्यन्तेबाहवःपरिघोपमाः ॥ २५ ॥ आका
रवंतोदेवाश्चपंचशीर्षाइवोरगाः ॥ दर्शनायसमाजग्मुर्दमयंतीस्वयंवरं ॥ २६॥ दमयंतीततोरंगंप्रविवेशशुभानना ॥ मुष्णंतीप्र
भयाराज्ञांचक्षुंषिचमनांसिच ॥ २७ ॥ तस्यागात्रेषुपतितातेषांदृष्टीर्महात्मनां ॥ तत्रतत्रावसक्ताश्चचित्रादेवाइवाभवन् ॥ २८ ॥

ततःसंकीर्त्यमानेषुराज्ञांनामसुभारत ॥ ददर्शभैमीपुरुषान्पंचतुल्याकृतानिच ॥ २९ ॥ तान्समीक्ष्याथसासर्वान्विशेषाकृतिव
र्जितान् ॥ संदेहादथवैदर्भीनाभ्यजानन्नलंनृपम् ॥३०॥ यंयंसाद्ददृशेदेवीतंतंमन्येनलंनृपम् ॥ सैवचिंतयतेबुद्ध्यातर्कयामासभा
मिनी ॥ ३१ ॥ देवानांयानिलिंगानिस्थविरेभ्यःश्रुतानिच ॥ तानिध्यात्वातथादेवीनलेराज्ञिमनोदधौ ॥ ३२ ॥ कथंदेवान्हि
जानामिकथंविद्यांनलंनृपम् ॥ सैवंचिंतयतीबुद्ध्यातर्कयामासभामिनी ॥ ३३ ॥ मनुष्योभूमिमध्यस्थोदेवाआकाशचारिणः ॥
तद्विचार्यतदादेवीनापश्यन्नैषधंनलम् ॥ ३४ ॥ वाचाथमनसाचैवनमस्कारंप्रयुज्यसा ॥ देवेभ्यःप्रांजलिर्भूत्वावेपमानेदमब्र
वीत् ॥ ३५ ॥ हंसस्यवचनंश्रुत्वाययथामेनैषधोवृतः ॥ पतित्वेतेनसत्येनदेवास्तंप्रदिशंतुमाम् ॥ ३६ ॥ निश्चयंपरमंतस्याअ
नुरागंचनैषधे ॥ मनोविशुद्धिंभक्तिंचअनुरागंचभारत ॥ ३७ ॥ वाचाचमनसाचैवयथानाभिचरामितम् ॥ तेनसत्येनविबुधा
स्तमेवप्रदिशंतुमाम् ॥ ३८ ॥ यथोक्तंचक्रिरेदेवाःसमस्तालिंगधारिणः ॥ सापश्यद्विबुधान्सर्वान्वृद्धान्निस्तब्धलोचनान् ॥
॥ ३९ ॥ रंगेस्थितान्महारम्यानस्पृशंतक्षितिंतदा ॥ तान्देवान्सासमाज्ञायदमयंतीन्यवर्त्तत ॥ ४० ॥ भूमिस्थोनैषधश्चैवनिमि
षेणचसूचितः ॥ विलज्जमानावस्त्रांतंजग्राहायतलोचना ॥ ४१ ॥ स्कंधदेशेस्रजंचास्यासृजत्कमललोचना ॥ वरयामासचैवै
नंपतित्वेधर्मवत्सलम् ॥ ४२ ॥ ततोहाहेतिमनसाशब्दोमुक्तोजनाधिपैः ॥ देवैर्महर्षिभिश्चैवसाधुसाध्वितिभारत ॥ ४३ ॥
वृतेतुनैषधेभैम्यालोकपालामहौजसः ॥ प्रहृष्टमनसःसर्वेनलायाष्टौवरानददुः ॥ ४४ ॥ प्रत्यक्षदर्शनंयज्ञेगतिंचैवोत्तमांशुभा
म् ॥ नैषधायददौशक्रःप्रीयमाणःशचीपतिः ॥ ४५ ॥ अग्निरात्मभवंप्रादात्यत्रवांच्छतिनैषधः ॥ लोकेष्वात्मप्रभांचैव
ददौतस्मैहुताशनः ॥ ४६ ॥ यमस्त्वंतरसंप्रादाद्धर्मेचपरमांस्थितिं ॥ अपांपतिरपांभावंयत्रवांच्छतिनैषधः ॥ ४७ ॥ स्र

जंचोत्तमगंधाढ्यांसर्वेतेमिथुनंददुः ॥ एवंवरान्ददौचास्यदेवास्तेत्रिदिवंययुः ॥ ४८ ॥ पार्थिवाश्चानुभूयास्याविवाहंविस्मया
न्विताः ॥ दमयंत्याप्रमुदिताविप्राजग्मुर्यथागतम् ॥ ४९ ॥ अवाप्यनारीरत्नंतत्पुण्यश्लोकोनराधिपः ॥ रेमेसहतयाराजाश
च्येवबलवान्तया ॥ ५० ॥ अतीवमुदितोराजाभ्राजमानांशुभानिव ॥ रंचयन्वसुधांवीरोधर्मेणपरिपालयन् ॥ ५१ ॥ इं
द्रंचाप्यश्वमेधेनययातिरिवनाहुषः ॥ अन्यैश्चक्रतुभिर्धर्मान्बहुभिश्चाप्तदक्षिणैः ॥ ५२ ॥ पुनश्चरमणीयेषुवनेषूपवनेषुच ॥
दमयंत्यासहनलोविजहारामरोपमः ॥ ५३ ॥ एवंसयजमानस्तुविरराम नराधिपः ॥ ५४ ॥ इतिश्रीमहाभारतेभारतसारे
अरण्यपर्वणिनलोपाख्यानेद्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशेकलेःप्राप्तिर्नलराजेनृपोत्तमे ॥ तन्निमित्तमभूद्द्यूतंतत्ख्यातु
मिहवर्ण्यते ॥ १ ॥ बृहदश्वउवाच ॥ वृतेतुनैषधेभैम्यालोकपालामहौजसः ॥ यतोददृशुरायातंद्वापरंकलिनासह ॥ २ ॥
अथाब्रवीत्कलिंशक्रःसंप्रेक्ष्यबलवृत्रहा ॥ द्वापरेणसहायेनकलेब्रूहिक्वयास्यसि ॥ ३ ॥ ततोऽब्रवीत्कलिःशक्रंदमयंत्याःस्वयंवर
म् ॥ गत्वाहंवरयिष्येतांमनोहिममतद्गतम् ॥ ४ ॥ ततोऽब्रवीत्प्रहस्येंद्रोनिवृत्तःसस्वयंवरः ॥ वृतस्तयानलोराजापतिरस्मत्स
मीपतः ॥ ५ ॥ एवमुक्तस्तुशक्रेणकलिःकोपसमन्वितः ॥ देवानामंत्र्यतान्सर्वानुवाचेदंवचस्तदा ॥ ६ ॥ नन्वहंपातयेद्रा
ज्याद्दमयंतीयुतंनलम् ॥ यतोवृतानलंदेवीत्यक्त्वादेवान्मनोरमान् ॥ ७ ॥ एवमुक्तेनकलिनाप्रत्यूचुस्तंदिवौकसः ॥ कोहि
सर्वगुणोपेतंनलंनिंदतिधार्मिकम् ॥ ८ ॥ योनिंदतिकलेतंहिससर्जनरकंध्रुवम् ॥ एवमुक्त्वाकलिंदेवाद्वापरंश्चदिवंययुः ॥ ९ ॥
ततोगतेषुदेवेषुकलिर्द्वापरमब्रवीत् ॥ संहर्तुंनोत्सहेकोपंनलेवत्स्यामिद्वापर ॥ १० ॥ ध्वंसयिष्यामितंराज्यात्नभैम्याहिस
हासते ॥ त्वमप्यक्षान्समावेदकर्तुंसाहाय्यमर्हसि ॥ ११ ॥ बृहदश्वउवाच ॥ एवंससमयंकृत्वाद्वापरेणकलिस्तदा ॥ आज

गामयदातत्रयत्रराजासनैषधः ॥ १२ ॥ सनित्यमंतरंप्रेक्षन्निषधेष्ववसच्चिरम् ॥ अथास्यद्वादशेवर्षेददर्शकलिरंतरम् ॥
॥ १३ ॥ कृत्वामूत्रपुरीषंचसंध्यामास्तेसनैषधः ॥ अकृत्वापादयोःशौचंतत्रैनंकलिराविशत् ॥ १४ ॥ ससमाविश्यतुनलंस
मीपंपुष्करस्यच ॥ गत्वापुष्करमाहेदमेहिदीव्यनलेनवै ॥ १५ ॥ अक्षद्यूतेनलेनाथभवान्हिसहितोमया ॥ निषधान्प्रति
पद्यस्वजित्वाराजन्नलंनृपम् ॥ १६ ॥ एवमुक्तस्तुकलिनापुष्करोनलमभ्यगात् ॥ आसाद्यचनलंवीरंपुष्करःपरवीरहा ॥ १७ ॥
उवाचनैषधंतत्रनलंवीरात्मजंप्रति ॥ पुष्करउवाच ॥ एहिदीव्यामहेराजन्पाशकेनमुहुर्मुहुः ॥ नचेक्षमेततोराजामाव्हानंचम
हात्मनः ॥ १८ ॥ वैदर्भ्याःप्रेक्षमाणायाःक्षणःकालममन्यत ॥ १९ ॥ हिरण्यस्यचरत्नस्ययानयुग्मस्यवाससाम् ॥ आवि
ष्टःकलिनाद्यूतेजायतेस्मनलस्तदा ॥ २० ॥ तदक्षमदसंमत्तःसुहृद्वादोनकश्चन ॥ निवारणंभवेत्सद्योदीव्यमानमरिंदमम् ॥
॥ २१ ॥ ततःपौरजनाःसर्वेदुःखशोकसमन्विताः ॥ राजानंद्रष्टुमागच्छन्निवारयितुमातुराः ॥ २२ ॥ ततःसूतउपागत्यदम
यंत्यैन्यवेदयत् ॥ एवंपौरजनाःसर्वेद्वारितिष्ठंतिकार्यवान् ॥ २३ ॥ निवेद्यतांनैषधायसर्वाःप्रकृतयःस्थिताः ॥ अमृष्यमाणा
व्यसनंराज्ञोधर्मार्थदर्शिनः ॥ २४ ॥ ततःसाबाष्पकलयावाचादुःखेनमूर्च्छिता ॥ उवाचनैषधंभैमीशोकोपहतचेतना ॥ २५ ॥
राजन्पौरजनाद्वारित्वांसंद्रष्टुमिहागताः ॥ मंत्रिणस्त्वांमहाराजदिदृक्षवउपागताः ॥ २६ ॥ तान्द्रष्टुमर्हसीत्येवंपुनःपुनरभा
षत ॥ यांचयारुचिरापांगीविलपंतीसुमध्यमा ॥ २७ ॥ आविष्टःकलिनाराजानाभ्यभाषतकिंचन ॥ ततस्तेमंत्रिणःसर्वेतेचै
वपुरवासिनः ॥ नायंविरमतेद्यूतादित्युक्त्वागृहमाययुः ॥ २८ ॥ तदातद्भवनेद्यूतंपुष्करस्यनलस्यच ॥ युधिष्ठिरबहून्मासा
न्पुण्यश्लोकस्त्वजीजयत् ॥ २९ ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्यानेत्रयोविंशोऽध्यायः ॥ २३ ॥ चतुर्वि

शेसभार्य्यस्यधर्मस्थस्यनलस्यच ॥ गतंराज्यंक्षुधार्त्तस्यवार्त्ताचात्रनिगद्यते ॥ १ ॥ बृहदश्वउवाच ॥ दमयंतीततोदृष्ट्वापुण्य
श्लोकंनराधिपम् ॥ उन्मत्तवदुन्मथितंनैषधंगतचेतसम् ॥ २ ॥ बभूवोद्विग्नचित्तासाराजन्भीमसुताततः ॥ चिंतयामासत
त्कार्यंसुमहत्पार्थिवंप्रति ॥ ३ ॥ साचिंत्यमानातत्पापंचिकीर्षंतीचतत्प्रियम् ॥ नलंचहृतसर्वस्वमुपालभ्येदमब्रवीत् ॥ ४ ॥
राजन्वसुगतंद्यूतेहयानागाश्वतेगताः ॥ नावशिष्टंहितेकोशोद्रव्यंबलविवर्द्धनम् ॥ ५ ॥ तयोक्तंवचनंरामनस्येवंनधारयत ॥
पश्चाद्भीमसुतादेवीधात्रींपुनरभाषत ॥ ६ ॥ बृहत्सेनंपुनर्गच्छत्वंवार्ष्णेयममशासनात् ॥ सुतमानयकल्याणमहत्कार्यमुपस्थि
तम् ॥ ७ ॥ बृहत्सेनस्तुतच्छ्रुत्वादमयंत्याःप्रभाषितम् ॥ सुतमानाययामासपुरुषैराप्तकारिभिः ॥ ८ ॥ वार्ष्णेयंचततोभै
मीसांत्वयन्मधुरंगिरा ॥ उवाचदेशकालज्ञाप्राप्तकालमनिंदिता ॥ ९ ॥ जानीषेत्वंयथाराजासम्यग्वृत्तंयथाशुचिः ॥ तथा
विषमस्थितस्यसहायंकर्तुमर्हसि ॥ १० ॥ यथायथाहिनृपतिःपुष्करेणहिदीव्यते ॥ तथातथाऽस्यद्यूतेवैभूयोरोगःप्रवर्द्धते ॥
॥ ११ ॥ यथापुष्करस्यार्थेऽक्षावर्त्तंतेवशवर्तिनः ॥ तथाविपर्ययश्चापिनलस्याक्षेषुदृश्यते ॥ १२ ॥ सुहृत्स्वजनवाक्यानिय
थावन्नशृणोतिसः ॥ नूनंमन्येगताबुद्धिर्नैषधस्यमहात्मनः ॥ १३ ॥ यत्तुमेवचनंराजानाभिनंदतिमोहितः ॥ शरणंत्वांप्रपन्ना
स्मिसारथेकुरुमद्वचः ॥ १४ ॥ रथमारोप्यमेयुग्मंकुंडिनंयातुमर्हसि ॥ ममजातिषुनिक्षिप्यस्यंदनंबालकौतथा ॥ १५ ॥
आश्वास्यैतान्यथाकामंवसत्वंहात्रागत्यच ॥ दमयंत्याश्चतद्वाक्यंवार्ष्णेयोनलसारथिः ॥ १६ ॥ न्यवेदयद्विशेषेणनलामात्ये
षुमुख्यतः ॥ तैःसमेत्यविनिश्चित्यस्वनुज्ञातोमहीपतेः ॥ १७ ॥ ययौमिथुनमारोप्यविदर्भांस्तेनपापिना ॥ १८ ॥ हयांस्तत्र
सविन्यस्यततोवरवरंरथम् ॥ इंद्रसेनांचतांकन्यामिंद्रसेनंचबालकम् ॥ १९ ॥ आमंत्र्यभीमराजानमागतस्तुनलंप्रति ॥

अटमानस्ततोयोक्त्राजगामनगरींप्रति ॥ २० ॥ ऋतुपर्णंतुराजानमुपतस्थेसदुःखितः ॥ भृतिंचोपययौतस्यसारथ्येनमही
पतेः ॥ २१ ॥ बृहदश्वउवाच ॥ ततस्तुयातेवार्ष्णेयेपुण्यश्लोकस्यदीव्यतः ॥ पुष्करेणहृतंराज्यंयच्चान्यद्वसुकिंचन ॥ २२ ॥
हृतराज्यनलंराजन्प्रहसन्पुष्करोऽब्रवीत् ॥ द्यूतंप्रवर्त्ततांभूयःप्रतिपणोऽस्तिकस्तव ॥ २३ ॥ अतिष्ठद्दमयंत्येकासर्वमन्यत
हृतंमया ॥ दमयंत्याःपणंसाधुदीयतांयदिरोचते ॥ २४ ॥ पुष्करेणैवमुक्तस्यपुण्यश्लोकस्यमन्युना ॥ विदीर्यतेचहृदयंनचैनं
किंचिदब्रवीत् ॥ २५ ॥ ततःपुष्करमालोक्यनलःपरममन्युमान् ॥ उत्सृज्यसर्वगात्रेभ्योभूषणानिमहामनाः ॥ २६ ॥ एक
वासाअसंवीतोबहुशोकविवर्द्धनः ॥ निश्चक्रामतदाराजात्यक्त्वासविपुलांश्रियम् ॥ २७ ॥ दमयंत्येकवस्त्रातंगच्छंतंपृष्ठतोऽ
भ्यगात् ॥ सतयाबाह्यतःसार्द्धंत्रिरात्रंनैषधोऽवसत् ॥ २८ ॥ पुष्करस्तुमहाराजघोषयामासवैपुरे ॥ नलेयंसम्यगातिष्ठेसग
च्छेद्वध्यतांमम ॥ २९ ॥ पुष्करस्यतुवाक्येनतस्यविद्वेषणेनच ॥ पौराश्वनास्यसत्कारंकृतवंतोयुधिष्ठिर ॥ ३० ॥ हेतुवाक्ये
नचतथासत्कारार्होंनसत्कृतः ॥ त्रिरात्रमुषितोराजाजलमात्रेणवर्त्तयन् ॥ ३१ ॥ क्षुधासंपीड्यमानस्तुनदीतीरेनलस्तदा ॥
अपश्यन्मत्स्यहंतारंनदीतीरेनलस्तदा ॥ ३२ ॥ अपश्यन्मस्यहंतारंमत्स्यान्याच्यददौतदा ॥ दमयंतीकरेराजातदामत्स्या
नपश्यत ॥ ३३ ॥ कृतेस्नानेपुनाराजादमयंतीमभाषत ॥ दमयंतीत्वयामीनाभक्षितामांविहायवै ॥ अपश्यच्छकुनान्कांश्चि
त्वस्वेतन्मेभवेदिति ॥ ३४ ॥ तत्रतान्परिधानेनवाससातेनचावृणोत् ॥ तस्यतद्वस्त्रमासाद्यजग्मुःसर्वेविहंगमाः ॥ ३५ ॥
वयमक्षाःसुदुर्बुद्धेतवपाशाजिहीर्षवः ॥ उत्पतंतःखगास्तेतुवाक्यमाहुस्तदानलम् ॥ ३६ ॥ दृष्ट्वादिग्वाससंभूमौपक्षिणोविव
दंतिहि ॥ तान्समीक्ष्यगतानक्षानात्मानंचविवाससम् ॥ ३७ ॥ पुण्यश्लोकस्ततोराजादमयंतीमथाब्रवीत् ॥ येषांप्रकोपैरैश्व

यात्प्रच्युतोहमनिंदिते ॥ ३८ ॥ प्रायोऽहंतान्नविंदेतदुःखितःक्षुधयार्दितः ॥ येषांकृतेतेसत्कारमकुर्वन्मयिनैषधे ॥ ३९ ॥
तइमेशकुनाभूत्वावासोप्यपहरंतिमे ॥ वैषम्यंपरमंप्राप्तोदुःखितोवनगोचरे ॥ ४० ॥ भर्तातेऽहंनिबोधेदंवचनंहितमात्मनः ॥
एवंगच्छंतिपंथानोबहवोदक्षिणांदिशम् ॥ ४१ ॥ अवंतीमप्यवंतंचसमतिक्रम्यपर्वतम् ॥ एषविंध्योमहाशैलःपयोष्णीचसमु
द्रगा ॥ ४२ ॥ आश्रमाश्रमहर्षीणांनानावस्तुफलान्विताः ॥ एषपंथाविदर्भाणांयेनगच्छंतिकोशलान् ॥ ४३ ॥ अतःपरं
चदेशोऽयेदक्षिणेदक्षिणाभिधः ॥ ततःसाबाष्पकलयावाचादुःखेनकर्षिता ॥ ४४ ॥ उवाचदमयंतीदंनैषधंकरुणंवचः ॥
उद्वेपतेमेहृदयंसीदंत्यंगानिसर्वशः ॥ ४५ ॥ तवपार्थिवसंकल्पंवर्तयंत्याःपुनःपुनः ॥ हृतराज्यंहृतधनंविवस्त्रंक्षुधयान्वितं ॥
॥ ४६ ॥ कथमुत्सृज्यगच्छेयमहंत्वांविजनेवने ॥ श्रांतस्यतेक्षुधार्तस्यचिंतायानस्यतत्सुखम् ॥ ४७ ॥ वनेघोरेमहाराजना
शयिष्यामितेश्रमम् ॥ नहिभार्यासमंकिंचित्विद्यतेभेषजामृतम् ॥ ४८ ॥ औषधंसर्वदुःखेषुसत्यमेतद्ब्रवीमिते ॥ नलउ
वाच ॥ एवमेतद्यथात्थत्वंदमयंतीसुमध्यमे ॥ ४९ ॥ नास्तिभार्यासमंकिंचित्नरस्यार्तस्यभेषजम् ॥ नचाहंत्यक्तुमिच्छामि
किमर्थंभीरुसंकटे ॥ ५० ॥ त्यजत्वंभयमस्मत्तोत्यागजंभीमनंदिनी ॥ दमयंत्युवाच ॥ यदिमांत्वंमहाराजविहातुंत्वमिहे
च्छसि ॥ ५१ ॥ तत्कथंमेविदर्भाणांपंथासमुपादिश्यते ॥ अवैमिचाहंनृपतेनत्वंमांत्यक्तुमर्हसि ॥ ५२ ॥ चेतसात्वमकष्टेन
मात्यजेथामहीपते ॥ अतोनिमित्तंशोकंमेवर्द्धयिष्यसिशंकर ॥ ५३ ॥ यदिवायमभिप्रायस्तवराजन्व्रजेतिच ॥ सहितावेव
गच्छावोविदर्भान्यदिमन्यसे ॥ ५४ ॥ विदर्भराजस्तत्रत्वांपूजयिष्यतिमानद ॥ तेनत्वंपूजितोराजन्सुखंवससितद्गृहे ॥ ॥२७॥
॥ ५५ ॥ इतिश्रीमहाभारतेभारतसारेअरण्यपर्वणिनलोपाख्यानेचतुर्विंशोऽध्यायः ॥ २४ ॥ पंचविंशेतुराज्ञाश्चविरहश्चनल

स्यवै ॥ व्याधस्यमरणंचैवदुष्टबुद्धेश्चकथ्यते ॥ १ ॥ नलउवाच ॥ यथाराज्यंपितुस्तेचतथाममनसंशयः॥ नतुतत्रवसिष्यामिविष
मस्थःकथंचन ॥ २ ॥ परिभूतःपरेणाहंकथंतेपितृमंदिरे ॥ वसामिनिर्द्धनोभूत्वातवशोकविवर्द्धनः ॥ ३ ॥ श्वशुरस्यगृहेकां
तेसमृद्धोयदिगच्छति ॥ तदाश्वशुरलोकोऽयंसहर्षःसमभाषते ॥ ४ ॥ यदाहिनिर्द्धनोयातितिर्यग्भूत्वाप्रभाषते ॥ इतिब्रु
वन्नलोराजादमयंतींपुनःपुनः ॥ ५ ॥ सांत्वयामासकल्याणींवासार्द्धेनचसंवृताम् ॥ तदैकवस्त्रसंवीतावटमानावितस्ततः ॥
॥ ६ ॥ क्षुधार्तौसंपरिश्रांतौप्रपाकांचिदुपेत्यतौ ॥ तांप्रपामुपसंप्राप्यउवासनिषधाधिपः ॥ ७ ॥ वैदर्भ्यासहितोराजानिषसा
दमहीतले ॥ सवैविवस्त्रोमलिनोविकचःपांसुगुंठितः ॥ ८ ॥ दमयंत्यासहश्रांतःसुष्वापधरणीतले ॥ दमयंत्यपिकल्या
णीनिद्रयापहतातदा ॥ ९ ॥ सहसादुःखमासाद्यसुकुमारीमनस्विनी ॥ सुप्तायांदमयंत्यांतुनलोराजाविशांपतिः ॥ १० ॥
त्यक्तुकामश्चदयितांचिंतांचपरिचिंतयन् ॥ किंत्वेनांवनमध्येपुत्यक्ष्येवानगरेशुभे ॥ ११ ॥ त्यागेसुखंचवात्यागेविचार्यचपु
नःपुनः ॥ उत्सर्गमन्यतेश्रेयोदमयंत्यानराधिपः ॥ १२ ॥ सएकवस्त्रमात्मानंतस्याश्चाप्येकवस्त्रताम् ॥ चिंतयित्वाभ्यगाद्रा
जावस्त्रस्यार्द्धविकर्तने ॥ १३ ॥ कथंवासोविकर्तेऽहंयथाबुद्धेन्नमेप्रिया ॥ विचिंत्यैवंनलोराजाप्रियांपर्यचरत्तदा ॥ १४ ॥
आचचारप्रियामध्येविकोशंखड्गमुत्तमं ॥ तेनार्द्धवसनंकृत्वागृहीत्वाचपरंतपः ॥ १५ ॥ सुप्तामुत्सृज्यवैदर्भींप्राद्रवद्गतचेतनः
॥ १६ ॥ ततोनिबद्धहृदयःपुनरागत्यतांप्रियाम् ॥ दमयंतींतथादृष्ट्वारुरोदनिषधाधिपः ॥ १७ ॥ पुरावायुर्नचादित्यःपुरामे
नास्पृशतप्रियाम् ॥ सेयंमध्यसभामध्येशतेभूमावनाथवत् ॥ १८ ॥ इयंवस्त्रविकर्तेनसासुप्ताचारुहासिनी ॥ उन्मत्तेववरा
रोहाकथंबुद्धाभविष्यति ॥ १९ ॥ कथमेकाकिनीभैमीमयाविरहिताशुभा ॥ चरिष्यतिवनेघोरेमृगव्यालनिषेविते ॥ २० ॥

गत्वागत्वानलोराजापुनरेतिप्रियांमुहुः ॥ आकृष्यमाणःकलिनाअज्ञचित्तोभवत्तदा ॥ २१ ॥ द्विधैवंहृदयंतस्यदुःखितस्याभवत्त
दा॥दोलेवमुहुरायातियातिचैवप्रियांमुहुः॥२२॥ सोपकृष्टस्तुकलिनाधिकृष्टंप्राप्तवान्नलः ॥ सुप्तामुत्सृज्यतांभार्यांविलप्यकरुणं
बहु॥२३॥ नष्टात्माकलिनास्पृष्टस्तत्राविगणयन्नृपः॥जगामैवंवनेशून्येभार्यामुत्सृज्यदुःखितः ॥२४॥ बृहदश्वउवाच ॥अपक्रांते
नलेराजन्दमयंतीगतक्लमा ॥ अबुद्ध्यतवरारोहासंत्रस्ताविजनेवने ॥ २५ ॥ सापश्यमानाभर्तारंदुःखशोकसमन्विता ॥ आक्रो
शदुच्चैःसंत्रस्तामहाराजेतिनैषधं ॥ २६ ॥ हाहानाथमहाराजस्वामिन्किंत्वंजहासिमाम् ॥ हाहतास्मिविनष्टास्मिभीतास्मिविज
नेवने ॥ २७ ॥ ननुनाममहाराजधर्मज्ञःसत्यवागसि ॥ कथमेकाकिनींदीनांसुप्तामुत्सृज्यमांगतः ॥ २८ ॥ कृतस्तेपरिहासोयमे
तावत्पुरुषर्षभ ॥ भीतास्मिचमहाराजदर्शयात्मानमीश्वर ॥ २९ ॥ अदृश्योविजयाराजन्तेनात्मासंप्ररोपितः ॥ किंमांनभा
षसेराजन्विरहस्तवदह्यते ॥ ३० ॥ विलपंतींसमाश्वास्यनालिंगयसिपार्थिव ॥ नशोचाम्यहमात्मानंनचेदन्यंकथंचन ॥
॥ ३१ ॥ कथंतुभवितात्वेकइतिमत्वानुरोदिमि ॥ कथंतुराजन्तृषितःक्षुधितःश्रमकर्शितः ॥ ३२ ॥ सायान्हेवृक्षमूलेषुमाम
दृष्ट्वाविषीदसि ॥ ३३ ॥ ततःसाऽतीवदुःखार्त्तासंप्रदीप्तेवमन्युना ॥ इतश्चेतश्चरुदतीपर्यधावत्सुदुःखिता ॥ ३४ ॥ संभाषयवि
भोमांत्वमनाथांविजनेवने ॥ मुहुरुत्थायसाबालामुहुःपततिविव्हला ॥ ३५ ॥ उवाचभैमीविश्वस्यउदतिष्ठत्पतिव्रता ॥ य
स्मात्सयेनदुःखार्त्तोदुःखंविंदतिनैषधः ॥ ३६ ॥ तस्याधस्यमहद्दुःखंभवेदितिवचोमम ॥ अपापचेतसंपापोयएवंकृतवान्नलम् ॥
॥ ३७ ॥ सवैदुःखतरंप्राप्ययावज्जीवंभवेभवे ॥ एवंतुविलपंतीसाराज्ञोभार्यामहात्मनः ॥ ३८ ॥ अन्वेषमाणाभर्त्तारंवनेश्वा
पदसेविते ॥ उन्मत्तवद्भीमसुताविलपंतीमुहुर्मुहुः ॥ ३९ ॥ मार्गेचवर्त्तमानांतांनैषधागमकांक्षिणीम् ॥ ४० ॥ जग्राहाजग

रोग्राहोमहाकायःक्षुधान्वितः ॥ साग्रस्यमानाग्राहेणशोकेनचसमन्विता ॥ ४१ ॥ शोचत्यनाथंनात्मानंयथाशोचतिनैषध
म् ॥ हानाथमामिहवनेग्रस्यमानामनाथवत् ॥ ४२ ॥ ग्राहेणानेनहिपतेकिमर्थंनाभिधावसि ॥ शापान्मामधमांनारींत्यक्त
वान्निषधाधिपः ॥ ४३ ॥ श्रांतस्यतेक्षुधार्त्तस्यपरिम्लानस्यनैषध ॥ कःश्रमंराजशार्दूलनाशयिष्यतिमानद ॥४४॥ तदैकस्मिं
न्मृगव्याधोविचरन्गहनेवने ॥ श्रुत्वातांकरुणांवाचंजवेनायात्तदग्रतः ॥४५॥ तांसदृष्ट्वातथाग्रस्तामुरगेणायतेक्षणाम् ॥ चर
माणोमृगव्याधःसमतिक्रम्यवेगतः ॥ ४६ ॥ मुखतःपाटयामासतीक्ष्णशस्त्रेणपक्षिहा ॥ निर्विचेष्टंभुजंगंतंप्रविश्यमृगलुब्धकः
॥ ४७ ॥ मोक्षयित्वाऽथतांव्याधःप्रक्षाल्यसलिलेनहि ॥ समाश्वास्यकृताहारामथपप्रच्छभारत ॥ ४८ ॥ व्याधउवाच ॥
कस्यत्वंमृगशावाक्षीकथंचाभ्यागतावने ॥ कथमस्मिन्वनेघोरेप्राप्तवत्यसिभामिनी ॥ ४९ ॥ दमयंतीतथातेनपृच्छमानावि
शांपते ॥ सर्वमेवयथावृत्तमाचचक्षेहिभारत ॥ ५० ॥ तामर्धवस्त्रसंवीतांपीनश्रोणिपयोधराम् ॥ सुकुमारांनवीनांगींपूर्णचंद्र
निभाननाम् ॥ ५१ ॥ मृणालपत्रनयनांतथामधुरभाषिणीम् ॥ लक्षयित्वामृगव्याधःकामस्यवशमन्वगात् ॥ ५२ ॥ ताम
थश्लक्ष्णयावाचालुब्धकोमृगयुस्तथा ॥ सांत्वयामासकामार्तस्तदबुध्यतकामिनी ॥ ५३ ॥ दमयंतीतुतंदुष्टमुपलभ्यपतिव्र
ता ॥ तीव्ररोषसमाविष्टाप्रजज्वालेवमन्युना ॥ ५४ ॥ ननुपापमतिःक्षुद्रःपरासुर्मृगजीवकः ॥ उक्तमात्रेतुवचनेतयासमृगजीव
कः ॥ ५५ ॥ व्यसुःपपातमेदिन्यामग्निदग्धइवद्रुमः ॥ ५६ ॥ इतिश्रीमहाभारतेभारतसारेअरण्यपर्वणिनलोपाख्यानेपं
चविंशोऽध्यायः ॥ २५ ॥ षड्विंशेनलपत्न्याश्चकाननेतिविलापनम् ॥ मुनिभिःसहसंवादस्तस्याराज्ञाश्चकथ्यते ॥ १ ॥ बृह
दश्वउवाच ॥ ॥ सानिहत्यमृगव्याधंप्रतस्थेकमलेक्षणा ॥ वनंप्रतिभयंशून्यंझिल्लीकगणनादितम् ॥ २ ॥ सिंहव्याघ्रमृगद्वीपव

भारत राहवानरान्वितम् ॥ सर्पपल्लीगणाकीर्णम्लेच्छतस्करसेवितम् ॥ ३ ॥ शालवेणुनवाश्वत्थइंगुदीगुदकिंशुकैः ॥ पूर्णार्जुनवन सार.
च्छन्नंचंदनैश्चरशाल्मलैः ॥ ४ ॥ जंब्वाम्रलोध्रखदिरैस्तालवेत्रसमाकुलम् ॥ कालेयामलकप्लक्षकदंबोदुंबरावृतम् ॥ ५ ॥ ब
॥२९॥ दरीबिल्वसंच्छिन्नंमधुकैश्चसमाकुलम् ॥ प्रियालशषखर्जूरैर्हरीतकबिभीतकैः ॥ ६ ॥ नानाधातुशतान्रंध्रान्विविधानपिशाद्वला अ० २६
न् ॥ निकुंजान्पक्षिसंघुष्टान्हरिदश्वातदर्शनान् ॥ ७ ॥ नद्यःसरांसिवाप्यश्चविविधान्मृगपक्षिणः ॥ साबहून्भीमरूपांश्च
वनपर्व ३ पिशाचोरगराक्षसान् ॥ ८ ॥ पल्वलानितडागानिगिरिकूटानिसर्वशः ॥ नदीनांसंगमांश्चैवददर्शाद्भुतदर्शनान् ॥ ९ ॥ महि
ष्यांश्चवराहांश्चरिक्थखड्गसमन्वितान् ॥ प्रययौदद्दशेचात्रविदर्भाधिपनंदनी ॥ १० ॥ तेजसायशसारम्यास्थितापरमयायु
ता ॥ वैदर्भीविचरत्येकानलमन्वेषितासदा ॥ ११ ॥ नबीभत्सान्नृपसुताभैमीतत्रापिकुत्रचित् ॥ दारुणामटवींप्राप्यभर्तृव्य
सनपीडिता ॥ १२ ॥ विदर्भतनयाराजन्विललापसुदुःखिता ॥ भर्तृशोकपरीतांगीशिलातलसमाश्रिता ॥ १३ ॥ दमयंत्यु
वाच ॥ सिंहोरस्कमहाबाहोनिषधानांजनाधिप ॥ क्वनुराजन्जगामत्वंत्यक्त्वामांनिर्जनेवने ॥ १४ ॥ अश्वमेधादिभिर्वी
रक्रतुभिर्भूरिदक्षिणैः ॥ कथंकृतंनरव्याघ्रमयाचकर्ममुत्तमम् ॥ १५ ॥ यत्त्वयाचनरव्याघ्रमत्स्वपक्षंमहीपते ॥ स्मर्त्तुमिच्छ
सिकल्याणतद्व्रतंपार्थिवर्षभ ॥ १६ ॥ यथोक्तंविहगैर्हंसैःसमीपेनचभूमिप ॥ मत्सकाशेचतैरुक्तंतदेवक्षंतुमर्हसि ॥ १७ ॥ च
त्वारएकतोवेदाःसांगोपांगसमन्विताः ॥ स्वधीतंमनुजव्याघ्रसत्यंतात्किलएकतः ॥ १८ ॥ तस्मादर्हसिराजेंद्रसत्यंकर्तुंनरे
श्वर ॥ उक्तवानसियद्वीरमत्सकाशेपुराविभो ॥ १९ ॥ दृष्टाहंतवराजेंद्रजन्मजन्मनितेप्रिया ॥ अस्यामटव्यांघोरायांकिं ॥२९॥
मांनप्रतिभाषसे ॥ २० ॥ कर्षयत्येषमांदुष्टोभासोयंदारुणाकृतिः ॥ अरण्यराट्क्षुधाविष्टःकिंमांनत्रातुमर्हसि ॥ २१ ॥

त्वयोक्तांवाचमस्माकंयत्पुरासुखकारिणीम् ॥ तांसत्यांकुरुकल्याणभारतींजनवल्लभाम् ॥ २२ ॥ उन्मत्तांविलपंतींमांयांया
मिष्टांनराधिप ॥ ईप्सितामीप्सितोनाथकिंमांत्वंनप्रभाषसे ॥ २३ ॥ यूथभ्रष्टामिवैकांचहरिणींहरिणेक्षण ॥ नमांनयसिक
स्मात्त्वंरुदतीमरिकर्षण ॥ २४ ॥ कुलशीलोपसंपन्नांचारुसर्वांगशोभनाम् ॥ नाथत्वामनुपश्यामिगिरावच्मिनरोत्तम ॥
॥ २५ ॥ क्वचिद्दृष्टस्त्वयाशोकअंगशंसनलंनृपम् ॥ कोनुमेकथयेदद्यवनेस्मिन्शंकितंनलम् ॥ २६ ॥ निषधेषुमहाराजश्च शु
रोमेनरोत्तम॥ गृहीतनामाविख्यातोवीरसेनइतिस्मृतः ॥ २७ ॥ तस्यराज्ञःसुतोवीरःश्रीमान्सत्यपराक्रमः॥ क्रमप्राप्तंपितृरा
ज्यंराजासमनुशासति ॥ २८ ॥ नलोनामारिदमनःपुण्यश्लोकप्रकाशितः ॥ ब्रह्मण्योवेदविद्वाग्मीपुण्यकृत्समयोचितः ॥२९॥
तस्यमामबलांश्रेष्ठांविद्धिभार्यामिहागताम् ॥ अन्वेषमाणांभर्त्तारंत्वंमांपर्वतसत्तम ॥ ३० ॥ दमयंतीततोभूयोजगामदिशमु
त्तराम् ॥ सागत्वात्रीनहोरात्रान्चतुर्थेकाननंगता ॥ तापसारण्यमतुलंदिव्यंकाननसेवितम् ॥ ३१ ॥ वसिष्ठश्चात्रिभिर्यतत्
तापसैरुपशोभितं ॥ दमदानदयायुक्तैःशमसाम्यादिभिर्युतैः ॥ ३२ ॥ सोपवासैर्वायुभक्षैःशुष्कपर्णाशिनैस्तथा ॥ मासोपवासै
रेकांतैश्चतुर्थेहनिभोजनैः ॥ ३३ ॥ रूक्षाशनैश्चसर्वैश्चअन्नभक्षणकैस्तथा ॥ जलाग्निरवितापैश्चमेववृष्टिसहैस्तथा ॥ ३४ ॥
समैर्मानापमानैश्चजटिलैर्नखधारकैः ॥ दंडधारैरदंडैश्चकाषायवल्कलान्वितैः ॥ ३५ ॥ जितेंद्रियैर्महाभागैर्वल्कलाजिनसंयु
तैः ॥ तापसैःसमुपेतंचवनंदृष्ट्वाप्रहर्षिता ॥ ३६ ॥ सर्वांगसुंदरीरम्यासर्वलक्षणसंयुता ॥ दमयंतीवरारोहावीरसेनसुतप्रिया
॥ ३७ ॥ साभिवंद्यतपोवृद्धान्विनयावनतस्थितान् ॥ स्वागतंसुसतीप्रोक्तातैःसर्वैस्तापसैस्तदा ॥ ३८ ॥ पूजांचास्याययथा
न्यायंकृत्वातत्रतपोधनाः ॥ इत्यूचुस्तेतथातांतुशंसकिंकरवामहे ॥ ३९ ॥ तानुवाचवरारोहासर्वकर्मसुसादरा ॥ कुशलंपृच्छ

मानासाऋषीणामूर्द्ध्वरेतसाम् ॥ ४० ॥ तैरुक्तंकुशलंभद्रेसर्वत्रेतितपस्विनी॥ सर्वांगसुंदरीरम्याकथंदुःखमवाप्स्यसि ॥ ४१ ॥
अनेनैवतुदेहेनशीतवातादिदुष्कृतम् ॥ कथंतुक्षमितंसुभ्रूतन्मांकथितुमर्हसि ॥ ४२ ॥ दमयंत्युवाच ॥ नाहंदेवीतथायक्षीना
हंपर्वतदेवता ॥ नाहंजलचरीदेवीविद्धिमांमानुषींद्विज ॥ ४३ ॥ विस्तीर्णादभिधास्यामितन्मेशृणुतसर्वतः ॥ विदर्भतनयांमांतु
वीरसेनात्मजप्रियां॥ ४४ ॥पूर्वकर्मविपाकेनतवपार्श्वगतांद्विज ॥अन्वेषमाणाभर्त्तारंनलंरणविशारदम् ॥४५॥ महात्मानंकृतास्त्रं
चविचरामीहदुःखिता॥यदकैश्चिदहोरात्रैर्नद्रक्षामिनलंनृपम् ॥४६॥ आत्मानंश्रेयसायुक्तदेहस्यांतंकरोम्यहम्॥नारीणामधमा
नारीयाभर्त्तुःप्राणसंक्षये ॥ ४७ ॥ पश्चाज्जीवतिनिस्तेजाकुलेवाशशिनोदिवा ॥ तथाविलपतीमेकामरण्येभीमनंदिनीम् ॥४८॥
दमयंतीमथोचुस्तेतापसाःसत्यवादिनः ॥ उदर्कस्तवकल्याणंकल्याणिभविताशुभे ॥ ४९ ॥ वयंपश्यामस्तपसाक्षिप्रंद्रक्षसि
नैषधम् ॥ विमुक्तंसर्वपापेभ्यःसर्वरत्नसमन्वितम् ॥ ५० ॥ तदेववचनंश्रेष्ठंप्रशंसंतमरिंदमम् ॥ पतिंद्रक्षसिकल्याणीकल्या
णाभिमुखंनृपम् ॥ ५१ ॥ सादृष्ट्वामहदाश्चर्यंविस्मिताह्यभवत्तदा ॥ किंनुस्वप्नोमयादृष्टःकोऽयंविधिरिहाभवत् ॥ ५२ ॥
क्वनुतेतापसाःसर्वेक्वतदाश्रममंडलम् ॥ एवंध्यात्वाभीमसुतादमयंतीशुचिस्मिता ॥ ५३ ॥ तापसैर्वद्यमानातुजगामगहनंव
नम् ॥ तत्रापश्यत्सार्थवाहंवृषभैश्वसमन्वितम् ॥ ५४ ॥ सादृष्ट्वैवमहासार्थंनलपत्नीयशस्विनी ॥ उपसृप्यवरारोहावनमध्ये
विवेशह ॥ ५५ ॥ उन्मत्तवत्भीमसुतांतथावस्त्रार्द्धसंवृताम् ॥ कृशांविवर्णांविकलांमुक्तलब्धशिरोरुहाम् ॥ ५६ ॥ तांदृष्ट्वात
त्रसुःकेचित्केचिद्भीताःप्रदुद्रुवुः ॥ केचिद्भ्रष्टाःपुरस्तस्थुःकेचित्तत्रविचुक्रुशुः ॥ ५७ ॥ प्रहसंतिचतांकेचिदभ्यसूयंतिचापरे ॥
चक्रुस्तस्यांदयांकेचित्पप्रच्छुश्चापिभारत ॥ ५८ ॥ कासिकस्यासिकल्याणिकिंवामृगयसेवने ॥ तांदृष्ट्वाव्यथिताःकेचित्किं

59

वात्वमसिमानुषी ॥ ५९ ॥ वदसत्यंवनस्यास्यपर्वतस्याधिदेवता ॥ देवतात्वंहिकल्याणीत्वांवयंशरणंगताः ॥ ६० ॥ यक्षी
चराक्षसीवात्वमुताहोसिवरांगना॥सर्वथाकुरुनःस्वस्तिरक्षस्वास्माननिंदिते ॥६१॥ यथायंसर्वथासार्थःक्षेमीशीघ्रमथोव्रजेत् ॥
तथाकुरुष्वकल्याणीयथाश्रेयोभवेदिति ॥ ६२ ॥ तथोक्तातेनसार्थेनभोभोसार्थस्यवाहक ॥ प्रत्युवाचतथासार्थंदमयंतीनृ
पात्मजा ॥ ६३ ॥ भर्तुर्व्यसनदुःखार्त्तायेचैवात्रसमागताः ॥ युवस्थविरबालाश्चसार्थस्यचपुरोगमाः ॥ ६४ ॥ मानुषींमांवि
जानीतमनुजाधिपतेःसुताम् ॥ नृपस्नुषांराजभार्यांभर्तुर्दर्शनलालसाम् ॥ ६५ ॥ विदर्भराट्ममपिताभर्ताराजापिनैषधः ॥
नलोनाममहाभागामार्गयाम्यपराजितम् ॥ ६६ ॥ यदिजानीतनृपतिंक्षिप्रंशंसतमेप्रियम् ॥ नलंपुरुषशार्दूलममित्रगणसूदन
म् ॥ ६७ ॥ तामुवाचानवद्यांगींसार्थःप्रतिवचःप्रभुः ॥ सार्थवाहःशुचिर्नामशृणुकल्याणिमद्वचः ॥ ६८ ॥ अहंसार्थस्यने
तावैसर्वेषामधिपःप्रिये॥मनुष्यंनलनामानंनपश्यामियशस्विनी॥६९॥ साब्रवीद्वणिजान्सर्वान्सार्थवाहंचततः॥ कुत्रयास्य
सिसार्थस्त्वमेतदाख्यातुमर्हसि ॥ ७० ॥ सार्थवाहउवाच॥ सार्थोऽहंचेदिराजस्यसुबाहोःसत्यदर्शिनः॥ क्षिप्रंजनपदंगंताना
थोऽयंमनुजात्मजे ॥ ७१ ॥ इतिश्रीमहाभारतेभारतसारेअरण्यपर्वणिनलोपाख्यानेषड्विंशोऽध्यायः ॥२६॥ सप्तविंशेचसूतेन
सार्थेनसहितासती ॥ तंहित्वाविपिनेचैद्यंपुरंप्रापेतिउच्यते॥ १ ॥ बृहदश्वउवाच ॥ सातच्छ्रुत्वानवद्यांगीसार्थवाहवचस्तदा ॥
आगच्छद्राजशार्दूलविद्युल्लेखेवशारदी॥ २ ॥ सार्थेनसहदुःखार्ताभर्तुर्दर्शनलालसा॥ रजसासमवच्छिन्नासार्थेनचशुचिस्मिता
॥ ३ ॥ अनभिज्ञायमानेवगच्छंतीसुमहद्वनम् ॥ आससादसरोरम्यंभास्करेऽस्तंगतेसति ॥ ४ ॥ शीततोयंसुविपुलंनिर्म
लंनवपंकजम् ॥ कल्हारैःसमवच्छिन्नंपद्मोत्पलविराजितम् ॥ ५ ॥ हंसकारंडवाकीर्णंचक्रवाकोपशोभितम् ॥ तदाश्रित्यस

सार्थस्तुनिवासायोपजग्मिवान् ॥ ६ ॥ भारार्ताःसौरभेयाश्चक्षुत्तृषापरिवारिताः ॥ अवरोपितभारास्तुलेभिरेपरमंसुखम् ॥
॥ ७ ॥ तथाश्वावारुणाश्चैवरासभाःकलभैर्युताः ॥ अदृष्ट्वैवसरोरम्यमाश्वासंपरमंययुः ॥ ८ ॥ अथोऽन्यतरमेवाहेवणिजः
पथिकास्तथा ॥ यथायोग्यंयथास्थानमावासंप्रतिपेदिरे ॥ ९ ॥ चक्रुःपंथाश्चविविधाःक्रयविक्रययोगिनः ॥ प्रशंसंत्यपरेक्र
ष्टामटवींश्वापदावृताम् ॥ १० ॥ स्मरंतोगृहभोगांश्चज्ञातीनांचसमागमम् ॥ पुत्रमित्रकलत्राणिसर्वेनिद्रावशंययुः ॥ ११ ॥
अथार्द्धरात्रसमयेगजयूथंमहत्तदा ॥ आजगामतत्रराजन्पानार्थंहिजलस्यच ॥ १२ ॥ अथापश्यत्सार्थयूथंसार्थजान्सुबहू
न्गजान् ॥ तेतान्ग्राम्यगजान्दृष्ट्वासर्वेवनगजास्तदा ॥ १३ ॥ समागमंतोवेगेनजिघांसंतोमदोत्कटाः ॥ तेषामापततांवे
गःकरिणांदुःसहोऽभवत ॥ १४ ॥ वनगजैर्ग्राम्यगजानीतामृत्युवशंक्षणात् ॥ सचसार्थोपिमथितःसस्त्रीबालगजान्वितः ॥
॥ १५ ॥ आरावःसुमहांश्चासीत्त्रैलोक्यभयकारकः ॥ वाजिभिःप्राद्रुतैश्चैवसाहाय्यैरासभैस्तथा ॥ १६ ॥ अन्योन्यंनाभ्य
रक्षंतमथ्यमानावनद्विपैः ॥ सार्थवाहउवाच ॥ हतोभ्राताहतःपुत्रःसाहायोनिहतोमम ॥ १७ ॥ एषोग्निरुत्थितःकष्टंत्रायध्वं
धावताऽधुना ॥ रत्नराशिर्विशिर्णोयंगृण्हीध्वंकिंप्रधावत ॥ १८ ॥ इतितेवचनंश्रुत्वावेगतःपुनरागताः ॥ पतितंवसुगृण्हंति
हाहेतिप्रवदंतिच ॥ १९ ॥ शापस्यदुष्कृतंयच्चसर्वलोकभयंकरम् ॥ अदृष्टपूर्वंतदृष्ट्वाबालापद्मनिभेक्षणा ॥ २० ॥ संत्रस्ता
चवनेतस्मिन्तस्थौशशिनिभानना ॥ सर्वैर्विध्वंसितैर्भग्नैरत्नहीरप्रवालकैः ॥ २१ ॥ विक्षिप्तैर्भातिभूःसर्वाद्यौऋक्षैरिवशार
दा ॥ २२ ॥ येतुतत्रापिनिर्मुक्ताःसार्थाःकेचिदलक्षिताः ॥ तेब्रुवन्सहिताःसर्वेकस्येदंकर्मणःफलम् ॥ नूनंनपूजितोऽस्माभिर्मणि
भद्रोमहायशाः ॥ २३ ॥ तथायक्षाधिपःश्रीमान्नचवैश्रवणःप्रभुः ॥ यासावद्यमहासार्थेनारीह्युन्मत्तदर्शना ॥ २४ ॥ प्र



60

विष्टाविकृताकाराकृत्वारूपमनुत्तमम् ॥ शकुनानांफलंवाथविपरीतमिदंध्रुवम् ॥ २५ ॥ ग्रहावाविपरीतास्तेकिमन्यदिदमाग
तम् ॥ अपरेत्वब्रुवन्दीनाज्ञातिद्रव्यविनाकृताः ॥ २६ ॥ रूपंतुमानुषंकृत्वासार्थवाहःसमागतः ॥ यादृष्टाविंशतिपूर्वमाया
परमदारुणा ॥ २७ ॥ राक्षसीवाध्रुवंयक्षीपिशाचीवाभयंकरी ॥ तस्याःसर्वमिदंपापंनात्रकार्याविचारणा ॥ २८ ॥ यदिप
श्यामतांपापांसार्थघ्नींनैकदुष्कृताम् ॥ ग्रावाणैःपांसुभिश्चैवतृणैःकाष्ठैश्चमुष्टिभिः ॥ २९ ॥ अवश्यमेवहंस्यामःसातुसार्थस्यकृ
त्यता ॥ दमयंतीतुतच्छ्रुत्वावाक्यंतेषांसुदारुणम् ॥ ३० ॥ भीताभीताचसंवीताप्राद्रवच्चान्यकाननम् ॥ आशंकमानातत्पा
पंनात्मानंपर्यनंदयत् ॥ ३१ ॥ अहोममोपरिबद्धःसंरंभोदारुणोमहान् ॥ नानुबध्नातिकुशलंकस्येदंकर्मणःफलम् ॥ ३२ ॥
नूनंजन्मांतरकृतंपापमापतितंमहत् ॥ भर्त्रासहवियोगश्चतनयाभ्यांचविच्युतिः ॥ ३३ ॥ सोऽपिपार्थःपरावीतोदैवेनविधिना
ध्रुवम् ॥ आशंकतेचमांपापामहोदैवविचित्रता ॥ ३४ ॥ कुत्रात्मानंपालयेऽहंयामिचक्कउआश्रयं ॥ अन्यथानभवेच्छांतिर्ध्रु
वंदेहस्यपातनात् ॥ ३५ ॥ इतिश्रीमहाभारतेभारतसारेअरण्यकेनलोपाख्यानेसप्तविंशोऽध्यायः ॥ २७ ॥ अष्टाविंशेनल
स्यैवनागेनसहसंगमः ॥ कर्कोटकेनतत्तस्यसुखकारणमुच्यते ॥ १ ॥ बृहदश्वउवाच ॥ एवंसादुःखसंतप्ताभर्तुर्व्यसनकर्शि
ता ॥ आक्रम्यसावनंघोरंययौचेदिपुरंप्रति ॥ २ ॥ सायान्हेचेदिराजस्यसुबाहोःसत्यदर्शिनः ॥ कृतवासोर्द्धसंवीताप्रविवेश
पुरोत्तमम् ॥ ३ ॥ तांविवर्णांकृशांदीनांमुक्तकेशींमलीमसाम् ॥ उन्मत्तामिवगच्छंतींददृशुःपुरवासिनः ॥ ४ ॥ प्रविशंतींतुतां
दृष्ट्वाचेदिराजपुरेजनाः ॥ अनुजग्मुस्तत्रबालांराजपुत्रींकुतूहलात् ॥ ५ ॥ सातैःपरिवृतागच्छत्समीपंराजवेश्मनः ॥ तांप्रासा
दगतांदृष्ट्वाराजमाताजनैर्वृताम् ॥ ६ ॥ धात्रीमुवाचगच्छेमामानयत्वंममांतिकम् ॥ राजमातुर्वचःश्रुत्वागताधात्रीतदंतिकम्

॥ ७ ॥ उवाचमधुरंवाचाभैमिजाशोककर्शिताम् ॥ उन्मत्तवेषप्रच्छन्नांश्रीरिवायतलोचनाम् ॥ ८ ॥ बिभर्षिपरमंरूपंविद्युल्ले
खेवशोभसे ॥ संशयःकासिकस्यावानतेरूपंहिमानुषम् ॥ ९ ॥ तच्छ्रुत्वावचनंतस्याभैमीवचनमब्रवीत् ॥ मानुषींमांविजा
नीहिभर्त्तारंसमनुव्रताम् ॥ १० ॥ सैरंध्रीव्रतमापन्नांभर्तुर्व्यसनपीडिताम् ॥ फलमूलाशनामेकांयत्रसायंप्रतिश्रया ॥ ११ ॥
भर्तामेनैषधोदेविसद्यूतेनपरैर्जितः ॥ राज्यंत्यक्त्वासभूपालःकस्मिंश्चिद्विपिनेगतः ॥ १२ ॥ कतिचिद्दिवसास्तत्रमयासार्द्धंवि
निर्गतः ॥ ततोबहुतिथेकालेसुप्तामुत्सृज्यसक्कचित ॥ १३ ॥ वाससोर्द्धंपरिच्छिद्यत्यक्तवान्मामनागताम् ॥ तंमार्गमाणाभ
र्तारंदह्यमानादिवानिशम् ॥ १४ ॥ नवदाम्यपरंसुभ्रुकथंदेशांतरंगतः ॥ इतितस्यावचःश्रुत्वाराजमाताऽब्रवीद्वचः ॥ १५ ॥
वसत्वमपिकल्याणिमतिर्मेपरमात्वयि ॥ मार्गयिष्यंतितेभद्रेभर्तारंपुरुषाभम ॥ १६ ॥ अथवास्वयमागच्छेत्परिधावन्नित
स्ततः ॥ इहैववसत्वंबालेभर्तारमुपलप्स्यसि ॥ १७ ॥ राजमातुर्वचःश्रुत्वादमयंतीवचोऽब्रवीत् ॥ समयेनोत्सहेवस्तुंत्वयि
वीरप्रयायिनि ॥ १८ ॥ उच्छिष्टंनैवभुंजीयान्नकुर्यात्पादसेवनम् ॥ नचाहंपुरुषानन्यान्संभाषेयंकथंचन ॥ १९ ॥ प्रार्थयेद्य
दिमांकश्चिद्दंड्यस्तुपुरुषोभवेत् ॥ भर्तुरन्वेषणार्थंतुप्रेषयब्राह्मणान्मम ॥ २० ॥ यद्येवमिहकर्त्तव्यंवसाम्यहमसंशयम् ॥
अतोऽन्यथामेवासोनभविष्यतिममाधुना ॥ २१ ॥ तांप्रहृष्टेनमनसाराजमातेदमब्रवीत् ॥ सर्वमेतत्करिष्यामिदिष्ट्यातेव्रत
मीदृशम् ॥ २२ ॥ एवमुक्तात्ततोभैमींराजमाताविशांपते ॥ उवाचेत्थंदुहितरंसुनंदांनामभारत ॥ २३ ॥ सैरंध्रीमभिजानी
हिसुनंदेदेविरूपिणीम् ॥ अनयासहमोदस्वनिर्विघ्नमनसासदा ॥ २४ ॥ युधिष्ठिरउवाच ॥ ददर्शदावंदह्यंतंतत्रसत्वंनिर्जनेव
ने ॥ तत्रशुश्रावमध्येऽग्नेःशब्दंभूतस्यकस्यचित ॥ २५ ॥ कोपिमोचयतेत्युच्चैःपुण्यश्लोकस्तुकोभवेत् ॥ बृहदश्वउवाच ॥

माभैरितिनलश्चोक्त्वामध्येऽग्नेःप्राविशत्स्वयम् ॥ ददर्शनागराजानंशयानंकुंडलीकृतम् ॥ २६ ॥ सनागःप्रांजलिर्भूत्वावेपमा
नोनलंतदा ॥ उवाचविद्धिमांनागंराजन्कर्कोटकंनृपम् ॥ २७ ॥ मयाप्रलब्धोब्रह्मर्षिःसुसंतःसुमहातपाः ॥ तेनमन्युपरीतेन
शप्तोऽस्मिमनुजाधिप ॥ २८ ॥ तस्यशापान्नशक्रोमिवनाद्दिचलितुंपदम् ॥ उपदिशामितेश्रेयोभवान्मांत्रातुमर्हसि ॥ २९ ॥
सखाचतेभविष्यामिमत्समोनास्तिपन्नगः ॥ लघुश्चतेभविष्यामिशीघ्रमादायगच्छमाम् ॥ ३० ॥ एवमुक्त्वासनागेंद्रोबभू
वांगुष्ठमात्रकः ॥ तंगृहीत्वानलःप्रायात्तंदेशंदाववर्जितम् ॥ ३१ ॥ आकाशदेशमासाद्यविमुक्तंकृष्णवर्त्मना ॥ उत्सृष्टकामंतं
नागःकर्कोटकोऽब्रवीद्दचः ॥ पदानिगणयन्नंगस्वामिन्नैषधकानिचित ॥ ३२ ॥ तत्रदेहंमहाराजश्रयामियत्परंतपः ॥ ततः
संख्यातुमारब्धमदृशंदशमेपदे ॥ ३३ ॥ तस्याद्दष्टस्यतद्रूपंक्षिप्रमंतरधीयत ॥ सद्दष्ट्वाविस्मितस्तस्थावात्मानंविकृतंनलः ॥
॥ ३४ ॥ स्वरूपधारिणंनागमदृश्यंचमहीपतिः ॥ ततःकर्कोटकोनागःसांत्वयन्नलमब्रवीत् ॥ ३५ ॥ नागउवाच ॥ मयातें
तर्हितंरूपंनत्वांविदुर्जनाइति ॥ ३६ ॥ कर्कोटकस्यनागस्यदमयंत्यानलस्यच ॥ ऋतुपर्णस्यराजर्षेःकीर्तनंकलिनाशनम् ॥
॥ ३७ ॥ यत्कृतेदुःखसंयुक्तोदुःखेनमहतानल ॥ ३८ ॥ विषेणचमदीयेनविषदोषैर्नबाध्यसे ॥ विषेणसंवृतैर्गात्रैर्यावंतिन
विमोक्ष्यसे ॥ ३९ ॥ तावत्त्वयिमहाराजदुःखंचैतन्नवत्स्यति ॥ यतोमेवन्हिदाहाद्वैरक्षामेभवताकृता ॥ ४० ॥ तेनाभयंनर
व्याघ्रदंष्ट्रिभिःशत्रुतोऽपिवा ॥ ४१ ॥ ब्रह्मवित्त्वंचभवितामत्प्रसादान्नराधिप ॥ राजन्विषनिमित्ताचनतेपीडाभविष्यति ॥
॥ ४२ ॥ संग्रामेषुचराजेंद्रत्वंजयंतमवाप्स्यसि ॥ गच्छराजन्नितःसूतोबाहुकोऽहमितिब्रुवन् ॥ ४३ ॥ समीपेऋतुपर्णस्य
सहिवेदाक्षनैपुणम् ॥ अयोध्यांनगरींरम्यामद्यैवनिषधेश्वर ॥ ४४ ॥ सतेक्षहृदयंदीनंराजात्वंसौहृदेनवै ॥ इक्ष्वाकुकुलजः

श्रीमान्मित्रंचैवभविष्यति ॥ ४५ ॥ भविष्यतियक्ष्ययज्ञैःश्रेयसायोक्षसेतदा ॥ समेष्यसिचदारैस्त्वंमास्मशोकेमनःकृथाः
॥ ४६ ॥ राज्ञाचतनयाभ्यांचसत्यमेतद्ब्रवीमिते ॥ स्वरूपंचयदाद्रष्टुमिच्छसित्वंनराधिप ॥ ४७ ॥ स्मर्त्तव्यस्तुतदाहंवैवा
सश्चैवंनिवासये ॥ अनेनवाससाच्छन्नंस्वरूपंप्रतिपश्यसे ॥ ४८ ॥ इत्युक्त्वाप्रददावस्मैदिव्यंवासोयुगंतदा ॥ एवंनलंसमा
दिश्यवासोदत्वाचकौरव ॥ ४९ ॥ नागराजस्ततोराजन्तत्रैवांतरधीयत ॥ ५० ॥ इतिश्रीमहाभारतेभारतसारेअरण्यकेन
लोपाख्यानेअष्टाविंशोऽध्यायः ॥ २८ ॥ एकोनत्रिंशईशेंद्रऋतुपर्णपुरंगतः ॥ दूतान्संप्रेषयामासभीमोपित्विहकथ्यते ॥ १ ॥
बृहदश्वउवाच ॥ तस्मिन्नंतर्हितेनागेप्रययौनैषधोनलः ॥ ऋतुपर्णस्यनगरंप्राविशद्दशमेऽहनि ॥ २ ॥ सराजानमुपाविष्टंबा
हुकोऽहमितिब्रुवन् ॥ अश्वानांवाहनेयुक्तोभूतलेनास्तिमत्समः ॥ ३ ॥ अर्थकृच्छ्रेषुचैवाहंप्रष्टव्योनिपुणेषुच ॥ अन्नसंस्का
रमपिचजानाम्यन्यद्विशेषतः ॥ ४ ॥ यानिशिल्पानिलोकेस्मिन्यच्चान्यत्सुदुष्करम् ॥ सर्वंयतिष्येतत्कर्तुंऋतुपर्णभजस्व
माम् ॥ ५ ॥ ऋतुपर्णउवाच ॥ वसबाहुकभद्रंतेसर्वमेतत्करिष्यति ॥ शीघ्रयानेसदाबुद्धिर्दीयतांमेविशेषतः ॥ ६ ॥ सर्वमा
तिष्ठतंयोगंयेनशीघ्रंहयामम ॥ भवेयुरश्वाध्यक्षोऽसिवेतनंतेशताधिकम् ॥ ७ ॥ त्वामुपस्थास्यतश्चेमौनित्यंवार्ष्णेयजीवलौ ॥
एताभ्यांरंस्यसेसार्द्धंवसवैमयिबाहुक ॥ ८ ॥ बृहदश्वउवाच ॥ एवमुक्तोनलस्तेनन्यवसत्तत्रपूजितः ॥ ऋतुपर्णस्यनगरेसवा
र्ष्णेयःसजीवलः ॥ ९ ॥ सहितत्रावसन्राजावैदर्भीमनुचिंतयन् ॥ सायंकालेतदाराजाश्लोकमेकंजगादह ॥ १० ॥ क्वनुसा
क्षुत्पिपासार्ताश्रांताशेतेतपस्विनी ॥ स्मरंतीममंदस्यकोवासोधोपतिष्ठति ॥ ११ ॥ एवंब्रुवंतंराजानंनिशायांजीवलोऽब्रवीत् ॥
कामेनांशोचसेनित्यंश्रोतुमिच्छामिबाहुक ॥ १२ ॥ तमुवाचततोराजामंदप्रज्ञस्यकस्यचित् ॥ आसीद्बहुमतानारीतस्यादृढ

तरंचसः ॥ १३ ॥ सवैकेनचिदर्थेनतयामंदोवियुज्यत ॥ विप्रयुक्तेनमंदात्माविभ्रमन्दुःखपीडितः ॥ १४ ॥ दह्यमानःसशो
केनदिवारात्रमतंद्रितः ॥ निशाकालेस्मरंत्यस्याःश्लोकमेकंस्मगायति ॥ १५ ॥ सवैभ्रमन्महींसर्वांक्वचिदासाद्यकिंचन ॥ अ
वसद्दुःखसंयुक्तोभूयएवानुसंस्मरन् ॥ १६ ॥ सातुतंपुरुषंनारीकृच्छ्रेष्वनुगतावने ॥ त्यक्तातेनाल्पपुण्येनदुष्करंयदिजीवति ॥
॥ १७ ॥ एकाबालानभिज्ञाचमार्गमाणातथोचिता ॥ क्षुत्पिपासापरीताचदुष्करंयदिजीवति ॥ १८ ॥ श्वापदाचरितेनित्यं
वनेमहतिदारुणे ॥ त्यक्तातेनाल्पभाग्येनमंदप्रज्ञेनमारिष ॥ १९ ॥ इत्येवंनैषधोराजादमयंतीमनुस्मरन् ॥ आज्ञावान्सम
वसद्राज्ञस्तस्यनिवेशने ॥ २० ॥ बृहदश्वउवाच ॥ हृतराज्येनलेभीमःसभार्येप्रेक्षतांगते ॥ द्विजान्प्रस्थापयामासनलदर्श
नकांक्षया ॥ २१ ॥ संदिदेशचतान्भीमोवसुदत्वातिपुष्कलम् ॥ मृगयध्वंनलंचैवदमयंतींचमेसुताम् ॥ २२ ॥ अस्मिन्क
र्मणियत्नेनविज्ञातेवसुधाधिपे ॥ गोसहस्रंप्रदास्यामितनयाशुद्धिकारणात् ॥ २३ ॥ मुक्ताहारंचदास्यामिग्रामंनगरसन्नि
भम् ॥ नचेच्छक्याविहानेतुंदमयंतीनलौतथा ॥ २४ ॥ ज्ञातमात्रेपिदास्यामिगवांदशशतंधनम् ॥ इत्युक्तास्तेययुर्हृष्टाब्रा
ह्मणाःसर्वतोदिशम् ॥ २५ ॥ पुरराष्ट्रान्विचिन्वंतोनैषधंसहभार्यया ॥ गतश्चेदिपुरींरम्यांसुदेवोनामवैद्विजः ॥ २६ ॥ वि
चिन्वन्नथवैदर्भीमपश्यद्राजवेश्मनि ॥ धर्मस्थानेवरेराज्ञःसुनंदासहितांस्थिताम् ॥ २७ ॥ मंदप्रज्ञानुमानेनरूपेणाप्रतिमेन
ताम् ॥ पिनद्धांभूतिजालेनप्रभामिवविभावसोः ॥ २८ ॥ तांसमीक्ष्यविशालाक्षीमधिकांमलिनांकृशाम् ॥ तर्कयामासभैमी
तिकारणैरुपपादयत् ॥ २९ ॥ इतिश्रीमहाभारतेभारतसारेअरण्यकेनलोपाख्यानेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ त्रिंशे
तुदमयंत्याश्चसुदेवस्यसमागमः ॥ चैद्यादीनांमहाहर्षोविशोकश्चापिकथ्यते ॥ १ ॥ सुदेवउवाच ॥ यथेयंमेपुरादृष्टातथारू

पेयमंगना ॥ अंगनेयंपुराहृष्टामन्मथस्यरतिर्यथा ॥ २ ॥ कुर्वतीप्रभयादीप्तंपूर्णचंद्रप्रभामिव ॥ कृतार्थोस्म्यद्यदृष्ट्वेमांलोकः
कांतामिवप्रियम् ॥ ३ ॥ पूर्णचंद्राननांश्यामांचारुवृत्तपयोधराम् ॥ कुर्वतीप्रभयादीप्तिंसर्वावितिमिरादिशः ॥ ४ ॥ दृष्टासर्व
स्यजगतःपूर्णचंद्रप्रभामिव ॥ विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम् ॥ ५ ॥ मलपंकानुलिप्तांगींमृणालीमिवचोद्धृताम् ॥
पौर्णमासीमिवनिशाराहुग्रस्तेनिशाकरे ॥ ६ ॥ पतिशोकाकुलांदीनांशुष्कस्रोतांनदीमिव ॥ विध्वस्तपर्णकमलांवित्रासितवि
हंगमाम् ॥ ७ ॥ हस्तिहस्तपरामृष्टांव्याकुलामिवपद्मिनीम् ॥ सुकुमारांसुजातांगींरत्नगर्भगृहोचिताम् ॥ ८ ॥ दह्यमानामि
वह्येनांमृणालीमचिरोद्धृताम् ॥ रूपौदार्यगुणोपेतांमंडनार्हाममंडिताम् ॥ ९ ॥ चंद्रलेखामिवनवांव्योम्निनीलाभ्रसंवृताम् ॥
कामभोगैःप्रियैर्हीनांदीनांबंधुजनेनच ॥ १० ॥ एषाविरहितातेनशोभमानानशोभते ॥ दुष्करंकुरुतेदुःखंहीनोयदनयानलः
॥ ११ ॥ धारयत्यात्मनादेहंसाशोकैर्नावसीदति ॥ इमामसितकेशांतांशतपत्रायतेक्षणां ॥ १२ ॥ सुखार्हांदुःखितांदृष्ट्वाममा
पिव्यथतेमनः ॥ कदातुखलुदुःखस्यपारंयास्यतिभामिनी ॥ १३ ॥ भर्तुःसमागमात्साध्वीरोहिणीशशिनोयथा ॥ अस्मान्नू
नंपुनर्लभान्नैषधःप्रीतिमेष्यति ॥ १४ ॥ तुल्यशीलवयोरूपांतुल्याभिजनसंयुताम् ॥ नैषधोऽर्हतिवैदर्भीतांचेयमसितेक्षणा
म् ॥ १५ ॥ अहमाश्वासयाम्येनांपूर्णचंद्रनिभाननाम् ॥ अदृष्टपूर्वादुःखस्यदुःखार्ताभर्तृतत्पराम् ॥ १६ ॥ बृहदश्वउवाच ॥
एवंविमृश्यविविधैःकारणैर्विविधैश्चतां ॥ उपगम्यततोभैमींसुदेवोवाक्यमब्रवीत् ॥ १७ ॥ सुदेवउवाच ॥ अहंसुदेवोवैदर्भी
भ्रातुस्तेदयितःसखा ॥ भीमस्यवचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ १८ ॥ कुशलीतेपिताराज्ञीजननीभ्रातरश्चते ॥ आयुष्मं
तौकुशलिनौतत्रस्थौचसुदारकौ ॥ १९ ॥ त्वत्कृतेबंधुवर्गाश्चगतसत्वाइवासते ॥ बृहदश्वउवाच ॥ ज्ञात्वासातंसुदेवंतुदमयं





66

तीयुधिष्ठिर ॥ २० ॥ पर्यपृच्छत्तदासर्वान्क्रमेणसुहृदःसखीन् ॥ वैदर्भींप्रेषयामासपुनर्भीमपुरंप्रति ॥ २१ ॥ सुदेवंकथ
यित्वाचस्वकीयंदुःखकारणम् ॥ ब्राह्मणेनसमागम्यतंद्विजंचैद्यमातरम् ॥ २२ ॥ वैदर्भींचरितंतत्रमानुरग्रेन्यवेदयत् ॥ अथ
चेदिमतेर्मातातंसत्कृत्यतदाऽब्रवीत् ॥ २३ ॥ कोग्रामोयत्रसाबालाब्राह्मणेनसहाभवत् ॥ ततःसुदेवमालक्ष्यराजमाताविशांप
ते ॥ २४ ॥ पप्रच्छभार्याकस्येयंसुतावाकस्यभामिनी ॥ कथंनष्टाचजातिभ्योभर्तुर्वावामलोचना ॥ २५ ॥ त्वयावैविदिता
विप्रकथमेवंगतासती ॥ एतदिच्छाम्यहंतत्वंज्ञातुंसर्वमशेषतः ॥ २६ ॥ एवमुक्तस्तयाराजन्सुदेवोद्विजसत्तमः ॥ सुखोप
विष्टआचष्टेदमयंत्यायथातथम् ॥ २७ ॥ इतिश्रीमहाभारतेभारतसारेअरण्यकेनलोपाख्यानेत्रिंशोऽध्यायः ॥ ३० ॥
एकत्रिंशेविदर्भेचदमयंत्यास्तथागमः ॥ स्वकीयैःपरकीयैश्वबलैःसहसकथ्यते ॥ १ ॥ सुदेवउवाच ॥ विदर्भराजोधर्मात्मा
भीमोभीमपराक्रमः ॥ सुतेयंतस्यकल्याणीदमयंतीतिविश्रुता ॥ २ ॥ राजातुनैषधोनामवीरसेनसुतोनलः ॥ भार्येयंतस्य
कल्याणीपुण्यश्लोकस्यधीमतः ॥ ३ ॥ सद्यूतेनजितोभ्रात्राहृतराज्योमहीपतिः ॥ दमयंत्यागतःसार्द्धंनप्रज्ञायतकर्हिचित् ॥
॥ ४ ॥ तेवयंदमयंत्यर्थेचरामःपृथिवीमिमाम् ॥ सेयमासादिताबालातवपुत्रीनिवेशने ॥ ५ ॥ अस्यारूपेणसदृशीमानुषीने
हविद्यते ॥ अस्याह्येषभ्रुवोर्मध्येसहजःपिप्लुरुत्तमः ॥ ६ ॥ श्यामायाःपद्मसंकाशोलक्षितोंतर्हितोमया ॥ मलेनसंवृतोह्यस्याः
श्वेताभ्रेणचचंद्रमाः ॥ ७ ॥ चिन्हभूतोविभूत्यर्थमयंधात्राविनिर्मितः ॥ प्रतिपत्कलुषेवेंदोर्लेखानातिविराजते ॥ ८ ॥ तस्या
श्वदृश्यतेदिव्यंवपुर्मांससमन्वितम् ॥ असंस्कृतमपिव्यक्तंभातिकांचनसन्निभम् ॥ ९ ॥ अनेनवपुषाबालापिप्लुनानेनचैवहि ॥
लक्षितेयंमयादेवीनिहिताग्निरिवोष्मणा ॥ १० ॥ तच्छ्रुत्वावचनंतस्यसुदेवस्यविशांपते ॥ सुनंदाशोधयामासपिप्लुंमलतिरोहि

तम् ॥ ११ ॥ समलेनापकृष्टेनपिङ्कुस्तस्यावरोचितः ॥ दमयंत्यास्तदाऽभ्रेनभसीवदिवाकरः ॥ १२ ॥ पिङ्कुंदृष्ट्वासुनंदाचरा
जमाताचभारत ॥ रुदंत्यौतांपरिष्वज्यमुहूर्त्तमिवतस्थतुः ॥ १३ ॥ उत्सृज्यबाष्पंशनकैराजमातेदमब्रवीत् ॥ भगिन्यादुहि
तामेऽसिपिङ्कुनानेनसूचिता ॥ १४ ॥ अहंचतवमाताचराजन्यस्यमहात्मनः ॥ सुतेदशार्णाधिपतेर्दमयंतीत्वमाशुच ॥ १५ ॥
भीमस्यराज्ञःसादत्तावीरबाहोरहंपुनः ॥ त्वंतुजातामयादृष्टादशार्णेषुपितुर्गृहे ॥ १६ ॥ यथैवतेपितुर्गेहंतथेदमपिभामिनी ॥
यथैवचममैश्वर्यंदमयंतीतथातव ॥ १७ ॥ तांप्रहृष्टेनमनसादमयंतीविशांपते ॥ अवन्दिमातुर्भगिनीमिदंवचनमब्रवीत् ॥
॥ १८ ॥ अज्ञायमानापिसतीसुखमप्युषिताहिवै ॥ सर्वकामैःसुविहितारक्षमाणासदात्वया ॥ १९ ॥ सुखात्सुखतरोवासो
भविष्यतिनसंशयः ॥ चिरंविप्रोषितांमातर्मामनुज्ञातुमर्हसि ॥ २० ॥ दारुकौचहिमेनीतौवसतस्तत्रबालकौ ॥ पित्राविही
नौशोकार्त्तौमयाचैवकथंतुतौ ॥ २१ ॥ यदिवापिप्रियंकर्त्तुमपिकिंचिदिहेच्छसि ॥ विदर्भान्यातुमिच्छामिशीघ्रंमेयानमादिश
॥ २२ ॥ बाढमित्येवतामुक्त्वाहृष्टामातृस्वसानृप ॥ गुप्ताबलेनमहतापुत्रस्यानुमतेनसा ॥ २३ ॥ प्रस्थापयद्राजमाताश्रीमतीं
नरवाहनाम् ॥ यानेनभरतश्रेष्ठस्वन्नपानपरिच्छदाम् ॥ २४ ॥ ततःसानचिरादेवमिदर्भानगमच्छुभा ॥ तांतुबंधुजनाः
सर्वेप्रहृष्टाःसन्नपूजयन् ॥ २५ ॥ सर्वान्कुशलिनोदृष्ट्वाबांधवान्दारकौचतौ ॥ मातरंपितरंचोभौसर्वंचैवसखीजनम् ॥ २६ ॥
देवतांपूजयामासब्राह्मणांश्चयशस्विनी ॥ सविधीपरमेणैवदमयंतीविशांपते ॥ २७ ॥ अतर्पयत्सुदेवंचगोसहस्रेणपार्थिवः ॥
प्रीतोदृष्ट्वैवतनयांग्रामेणद्रविणेनच ॥ २८ ॥ साव्युष्टारजनींतत्रपितुर्वेश्मनिभामिनी ॥ २९ ॥ इतिश्रीमहाभारतेभारतसारे
अरण्यकेनलोपाख्यानेएकत्रिंशोऽध्यायः ॥ ३१ ॥ द्वात्रिंशेप्रेरितोभीमःपुत्र्याचनलमार्गणे ॥ चारान्संप्रेषयामासदेशेदेशेतद

च्यते ॥ १ ॥ दमयंत्युवाच ॥ मांचेदिच्छसिजीवंतीमसत्यंनवदामिते ॥ नरवीरस्यवैतस्यनलस्यानयनेयत ॥ २ ॥ दमयं
त्यातथोक्तातुसादेवीभृशदुःखिता ॥ बाष्पेणसहिताराज्ञीनोत्तरंकिंचिदब्रवीत् ॥ ३ ॥ तदवस्थांतुतांदृष्ट्वासर्वमंतःपुरंतदा ॥
हाहाभूतमतीवासीदतिभृशंतत्रकुरूद्वह ॥ ४ ॥ ततोभीमंमहाभागंभार्यावचनमब्रवीत् ॥ दमयंतीतवसुताभर्त्तारमनुशोचति
॥ ५ ॥ अपकृष्यचलज्जांसास्वयमुक्तवतीनृप ॥ प्रयच्छंतुतवप्रेष्याःपुण्यश्लोकस्यमार्गणे ॥ ६ ॥ तयाप्रणोदितोराजामान
वान्वशवर्तिनः ॥ प्रस्थापयन्नुवाचेदंगच्छध्वंनलमार्गणे ॥ ७ ॥ ततोविदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ॥ दमयंतीमथाप्रृ
च्छत्स्थितास्तेतत्पथाब्रुवन् ॥ ८ ॥ अथतानब्रवीद्भैमीसर्वराष्ट्रेष्विदंवचः ॥ कितवेनमहच्छित्वावस्त्रार्धंप्रस्थितोमम ॥ ९ ॥
उत्सृज्यविजनेसुप्तामनुरक्तांप्रियांप्रियः ॥ येवैयथासमादिष्टास्तेतथात्वत्प्रतीक्षिणः ॥ १० ॥ दह्यमानाभृशंबालावस्त्रार्द्धेन
चसंवृता ॥ तस्यारुदंत्याःसततंनलशोकेनपार्थिव ॥ ११ ॥ प्रसादंकुरुमेवीरप्रतिवाक्यंददस्वच ॥ एतदन्यच्चवक्तव्यंकृपांकु
र्याद्यथामयि ॥ १२ ॥ वायुनाप्रेर्यमाणोपिवनंदहतिपावकः ॥ भर्तव्यारक्षितव्याचपत्नीपत्याहिसर्वदा ॥ १३ ॥ तन्नष्टमु
भयंकस्माद्धर्मज्ञस्यसतस्तव ॥ ख्यातःप्राज्ञःकुलीनश्चसानुक्रोशश्चसर्वदा ॥ १४ ॥ सकथंनिरनुक्रोशःसंख्येमद्भाग्यसंक्षयात् ॥
एवंकथयराजानंगत्वायत्रापिकुत्रचित् ॥ १५ ॥ पश्चाद्ददतियद्राजातन्मेवदतवेगतः ॥ यदिवासौसमृद्धःस्याद्यदिवाप्यधनो
भवेत् ॥ १६ ॥ यदिवाससमर्थःस्यात्ज्ञेयमस्यचिकीर्षितम् ॥ एवमुक्तास्तयाविप्राजग्मुस्तेसर्वतोदिशम् ॥ १७ ॥ नलंमृग
यितुंराजन्तथाव्यवसितंतदा ॥ तेपुराणिसराष्ट्राणिग्रामान्घोषांस्तथाऽऽश्रमान् ॥१८॥ अन्वेषतानलंराजन्प्रजग्मुर्हिद्विजा
तयः ॥ तस्यावाक्यंततःसर्वेतत्रतत्रविशांपते ॥ १९ ॥ श्रावयांचक्रिरेवीरदमयंत्यायथेरितम् ॥ २० ॥ इतिश्रीमहाभारते

भारतसारेअरण्यकेनलोपाख्यानेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ त्रयस्त्रिंशेचपर्णादाद्वृतिंज्ञात्वानलस्यच ॥ सुदेवोगमनंचक्रेऋतु
पर्णंतदुच्यते ॥ १ ॥ बृहदश्वउवाच ॥ अथदीर्घस्यकालस्यपर्णादोनामवैद्विजः ॥ प्रत्येत्यनगरंभैमींमिदंवचनमब्रवीत् ॥
॥ २ ॥ नैषधंमृगयित्वाहमागतस्तवसन्निधौ ॥ अयोध्यांनगरींगत्वाराजमार्गउपस्थितः ॥ ३ ॥ श्राविततश्चमयावाक्यंत्वदी
यंसमहाजने ॥ ऋतुपर्णोमहाभागोयथोक्तंवरवर्णिनी ॥ ४ ॥ तच्छ्रुत्वानाब्रवीत्किंचिद्दतुपर्णोनराधिपः ॥ नचपारिषदःकश्चि
द्भाष्यमाणोमयासकृत् ॥ ५ ॥ तनुज्ञातंतुमांराज्ञाविजनेकश्चिदब्रवीत् ॥ ऋतुपर्णस्यपुरुषोबाहुकोनामनामतः ॥ ६ ॥ सूत
स्तस्यनरेंद्रस्यविरूपोन्हस्वबाहुकः ॥ शीघ्रयानेसकुशलःकोविदोमिष्टभोजने ॥ ७ ॥ सविनिःश्वस्यबहुशोरुदित्वाचमुहुर्मुहुः ॥
कुशलंचैवमांपृष्ट्वापश्चादिदमभाषत ॥ ८ ॥ वैषम्यमपिसंप्राप्तागोपायंतिकुलस्त्रियः ॥ विषमस्थेनमूढेनपरिभ्रष्टसुखेनच ॥
॥ ९ ॥ यदिवाताःपरित्यक्तानकुप्यंतिकुलस्त्रियः ॥ एवंतस्यवचःश्रुत्वात्वरितोऽहमिहागतः ॥ १० ॥ तस्यवाक्यार्थमाज्ञा
यशीघ्रंराज्ञेनिवेदय ॥ पश्चाद्रुरुहश्रुपूर्णाक्षीश्रुत्वापर्णादभाषितम् ॥ ११ ॥ दमयंतीरहस्येत्यमातरंसमभाषत ॥ अयमेव
द्विजोवैद्योभीमेमातःकथंचन ॥ १२ ॥ त्वत्संनिधौयस्तत्क्षेमंसुदेवंब्राह्मणंयथा ॥ यथाचनृपतिर्भीमःप्रतिवाह्यतिमेमतम् ॥
॥ १३ ॥ तथात्वयाप्रकर्तव्यंममचेत्प्रियमिच्छसि ॥ यथाचाहंसमानीतासुदेवेनसबांधवान् ॥ १४ ॥ तेनैवमंगलेनाशुसुदे
वोयातुमाचिरम् ॥ समानेतुंनलंमातरयोध्यानगरीमितः ॥ १५ ॥ विश्रांतंचततःपश्चात्पर्णादंद्विजसत्तमम् ॥ अर्चयामास
वैदर्भीधनेनातीवभामिनी ॥ १६ ॥ नलेचेहागतेविप्रभूयोदास्यामितेवसु ॥ त्वयाहिमेबहुकृतंयथानान्यःकरिष्यति ॥ १७ ॥
यद्भर्त्तारंसमेष्यामिशीघ्रमेवद्विजोत्तम ॥ सैवमुक्त्वार्चयित्वातामाशीर्वादैःसुमंगलैः ॥ १८ ॥ गृहानुपययौसोपिकृतार्थःसुम

हामनाः ॥ ततःसुदेवमाहूयदमयंतीयुधिष्ठिर ॥ १९ ॥ अब्रवीत्संनिधौमातुर्दुःखशोकसमन्विता ॥ गत्वासुदेवनगरीमयो
ध्यावासिनंनृपं ॥ २० ॥ ऋतुपर्णंवचोब्रूहिविनयेनसमन्वितः ॥ इतितस्यावचःश्रुत्वासुदेवोह्यगमत्पुरीम् ॥ २१ ॥ ऋतुपर्णं
नृपश्रेष्ठंधर्म्यंवचनमब्रवीत् ॥ २२ ॥ सुदेवउवाच ॥ ऋतुपर्णमहाबाहोत्वमागच्छस्वयंवरम् ॥ दमयंत्यानृपश्रेष्ठसमायांति
नृपोत्तमाः ॥ २३ ॥ यथाचगणितःकालःश्वोभूतेसमभाष्यसे ॥ यदिसंभावनातेवेगच्छशीघ्रमरिंदम ॥ २४ ॥ सूर्योदयेद्वि
तीयंसाभर्त्तारंवरयिष्यति ॥ नहिसाज्ञायतेवीरनलोजीवन्मृतोपिवा ॥ २५ ॥ एवंतदायथोक्तंवैगत्वाराजानमब्रवीत् ॥ ऋ
तुपर्णंमहाराजंसुदेवोब्राह्मणस्तदा ॥ २६ ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्यानेत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
ऋतुपर्णश्चतुस्त्रिंशेनलेनबाहुकेनच ॥ विदर्भदेशमार्गंतच्चक्रेगमनमुच्यते ॥ १ ॥ बृहदश्वउवाच ॥ श्रुत्वावचःसुदेवस्यऋतुप
र्णोनराधिपः ॥ सांत्वयन्मधुरंवाचाबाहुकंप्रत्यभाषत ॥ २ ॥ विदर्भयातुमिच्छामिदमयंत्याःस्वयंवरे ॥ एकान्हाहयतत्वज्ञ
मन्यसेयदिबाहुक ॥ ३ ॥ एवमुक्तस्यकौंतेयतेनराज्ञानलस्यच ॥ विदीर्यतमनोदुःखात्प्रदध्यौचमहामनाः ॥ ४ ॥ दमयं
तीकिलैतत्किंकुर्याद्दुःखेनमोहिता ॥ अस्मदर्थंभवेच्चायमुपायश्चिंतितस्तया ॥ ५ ॥ नृशंसंबतवैदर्भीभर्तृकामातपस्विनी ॥
मयाक्षुद्रेणसात्यक्ताकृपणापापबुद्धिना ॥ ६ ॥ दमयंतीनकुर्याद्वैपतिमन्यंसुमध्यमा ॥ यदत्रसत्यंवासत्यंगत्वाद्रक्ष्यामिनिश्च
यम् ॥ ७ ॥ ऋतुपर्णस्यवैकाममात्मनोऽर्थेकरोम्यहम् ॥ इतिनिश्चित्यमनसाबाहुकोदीनमानसः ॥ ८ ॥ कृतांजलिरुवाचे
दंऋतुपर्णंनराधिपम् ॥ प्रतिजानामितेवाक्यंगमिष्यामिनराधिप ॥ ९ ॥ एकान्हापुरुषव्याघ्रविदर्भनगरीमितः ॥ ततःपरी
क्षामश्वानांचक्रेराजन्सबाहुकः ॥ १० ॥ अभ्यगच्छतकृशानश्वान्सुवेगानध्वनिक्षमान् ॥ शुद्धान्दशभिरावृत्तैःसिंधुजान्

वातरंहसः ॥ ११ ॥ दृष्ट्वातानब्रवीद्राजाकिंचित्कोपसमन्वितः ॥ किमिदंप्रार्थितंकर्मप्रलब्धायदितेवयम् ॥ १२ ॥ कथमल्प
बलप्राणारणेक्षिप्ताहयाभम ॥ महान्मार्गोमहासूतोगंतव्यःकथमीदृशैः ॥ १३ ॥ बाहुकउवाच ॥ एतेहयागमिष्यंतिविदर्भाना
त्रसंशयः ॥ अथान्यान्मन्यसेराजन्ब्रूहिकान्योजयामिते ॥ १४ ॥ ऋतुपर्णउवाच ॥ त्वमेवहयतत्वज्ञःकुशलश्चासिबाहु
क ॥ यान्मन्यसेसमृद्धांस्त्वंक्षिप्रंतानेवयोजय ॥ १५ ॥ ततःसदश्वांश्चतुरःकुलशीलसमन्वितान् ॥ योजयामासकुशलोजव
युक्तान्महापथे ॥ १६ ॥ ततोयुक्तंरथंराजासमारोहत्त्वरान्वितः ॥ ततोनरवरःश्रीमान्नलोराजाविशांपते ॥ १७ ॥ सांत्वया
मासतानश्वान्तेजोबलसमन्वितान् ॥ रश्मिभिश्चसमुद्यम्यनलोयाभिःसुवेगतः ॥ १८ ॥ सूतमारोप्यवार्ष्णेयोजवमास्था
यवैपरम् ॥ तेनोह्यमानाविधिवद्बाहुकेनहयोत्तमाः ॥ १९ ॥ समुत्पेतुरथाकाशंरथिनंमोहयंतिच ॥ तथातुदृष्ट्वातानश्वान्मनोमा
रुतरंहसः ॥ २० ॥ अयोध्याधिपतिर्धीमान्विस्मयंपरमंययौ ॥ रथघोषंचतंदृष्ट्वाहयसंग्रहणंचतत् ॥ २१ ॥ वार्ष्णेयश्चिं
तयामासबाहुकस्यरथज्ञतां ॥ किंनुस्यान्मातलिरयंदेवराजस्यसारथिः ॥ २२ ॥ तथाहिलक्षणंवीरेबाहुकेदृश्यतेमहत ॥ शा
लिहोत्रोहिकिंनुस्याद्धयानांकुलतत्वविवत् ॥ २३ ॥ मानुषंसमनुप्राप्तोवपुःपरमशोभनम् ॥ उताहोस्विद्भवेद्राजानलःपरपुरंज
यः ॥ २४ ॥ सोयंनृपतिरज्ञातइत्युक्तंसमचिंतयन् ॥ अथवायांनलोविद्यांविद्यात्तामेवबाहुकः ॥ २५ ॥ तुल्यंहिलक्षयेवेगं
बाहुकस्यनलस्यच ॥ अथचेदंवचःकल्पंबाहुकस्यनलस्यच ॥ २६ ॥ नायंनलोमहावीर्यस्तद्विधस्तुभविष्यति ॥ प्रच्छन्नाहि
महात्मानश्चरंतिपृथिवीमिमां ॥ २७ ॥ दैवेनविधिनायुक्ताःशास्त्रोक्तैश्चनिरूपणैः ॥ भवेत्तुमतिभेदोमेपात्रवैरूप्यतांप्रति ॥
॥ २८ ॥ एवंविचार्यत्रहुशोवार्ष्णेयःपरिचिंतयन् ॥ हृदयेनमहाराजपुण्यश्लोकस्यसारथेः ॥ २९ ॥ बलंवीर्यंतथोत्साहंहय

संग्रहणंचतत ॥ परंयत्नंचसंप्रेक्ष्यपरांमुदमवापह ॥ ३० ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्यानेचतुस्त्रिंशो
ऽध्यायः ॥ ३४ ॥ पंचत्रिंशेविदर्भेषुप्राप्तिस्तस्यनलस्यच ॥ हर्षोभीमस्यराज्ञश्चसर्वेषामिहकथ्यते ॥ १ ॥ बृहदश्व उवाच ॥
सनद्यःपर्वतांश्चैववनानिचसरांसिच ॥ अचिरेणातिचक्रामखचरःखेचरन्निव ॥ २ ॥ तथाप्रयातेतुरथेतदागर्भस्वरिर्नृपः ॥
उत्तरीयमथापश्यत्भ्रष्टंपरपुरंजयः ॥ ३ ॥ ततःसत्वरमाणस्तुपटेनिपतितेतदा ॥ गृहीष्यामीतितंराजन्सूतमाहमहामनाः
॥ ४ ॥ त्वंगृहाणहयान्सूतसमुत्कृष्टान्महाजवान् ॥ वार्ष्णेयोयावदेनंतुपटमानीयतामिति ॥ ५ ॥ नलस्तंप्रत्युवाचाथ
दूरेभ्रष्टःपटस्तव ॥ योजनंसमतिक्रांतंनसशक्यंपुनस्त्वया ॥ ६ ॥ एवमुक्तेनलेनाथतदागर्भस्वरिर्नृपः ॥ आससादवनेराज
न्प्रफुल्लंसबिभीतकम् ॥ ७ ॥ तंदृष्ट्वाबाहुकंराजात्वरमाणोभ्युवाचतम् ॥ ममापिसूतपश्यत्वंसंख्यानेत्वंपरंबलम् ॥ ८ ॥
सर्वंसर्वंनजानातिसर्वज्ञोजगदीश्वरः ॥ वृक्षेऽस्मिन्यानिपत्राणिफलान्यपिचबाहुक ॥ ९ ॥ तानिसर्वाणिजानामिक्षज्ञाने
नबाहुक ॥ अस्मिन्वृक्षेतुपर्णानामयुतंचसलक्षकम् ॥ १० ॥ फलान्दशसहस्राणिसन्त्यत्रतुनसंशयः ॥ ततोरथमवस्थाप्य
राजानंबाहुकोऽब्रवीत् ॥ ११ ॥ प्रतीक्षत्वंमहाराजगणयिष्येबिभीतकम् ॥ अहंहिनाभिजानामिभवेदेतन्नवेतिवा ॥ १२ ॥
संख्यास्यामिफलान्यस्यपत्राणिचजनाधिप ॥ मुहूर्त्तमेषोवार्ष्णेयोरश्मिन्यच्छतुवाजिनाम् ॥ १३ ॥ तमब्रवीन्नृपःसूतंनायं
कालोविलंबितुम् ॥ अथाब्रवीद्बाहुकस्तंसंख्यास्येऽमुंबिभीतकम् ॥ १४ ॥ ततोविदर्भान्यास्यामिनतेविघ्नंभविष्यति ॥
ज्ञानवानपितंराजागणयस्वेत्युवाचह ॥ १५ ॥ एकादशंचशाखायाःसमाविष्टंमयाऽनघ ॥ गणयित्वासतत्वज्ञस्ततःप्रत्यवभा
वह ॥ १६ ॥ सोवतीर्यरथात्तूर्णमवयामासतंद्रुमम् ॥ फलानिपरिसंख्यातुंत्वरमाणोपचक्रमे ॥ १७ ॥ ततस्तुविस्मयाविष्टो

राजानमिदमब्रवीत् ॥ गणयित्वायथोक्तानितानिसन्तिफलानितु ॥ १८ ॥ अत्यद्भुतमिदंराजन्दृष्टवानस्मितेबलम् ॥ श्रो
तुमिच्छामितांविद्यांयथेतज्ज्ञायसेनृप ॥ १९ ॥ तमुवाचततोराजात्वरितोगगनेतदा ॥ विध्यक्षहृदयज्ञंमांसंख्यांकर्त्तुविशार
दम् ॥ २० ॥ बाहुकस्तमुवाचाथदेहिविद्यामिमांमम ॥ मत्तोपिचाश्वहृदयंगृहाणपुरुषर्षभ ॥ २१ ॥ ऋतुपर्णस्ततोराजाबा
हुकंकार्यगौरवात् ॥ हयज्ञानस्यलोभाच्चतथेत्येवाब्रवीच्चसः ॥ २२ ॥ यथोक्तंत्वंगृहाणेदमक्षाणांहृदयंपरम् ॥ निक्षेपोह्यश्व
हृदयंदेहिमेनृपसत्तम ॥ २३ ॥ एवमुक्त्वाततोविद्यांऋतुपर्णोनलायवै ॥ ददावेकमनाभूत्वाशुचिःपुरुषसत्तमः ॥ २४ ॥ त
स्याक्षहृदयस्यास्यशरीरान्निःसृतःकलिः ॥ कर्कोटकविषंतीक्ष्णंमुखात्सततमुद्गिरन् ॥ २५ ॥ कलिस्तस्यतदार्तस्यशापाग्निःसवि
निःसृतः ॥ ततोविषविमुक्तात्माश्वरूपमकरोत्कलिः ॥ २६ ॥ तंशप्तुमैच्छत्कुपितोनिषधाधिपतिर्नलः ॥ तमुवाचकलिर्भीतो
वेपमानःकृतांजलिः ॥ २७ ॥ कोपंसंयच्छनृपतेकीर्तिंधास्यामितेपरां ॥ इंद्रसेनस्यजननीकुपिताप्राशपत्पुरा ॥ २८ ॥ यदा
तयापरित्यक्तस्तेनाहंभृशपीडितः ॥ अवसंत्वयिराजेंद्रसदुःखमपराजितः ॥ २९ ॥ विषेणनागराजस्यदह्यमानोदिवानिश
म् ॥ येचत्वांमनुजालोकेकीर्तयिष्यंत्यतंद्रिताः ॥ ३० ॥ मत्कृतंतुभयंतेषांनकदाचिद्भविष्यति ॥ कर्कोटकस्यनागस्यदमयं
त्यानलस्यच ॥ ३१ ॥ ऋतुपर्णस्यराजर्षेःकीर्त्तनंकलिनाशनम् ॥ संसर्गदोषेणतदाह्यपवित्रोबिभीतकः ॥ ३२ ॥ ततोगतज्वरो
राजानैषधःपरवीरहा ॥ संप्रनष्टेकलौराजन्संख्यायाथफलान्युत ॥ ३३ ॥ मुदापरमयायुक्तस्तेजसापरमेणह ॥ रथमारुह्य
तेजस्वीप्रययौजवनैर्हयैः ॥ ३४ ॥ हयोत्तमाउत्पततोद्विजाइवपुनःपुनः ॥ नलःसनोदयामासप्रहृष्टेनांतरात्मना ॥ ३५ ॥
विदर्भाभिमुखोराजाप्रययौससमाहितः ॥ नलेतुसमतिक्रांतेकलिरप्यगमत्गृहम् ॥ ३६ ॥ ततोगतज्वरोराजानलोऽभूतभू

तलाधिपः ॥ विमुक्तःकलिनाराजासुखरूपोविराजते ॥ ३७ ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्यानेपंचत्रिं
शोऽध्यायः ॥ ३५ ॥ षट्त्रिंशेकेशिनीदासीनलदारैश्चप्रेरिता ॥ बाहुकंपरिपप्रच्छनलज्ञानायकथ्यते ॥ १ ॥ बृहदश्वउवाच ॥
ततोविदर्भान्सायान्हेसंप्राप्तंसत्यविक्रमम् ॥ ऋतुपर्णंजनाराजन्भीमायप्रत्यवेदयन् ॥ २ ॥ सभीमवचनाद्राजाकुंडिनंप्रा
विशत्पुरम् ॥ नादयन्रथघोषेणसर्वाराजन्दिशोदश ॥ ३ ॥ ततस्तंरथघोषंचनलाश्वास्तत्रशुश्रुवुः ॥ श्रुत्वाचमहृष्यंतपुनरे
वनलसंनिधौ ॥ ४ ॥ दमयंतीचशुश्रावरथघोषंनलस्यवै ॥ सदृशंरथनिर्घोषंमेनेभैमीघनस्वनम् ॥ ५ ॥ दमयंत्युवाच ॥
यथाचरथनिर्घोषःपूरयन्निवमेदिनीम् ॥ ममाल्हादयतेचेतोनलएवमहीपतिः ॥ ६ ॥ अथचंद्राभवक्त्रंतंनपश्यामिनलंयदि ॥
असंख्येयगुणंवीरंनमन्येकथनादहम् ॥ ७ ॥ यदिसिंहश्वविक्रांतोमत्तवारणवारकः ॥ नाभिगच्छतिराजेंद्रोनमन्येह्यन्यभाष
णात ॥ ८ ॥ गुणास्तस्यस्मरंत्यामेतत्परायादिवानिशि ॥ हृदयंदीर्यतइवशोकाद्वालुकसन्निभम् ॥ ९ ॥ एवंविलप्यमानासा
नष्टसंज्ञेवभारत ॥ आरुरोहमहद्वेश्मपुण्यश्लोकदिदृक्षया ॥ १० ॥ ततोमध्यमकक्षायांददर्शरथमास्थितम् ॥ ऋतुपर्णंमही
पालंसवार्ष्णेयंसबाहुकम् ॥ ११ ॥ अवतीर्यरथोपस्थादृतुपर्णोमहारथः ॥ उपतस्थेमहाराजभीमंभीमपराक्रमम् ॥ १२ ॥
तंभीमःप्रतिजग्राहपूजयापरयाततः ॥ अकस्मात्सहसाप्राप्तंस्त्रीमंत्रंनसविंदति ॥ १३ ॥ ऋतुपर्णस्यकर्णेवैभीमेनाथनिवेदि
तम् ॥ नलज्ञानायनिर्घोषोदमयंत्यानराधिप ॥ १४ ॥ मयाप्रकटितोराजन्सर्वेषांत्वंनिवेदय ॥ विश्राम्यतामितिवदद्दुःखंपू
र्वसमाहिता ॥ १५ ॥ पृच्छेथाःपुरुषंह्येनंयथातथ्यमनिंदिते ॥ अत्रमेमहतीशंकाभवेदेषनलोनृपः ॥ १६ ॥ यथाहिमेमन
स्तुष्टिर्हृदयस्यचनिर्वृतिः ॥ ब्रूयाश्चैनंकथामेनांपर्णादवचनंयथा ॥ १७ ॥ प्रतिवाक्यंचसुश्रोणीबुद्ध्येथास्त्वमनिंदिते ॥ एवंसमाहि

तागत्वादूतीबाहुकमब्रवीत ॥ दमयंत्यपिकल्याणिप्रासादस्थाह्यवैक्षत ॥ १८ ॥ केशिन्युवाच॥स्वागतंतेमनुष्येंद्रकुशलंतेब्रवी
म्यहम् ॥ दमयंत्यावचःसाधुनिबोधपुरुषर्षभ ॥ १९ ॥ कदावैप्रस्थितायूयंकिमर्थमिहचागताः ॥ तत्वंब्रूतयथान्यायंवैदर्भी
ज्ञातुमिच्छति ॥ २० ॥ बाहुकउवाच ॥ श्रुतःस्वयंवरोराज्ञाकौशलेनमहात्मना ॥ द्वितीयोदमयंत्यावैभवितासत्वरंद्विजात्
॥ २१ ॥ श्रुत्वातत्प्रस्थितोराजाशतयोजनयायिभिः ॥ हयैर्वातरवैर्मुख्यैरहमस्यचसारथिः ॥ २२ ॥ केशिन्युवाच ॥
अथयोऽसौतृतीयोवःसकुतःकस्यवापुनः ॥ त्वंचकस्यकथंचेदंत्वयिकर्मसमाहितं ॥ २३ ॥ बाहुकउवाच ॥ पुण्यश्लोकस्यवै
सूतोवार्ष्णेयइतिविश्रुतः ॥ नलस्यविश्रुतोभद्रऋतुपर्णमुपस्थितः ॥ २४ ॥ अहमप्यश्वकुशलःसूतत्वेचप्रतिष्ठितः ॥ ऋतु
पर्णेनराज्ञावैभोजनेचकृतेस्वयम् ॥ २५ ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्यानेषट्त्रिंशोऽध्यायः ॥ ३६ ॥
सप्तत्रिंशेनलस्यैवदमयंत्याश्वमेलनम् ॥ पतित्यागभयात्तत्रपूजनंतस्यकथ्यते ॥ १ ॥ केशिन्युवाच ॥ किंतुजानासिवार्ष्णे
यकुत्रराजानलोगतः ॥ कथंचित्त्वयिवैतेनकथितंस्याच्चबाहुक ॥ २ ॥ बाहुकउवाच ॥ इहैवपुत्रौनिक्षिप्यनलस्यशुभकर्मणः ॥
गतपुत्रोयथाकामंनैषजानातिनैषधम् ॥ ३ ॥ नचान्यःपुरुषःकश्चिन्नलंवेत्तियशस्विनि ॥ गूढश्चरतिलोकेस्मिन्नष्टरूपोमही
पतिः ॥ ४ ॥ कीदृक्रूपंवयःकीदृक्कीदृक्चिन्हंनलस्यच ॥ केशिन्युवाच ॥ योसावयोध्यानप्रथमंगतवान्ब्राह्मणस्तदा ॥
॥ ५ ॥ इमानिनलवाक्यानिकथ्यमानःपुनःपुनः ॥ क्वनुत्वंकितवच्छित्वावस्त्रार्द्धंप्रस्थितोमम ॥ उत्सृज्यविपिनेसुप्तामनुरक्तां
प्रियांप्रियः ॥ ६ ॥ सायथातैःसमादिष्टातथास्तेतत्प्रतीक्षणम् ॥ दह्यमानादिवारात्रंवस्त्रार्द्धेनाभिसंवृता ॥ ७ ॥ तथारुदंत्याः
सततंतेनदुःखेनपार्थिव ॥ प्रसादंकुरुमेवीरप्रतिवाक्यंददस्वच ॥ ८ ॥ एवमुक्तेनकेशिन्यानलस्यकुरुनंदन ॥ हृदयंव्यथितं

चासीदश्रुपूर्णेघलोचने ॥ ९ ॥ संप्रगृह्यात्मनोदुःखंदह्यमानोमहीपतिः ॥ बाष्पसंदिग्धयावाचाबाहुकश्चेदमब्रवीत् ॥ १० ॥
वैषम्यमपिसंप्राप्तंगोपायंतिकुलस्त्रियः ॥ ताभिःस्वर्गोजितःसत्यंनात्रकार्याविचारणा ॥ ११ ॥ विषमस्थेनमूढेनपरिभ्रष्टसुखेन
च ॥ यत्सातेनपरित्यक्तातदाक्रोधंवितन्वता ॥ १२ ॥ सत्कृताऽसत्कृतावापिपतिंदृष्ट्वातथागतम् ॥ भ्रष्टराज्यंश्रियाहीनंक्षु
धितंव्यसनाप्लुतम् ॥ १३ ॥ यानारीसेवतेनित्यंवैकुंठंसाचविन्दति ॥ इतिवाक्यंततःश्रुत्वानलःपरमदुःखितः ॥ १४ ॥
नावदत्तत्रकिमपिरुरोदचमहीपतिः ॥ ततःसाकेशिनीगत्वादमयंत्यैन्यवेदयत् ॥ १५ ॥ नलोऽसौरुदतेतत्रनामतस्तवभामि
नी ॥ दमयंतीतुतच्छ्रुत्वाभृशंशोकपराभवत् ॥ १६ ॥ शंकमानानलंचैवकेशिनीमिदमब्रवीत् ॥ गच्छकेशिनिभद्रंतेपरीक्षांकु
रुबाहुके ॥ १७ ॥ अब्रुवाणातुतत्रस्थाचरितान्यस्यलक्षय ॥ यदातुकिंचित्कुर्यात्सकारणंतत्रभामिनी ॥ १८ ॥ तत्रतंचेष्ट
मानंतंलक्षयंतीसुचेष्टितम् ॥ एततज्ज्ञात्वायथाचिन्हंममाग्रेसन्निवेदय ॥ १९ ॥ दमयंत्येवमुक्तासाजगामाथसुकेशिनी ॥ नि
रीक्ष्यबाहूकेशस्यलिंगानिपुनरागमत् ॥ २० ॥ सातद्वृत्तंतुतत्सर्वंदमयंतींनिवेदयत ॥ केशिन्युवाच ॥ दृढंशुच्युपचारोसौनम
यामानुषःक्वचित् ॥ दृष्टपूर्वःश्रुतोवापिदमयंतीतथाविधः ॥ २१ ॥ हयज्ञानेतथादक्षोदक्षस्यादन्नपाचने ॥ ऋतुपर्णस्यचार्था
यभोजनीयमनेकशः ॥ २२ ॥ मंडलेमंडलाकारएषोवाजिर्वर्येजवे ॥ सव्यापसव्येविमुखैर्नैषधाधिष्ठितोहयः ॥ २३ ॥ तद
द्भुतमिदंदृष्ट्वाविस्मिताहमिहागता ॥ अन्यच्चतस्मिन्सुमहदाश्चर्यंलक्षितंमया ॥ २४ ॥ यदग्निमपिसंस्पृश्यनवासोदह्यतेशुभे॥
च्छंदनोदकंतस्येववहत्यावर्जितंद्भुतम् ॥ २५ ॥ अतीवचान्यत्सुमहदाश्चर्यंदृष्टवत्यहम् ॥ यत्सपुष्पाण्युपादायहस्ताभ्यांप
स्पृशेशनैः ॥ २६ ॥ मर्दमानानिपाणिभ्यांनम्लायंतिहिकर्हिचित् ॥ एतान्यद्भुतलिंगानिदृष्ट्वाहंत्वांसमागता ॥ २७ ॥ बृह

दश्वउवाच ॥ दमयंतीतुतच्छ्रुत्वापुण्यश्लोकस्यचेष्टितम् ॥ अमन्यतनलंप्राप्तंकर्मचेष्टाभिभूषितम् ॥ २८ ॥ साशंकमानाभ
र्त्तारंबाहुकंपुनरिंगितैः ॥ केशिनींमधुरंवाचारुदंतीपुनरब्रवीत् ॥ २९ ॥ पुनर्गच्छाप्रमादात्त्वंबाहुकेनोपपाचितम् ॥ महानसा
च्छशनकैरत्नमानीयदीयताम् ॥ ३० ॥ सागत्वाबाहुकेव्यग्रेतदन्नंसमपद्यच ॥ त्वरिताकेशिनीप्रायाद्दमयंतीकरेददौ ॥ ३१ ॥
शोचित्वानलसिद्धस्यान्नस्यबहुशःपुरा ॥ पश्यामितंनलंसूतंप्राक्रोशद्भृशदुःखिता ॥ ३२ ॥ वैक्लव्यंपरमंगत्वाप्रक्षाल्यचमुखंत
तः ॥ मिथुनेप्रेषयामासकेशिन्यासहभारत ॥ ३३ ॥ इंद्रसेनःसहभ्रात्रासमभिज्ञायबाहुकम् ॥ अभिगत्यततोराजातंसभा
यांसमानयत् ॥ ३४ ॥ बाहुकश्चसमासाद्यसुतौसुरसुतोपमौ ॥ भृशंदुःखपरीतात्मासुस्वरंप्ररुरोदह ॥ ३५ ॥ नैषधोमिथुनं
दृष्ट्वाकेशिनीमिदमब्रवीत् ॥ इदंतुसुंदरंभद्रेमिथुनंममपुत्रयोः ॥ ३६ ॥ अतोदृष्ट्वैवसहसाबाष्पमुत्सृष्टवानहम् ॥ सर्वचिन्हा
निसंवीक्ष्यपुण्यश्लोकस्यधीमतः ॥ ३७ ॥ आगत्यकेशिनीशीघ्रंदमयंत्यैन्यवेदयत् ॥ दमयंतीततोभूयःप्रेषयामासकेशिनीम्
॥ ३८ ॥ मातुःसकाशंदुःखार्त्तानलशंकासमन्विता ॥ परीक्षितोमेबहुशोबाहुकोनलशंकया ॥ ३९ ॥ रूपेमेसंशयस्त्वेकःस्व
यमिच्छामिवेदितुम् ॥ नलःसामगतश्चात्रपितुर्मेसंनिवेद्यताम् ॥ ४० ॥ सैवमुक्तातुवैदर्भ्यासादेवीभीममब्रवीत् ॥ दुहितुस्त
मभिप्रायंज्ञात्वाभीमःसमादिशत् ॥ ४१ ॥ सावैपित्राभ्यनुज्ञातामात्राचभरतर्षभ ॥ नलंप्रवेशयामासयत्रतस्यावमोचनः
॥ ४२ ॥ सतांदृष्ट्वाचसहसादमयंतींनलोनृपः ॥ आविष्टःशोकदुःखाभ्यांबभूवाश्रुपरिप्लुतः ॥४३॥ तंचदृष्ट्वातथाभूतंदमयंती
नलंतदा ॥ तीव्रशोकसमाविष्टाबभूववरवर्णिनी ॥ ४४ ॥ ततःकाषायवसनाजटिलामलपंकिनी ॥ दमयंतीमहाराजबाहुकं
वाचमब्रवीत् ॥ ४५ ॥ दृष्टपूर्वस्त्वयाकश्चिद्धर्मज्ञोनामबाहुक ॥ सुप्तामुत्सृज्यविपिनेगतोयःपुरुषःस्त्रियम् ॥४६॥ अनागसां

प्रियांदीनांविजनेश्रमपीडिताम् ॥ अपहायतुकोगच्छेत्पुण्यश्लोकमृतेनलम् ॥ ४७ ॥ दमयंत्याब्रुवंत्यास्तुसर्वमेतदरिंदम ॥
शोकजंवारिनेत्राभ्यामसुखंप्रापतद्बहु ॥ ४८ ॥ अतीवशोकयुक्ताभ्यांरक्तांताभ्यांजलंस्रवत् ॥ परिस्रवन्नलोदृष्ट्वाशोकार्त्तइदम
ब्रवीत् ॥ ४९ ॥ ममराज्यंप्रनष्टंयन्नाहंतत्कृतवान्स्वयम् ॥ कलिनायत्कृतंभीरुनापराधोस्तिमामकः ॥ ५० ॥ त्वयातुधर्म
कृच्छ्रेणशापेनाभिहतःपुरा ॥ यदागमच्छरीरात्सस्तदाबुद्धिःसमागता ॥५१॥ विमुच्यमांगतःपापस्तदाहंत्वांसमागतः ॥ त्वद
र्थंविपुलश्रोणिनह्यन्यन्मेप्रयोजनम् ॥ ५२ ॥ कथंनारीतुभर्तारमनुरक्तमनुव्रतम् ॥ उत्सृज्यवरयेदन्यंयथात्वंवरवर्णिनी॥५३॥
॥ दूतांश्चरंतिदेशेवैभीमस्यापिचशासनात् ॥ भैर्मीकिलस्वभर्त्तारंद्वितीयंवरयिष्यति ॥ ५४ ॥ स्वैरवृत्यायथाकामंसरूपइ
वआत्मनः ॥ श्रुत्वैवचैवंत्वरितोगर्भस्वरिरुपस्थितः ॥ ५५ ॥ दमयंतीतुतच्छ्रुत्वानलस्यपरिदेवितम् ॥ प्रांजलिर्वेपमानाच
भीतावचनमब्रवीत् ॥ ५६ ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्यानेसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ अष्टत्रिंशेच
संवादोदमयंत्यानलस्यच ॥ भीमादीनांमहाहर्षोदर्शनादेवकथ्यते ॥ १ ॥ दमयंत्युवाच ॥ नमामर्हसिकल्याणपापेनपरिशं
कितुम् ॥ मयातुदेवानुत्सृज्यवृतस्त्वंनिषधाधिप ॥ २ ॥ ज्ञानार्थंतेमयाराजन्नुपायस्तुकृतस्तदा ॥ स्वयंवराभिधानाच्चकित
वंनिर्मितंतदा ॥ ३ ॥ त्वामृतेनहिलोकेस्मिन्दिनैकेनचभूमिप ॥ समर्थोयोजनशतंगंतुमश्वोनराधिप ॥ ४ ॥ स्पृशेयंतेनस
त्येनपादावेतौमहीपते ॥ यथामागस्कृतंकिंचिन्मनसाभिचराम्यहम् ॥ ५ ॥ तदातौममहष्येतेयदिधर्मःसनातनः ॥ ६ ॥ अ
यंचरतिलोकेस्मिन्भूतसाक्षिसदागतिः ॥ एषमुंचतुमेप्राणान्यदिपापंचराम्यहम् ॥ ७ ॥ एतेदेवास्त्रयःकृत्स्नंत्रैलोक्यंधारयं
तिवै ॥ विब्रुवंतुयथान्यायंयदिधर्मःसनातनः ॥ ८ ॥ एवमुक्तेततोवायुरंतरिक्षादभाषत ॥ नैषाकृतवतीपापंनलसत्यंब्रवीमि

ते ॥ ९ ॥ राजन्शीलनिधेऽस्माभिर्दमयंतीसुरक्षिता ॥ साक्षिणोरक्षिणश्चास्यावयंत्रीन्परिवत्सरान् ॥ १० ॥ उपायोविहि
तश्चायंत्वदर्थंतुनलोमया ॥ नह्येकान्हाशतंगच्छेत्त्वदन्यःकःपुमानिह ॥ ११ ॥ उपपन्नात्वयाभैमीत्वंभैम्याचमहीपते ॥ ना
त्रशंकात्वयाकार्यासंगच्छसहभार्यया ॥ १२ ॥ तथाब्रुवतिवायौतुपुष्पवृष्टिःपपातह ॥ देवादुंदुभयोनेदुर्ववौचपवनःशिवः ॥
॥ १३ ॥ तदद्भुतमिदंश्रुत्वानलोराजाविशांपते ॥ दमयंतींविशोकांतांकारयामासपार्थिवः ॥ १४ ॥ ततस्तद्वस्त्रमधैततत्प्रावृ
णोद्वसुधाधिपः ॥ संस्मृत्यनागराजंतुततोलेभेवपुःस्वकम् ॥ १५ ॥ रूपवंतंतुभर्त्तारंदृष्ट्वाभीमसुतातदा ॥ आक्रोशदुच्चैरालिं
ग्यपुण्यश्लोकमनिंदिता ॥ १६ ॥ भैमीपतिर्नलोराजाभ्राजमानोयथापुरा ॥ सस्वजेससुतौचापियथावत्प्रत्यनंदत ॥ १७ ॥
ततःसोरसिविन्यस्यवक्त्रंतस्याःशुभाननः ॥ परितोऽनेनदुःखेनसस्वजेकमलेक्षणाम् ॥ १८ ॥ तथैवमलदिग्धांगीपरिष्वज्यशु
चिस्मिता ॥ सुचिरंपुरुषव्याघ्रंतस्थौसाश्रुपरिप्लुता ॥ १९ ॥ ततस्तौसहितौरात्रौकथयंतौपुरातनम् ॥ वनेविचरितंसर्वंकथ
यामासपार्थिवः ॥ २० ॥ गृहेभीमस्यनृपतेःपरस्परसुखैषिणौ ॥ वसेतांहृष्टसंकल्पौवैदर्भीचनलश्चसः ॥ २१ ॥ सचतुर्थेंत
तोवर्षेसंगम्यसहभार्यया ॥ सर्वकामैःसमृद्धार्थोलब्धवान्परमांमुदम् ॥ २२ ॥ सैवंसमेत्यव्यपनीततंद्राशांतज्वराहर्षविवृ
द्धसत्वा ॥ रराजभैमीसमवाप्तकामाशीतांशुनारात्रिरिवोदयेन ॥ २३ ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्याने
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ एकोनचत्वारिंशेचश्वशुरैःसहभाषणम् ॥ नलस्यभूयोराज्यस्यद्यूतेनाप्तिश्चकथ्यते ॥ १ ॥
बृहदश्वउवाच ॥ अथरात्र्यांव्यतीतायांनलोराजास्वलंकृतः ॥ वैदर्भ्यासहितोभीमंददर्शवसुधाधिपम् ॥ २ ॥ ततोभिवाद
यामासप्रयतःश्वशुरंनलः ॥ तस्यानुदमयंतीचववंदेपितरंशुभा ॥ ३ ॥ तांभीमःप्रतिजग्राहपुत्रवत्परयामुदा ॥ यथार्हंपूज

यामाससमाश्वासयतप्रभुः ॥ ४ ॥ ततोबभूवनगरेसुमहान्हर्षजःस्वनः ॥ जनस्यसुप्रहृष्टस्यनलंदृष्ट्वातथाविधम् ॥ ५ ॥
अशोभयतनगरंपताकाध्वजसंकुलम् ॥ सिक्तसंमृष्टपुष्पाढ्याराजभूमिस्तदाकृता ॥ ६ ॥ ततोवर्द्धापयामासुःपौराजनपदाज
नाः ॥ द्वारिद्वारिचपौराणांपुष्पभंगःप्रकल्पितः ॥ ७ ॥ ऋतुपर्णोपिशुश्रावबाहुकच्छद्मिनंनलम् ॥ दमयंत्यासमायुक्तंजहर्ष
चनराधिपः ॥ ८ ॥ ऋतुपर्णोनलंप्राहनज्ञातोसिमयानल ॥ यत्कृतंसेवनंतत्रतद्भवान्क्षंतुमर्हसि ॥ ९ ॥ नलउवाच ॥ न
मेऽपराधंकृतवान्त्वंस्वल्पमपिपार्थिव ॥ कृतवान्त्वंनमत्कोपंक्षंतव्योचमयातव ॥ १० ॥ पूर्वसंबंधयोगेनविधिनाचविनिर्मि
तः ॥ आवयोःसंगमोराजन्भवताहंसुरक्षितः ॥ ११ ॥ ततोऽनुज्ञाप्यवैदर्भीनलंचनिषधाधिपम् ॥ ऋतुपर्णोमहाराजास्वदे
शानगमत्प्रभुः ॥ १२ ॥ ऋतुपर्णेप्रतिगतेनलोराजाविशांपते ॥ नगरेकुंडिनेकालंनातिदीर्घमिवावसत् ॥ १३ ॥ बृहदश्वउ
वाच ॥ समाश्वास्यतुतेजस्वीभीममामंत्र्यनैषधः ॥ पुरादल्पपरीवारोययौसनिषधंप्रति ॥ १४ ॥ रथेनैकेनशुभ्रेणदंतिभिःस
हषोडशैः ॥ पंचाशद्भिर्हयैश्चैवषट्शतैश्चपदातिभिः ॥ सकंपयन्निवमहींत्वरमाणोमहीपतिः ॥ १५ ॥ विवेशातीवसंरब्धस्तर
साचमहामतिः ॥ ततःपुष्करमासाद्यवीरसेनसुतोबली ॥ १६ ॥ उवाचदीव्यावपुनर्बहुवित्तंमयार्जितम् ॥ दमयंतीचयच्चान्य
त्मयाचसमुपार्जितम् ॥ १७ ॥ पुष्करत्वंपुनर्द्यूतंक्रीडतांनुमयासह ॥ इतितस्यवचःश्रुत्वाक्रीडयामासपुष्करः ॥ १८ ॥ प
श्चात्तेनजितंराज्यंहयानागाश्चतेजिताः ॥ पुष्करोपिजितःसद्योबद्धांजलिरुपस्थितः ॥ १९ ॥ पश्चात्पुष्करमाश्वास्यस्थापितो
नगरेतदा ॥ पुष्करउवाच ॥ कीर्त्तिरस्तुतवाक्षय्याजीववर्षायुतंसुखी ॥ योमेवितरसिप्राणानधिराज्यंचपार्थिव ॥ २० ॥ स
तथासत्कृतोराजाह्याश्वास्यचतदानृपम् ॥ प्रययौस्वपुरंहृष्टःपुष्करःस्वजनैर्वृतः ॥ अथतान्सांत्वयामासपौरांश्चनिषधाधिपः

॥ २१ ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्यानेएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ चत्वारिंशेसभार्यस्यानंदा
राज्यस्यतस्यच ॥ नलस्यऋतुपर्णस्यसंकीर्त्तनमिहोच्यते ॥ १ ॥ बृहदश्वउवाच ॥ प्रयातेपुष्करेराजन्संप्रवृत्तेमहोत्सवे ॥
महत्यासेनयायुक्तोदमयंतीमुपानयत् ॥ २ ॥ दमयंतीमपिपितासत्कृत्यपरवीरहा ॥ प्रस्थापयदमेयात्माभीमोभीमपराक्रमः
॥ ३ ॥ आगतायांतुवैदर्भ्यांसपुत्रायांनलोनृपः ॥ वर्त्तयामासमुदितोदेवराडिवनंदने ॥ ४ ॥ पुनश्चैवावसद्राज्यंप्रत्याहृत्यम
हायशाः ॥ ईज्यैश्चविविधैर्यज्ञैर्विधिवच्चाप्तदक्षिणैः ॥ ५ ॥ बृहदश्वउवाच ॥ एकदास्वगृहस्तंभेस्थितःकीरोहिसुंदरः ॥ निः
शल्येनशरेणैवराज्ञासोवैनिपातितः ॥ ६ ॥ भैमीतुसदयाकीरंकरसंपुटकेदधत् ॥ करप्रस्थेदतःकीरोमृतोजीवत्वमाप्नुयात् ॥
॥ ७ ॥ तदामत्स्यस्यसंदेहोगतोराज्ञोनलस्यच ॥ तथात्वमपिराजेंद्रससुहृद्रक्षसेचिरात् ॥ ८ ॥ दुःखमेतादृशंप्राप्तोनलःपर
पुरंजय ॥ देवनेननरश्रेष्ठःसभार्योभरतर्षभः ॥ ९ ॥ पुनस्त्वंभरतश्रेष्ठकृष्णयासहबंधुभिः ॥ रमसेचमहापुण्येधर्ममेवानुचिं
तयन् ॥ १० ॥ इतिहासमिमंचैवकलिनाशनमुच्यते ॥ शक्यामाश्वसितुंश्रुत्वात्वद्विधानांविशांपते ॥ ११ ॥ कर्कोटकस्यना
गस्यदमयंत्यानलस्यच ॥ ऋतुपर्णस्यराजर्षेःकीर्तनंकलिनाशनम् ॥ १२ ॥ यइदंश्रावयेन्नित्यंश्रद्धयाशृणुयान्नृप ॥ नतस्य
विद्यतेराजन्भयंकलिसमुद्भवम् ॥ १३ ॥ इतिश्रीमहाभारतेभारतसारेआरण्यकेनलोपाख्यानंसमाप्तम् ॥ ऋतुपर्णस्यराजर्षेः
स्वयंवरवरायच ॥ गृहीत्वातंतुराजर्षिर्गतोभीमनिकेतनम् ॥ १ ॥ एकदावृक्षमूलेतुससुप्तोऋषिकिंकरः ॥ तस्याननाद्विनिः
सृत्यायात्कलिःसबिभीतकम् ॥ २ ॥ सदृष्टोऋतुपर्णेनविस्मितःसमुपस्थितः ॥ ततोनागेनधर्मात्मापुनर्दष्टोमहीपतिः॥ ३ ॥
सरूपत्वमनुज्ञातोयथापूर्वंतथाभवत् ॥ भूयोराज्यमनुप्राप्तोदमयंत्यायुतोनलः ॥ ४ ॥ इतिश्रीमहाभारतेभारतसारेनलद

मयंतीसंगमोनामचत्वारिंशोऽध्यायः ॥ ४० ॥ एकचत्वारिंशतिमेहरिश्चंद्रस्यवर्णनम् ॥ मुनिनाहृतराज्यस्यकीर्तिर्धैर्यंचक
थ्यते ॥ १ ॥ व्यासउवाच ॥ तस्मात्त्वमपिराजर्षेमाविषादंकुरुप्रभो ॥ हरिश्चंद्रोपिराजर्षिर्दुःखांतेसुखमाप्तवान् ॥ २ ॥ पुरा
त्रेतायुगेराजन्सूर्यवंशसमुद्भवः ॥ ब्रह्मण्योधर्मवान्नित्यंसत्यसंधःसदाशुचिः ॥ ३ ॥ अयोध्यायांमहावीरोनित्यंधर्मपराय
णः ॥ तस्यसात्विकभावेनकंपितामघवत्पुरी ॥ ४ ॥ तदेंद्रस्तुगतस्तत्रयत्रविष्णुःसनातनः ॥ तंगत्वाप्राहमघवादीनास्योदी
नमानसः ॥ ५ ॥ इंद्रउवाच ॥ स्वामिन्वैभारतेखंडेहरिश्चंद्रोमहान्नृपः ॥ रूपवान्धर्मशीलश्चसूर्यवंशसमुद्भवः ॥ ६ ॥ म
हागुणोमहातेजाअयोध्यांपालयन्स्थितः ॥ तस्यपुण्यप्रभावेनपुरीमेनाशमेष्यति ॥ ७ ॥ तस्यवाक्यंसमाकर्ण्यविष्णुनाच
विचारितम् ॥ गच्छेंद्रत्वंस्वगृहंचसाधयिष्यामितंनृपम् ॥ ८ ॥ इत्युक्त्वाहरिणातत्रविश्वामित्रःस्मृतस्तदा ॥ स्मृतमात्रःस
मायातोविश्वामित्रोऋषीश्वरः ॥ ९ ॥ तंप्राहकेशवोदेवोहरिश्चंद्रपुरींव्रज ॥ तत्रगत्वाहरिश्चंद्रंपातयत्वंस्वधर्मतः ॥ १० ॥
साधोर्दुःखप्रसादेननदोषस्तेममाज्ञया ॥ इतिश्रुत्वागतोविप्रोहरिश्चंद्रपुरींप्रति ॥ ११ ॥ सिंहासनेस्थितंभूपंविश्वामित्रोददं
र्शतम् ॥ राजादृष्ट्वाऋषिंतत्रस्वासनात्सहसोत्थितः ॥ १२ ॥ अर्घ्यपाद्यार्चनंकृत्वाकृतांजलिरुपस्थितः ॥ अनुज्ञांदेहिमेस्वा
मिन्कृपांकृत्वाममोपरि ॥ १३ ॥ विश्वामित्रउवाच ॥ यदितुष्टोसिधर्मज्ञसर्वराज्यंसमर्पय ॥ मह्यंत्वंहर्षसंयुक्तस्तदामन्येसु
धार्मिकम् ॥ १४ ॥ इत्युक्तेचमुनौतत्रहरिश्चंद्रःसपुत्रकः ॥ विचार्यसकलत्रेणसर्वराज्यंसमर्पयत् ॥ १५ ॥ विश्वामित्रायवि
प्रायद्वादश्यांविष्णुतुष्टये ॥ प्रीतोविप्रःपुनःप्राहराजन्मेदेहिदक्षिणां ॥ १६ ॥ दर्भहीनायथासंध्यातिलहीनंचतर्पणम् ॥ दा
नंचदक्षिणाहीनंतत्सर्वंनिष्फलंभवेत् ॥ १७ ॥ इतितस्यवचःश्रुत्वाहरिश्चंद्रोमहामतिः ॥ विचार्यदक्षिणादत्ताहेमभारत्रयंत

तः ॥ १८ ॥ संकल्पयत्तदाराजाविप्रहस्तेजलंददौ ॥ पश्चाद्विप्रस्तुराजानंगृहीत्वावाक्यमब्रवीत् ॥ १९ ॥ राजन्दत्ताच्चरा
ज्याद्वैनगृहीष्यामिदक्षिणाम् ॥ इदंराज्यंहिसप्तांगंमदीयंतवदानतः ॥ २० ॥ तत्रत्यंवसुसर्वंहिमदीयंनात्रसंशयः ॥ तस्मा
द्भिन्नतरांराजन्देहिमेदक्षिणांविभो ॥ २१ ॥ निश्चित्यमनसाराजाउवाचकौशिकंप्रति ॥ वाचाविव्हलयाविप्रसुकृतंमाविना
शय ॥ २२ ॥ एवंविज्ञाप्यतंराजाभूयोवचनमब्रवीत् ॥ हरिश्चंद्रउवाच ॥ पुत्रंदारांःतथामांत्वंनयविप्रशिवांपुरीम् ॥ सर्वान्
विक्रियतेद्रव्यंगृहाणत्वंद्विजोत्तम ॥ २३ ॥ इतितस्यवचःश्रुत्वाविश्वामित्रेणधीमता ॥ मार्गेसंदुःखितानित्यंनीतावाराणसीं
पुरीम् ॥ २४ ॥ तदाविप्रेणतत्रैवविक्रीतास्तेपृथक्पृथक् ॥ रोहिदासस्तुविप्रायतारादत्ताद्विजातये ॥ २५ ॥ हरिश्चंद्रस्त्वंत्य
जायविश्वामित्रेणनिष्कृतः ॥ तदातुरोहिदासस्तुविप्रपुत्रैर्वनंगतः ॥ १६ ॥ पुष्पावचययोगेनवनेनागेनदंशितः ॥ नागदंशा
न्मृतःसोऽपिविप्रबालैर्निवेदितं ॥ २७ ॥ आगत्यवृद्धविप्रायसविप्रस्तुवनंगतः ॥ गृहीत्वाह्यानयामासगंगातीरेसुपावने ॥
॥ २८ ॥ यावत्सदाह्यतेतत्रतावद्राजासमागत ॥ देहिमेचैलखंडंतुपश्चात्पुत्रंप्रदाहय ॥ २९ ॥ इत्युक्तवतिचन्नृपेप्रदत्तंचैल
खंडकम् ॥ पश्चात्प्रदाहितःपुत्रस्तदद्भुतमिवाभवत् ॥ ३० ॥ वैशंपायनउवाच ॥ अतःपरंप्रवक्ष्यामितारायास्तुविचेष्टितम् ॥
ताराद्विजगृहेनित्यंदेवसेवांप्रकुर्वति ॥ ३१ ॥ तत्रैकदागतागंगांमज्जिताजलमध्यतः ॥ तावद्राज्ञीकंठसूत्रंजलवाहेनिपातित
म् ॥ ३२ ॥ काक्याभक्ष्यंसमाज्ञायतारायामस्तकेस्थितं ॥ तस्मिन्कालेतुराज्ञावैपटहस्तुनिवादितः ॥ ३३ ॥ येनकेनापि
चोरेणकंठसूत्रंतुचोरितम् ॥ नारीवाथनरोवापिहंतव्योजान्हवीतटे ॥ ३४ ॥ इतिराज्ञोवचःश्रुत्वाकथितंपुरवासिभिः ॥ रा
जन्नेकाभवन्नारीद्विजगेहेचकिंकरी ॥ ३५ ॥ तस्याःशिरोर्द्धभागेचकंठसूत्रंविलोकितम् ॥ इतितेषांवचःश्रुत्वाराजावचनमब्र



84

वीत् ॥ ३६ ॥ काशिराजउवाच ॥ घातयाशुजनंतंचनरंनारींनपुंसकम् ॥ विलंबोनैवकर्त्तव्यश्चोरस्यविनिपातने ॥ ३७ ॥
तदापौरजनैःसर्वैरंत्यजायनिवेदितम् ॥ तत्कालेअंत्यजेनैवप्रेरितोद्विजसेवकः ॥ ३८ ॥ तस्मिन्कालेतुसानारीसुस्नाताजा
न्हवीतटे ॥ कथितंचांत्यजायैवमारणायसमुद्यतः ॥ ३९ ॥ यावद्घातयतेघातंतयातावद्विलोकितः ॥ निजनाथोधराधीशो
हरिश्चंद्रोविलोकितः ॥ ४० ॥ स्मृतिरस्तुपतेर्नित्यंरोहिदासःसुतःस्मृतः ॥ विश्वामित्रोगुरुर्नित्यंभवेज्जन्मनिजन्मनि ॥४१ ॥
एतन्मेदेहिभोविष्णोतवभक्तिंसनातनीम् ॥ इत्येवंवदमानासातावत्तेनैवपीडिता ॥ ४२ ॥ यावत्घातंकरोत्यत्रतावत्तेनधृतः
करे ॥ हरिणाविष्णुरूपेणवैकुंठपुरवासिना ॥ ४३ ॥ माराजन्साहसंकार्षीस्तुष्टोऽहंतवभावतः ॥ वरंवृणीष्वराजेंद्रयत्तेमन
सिवर्त्तते ॥ ४४ ॥ हरिश्चंद्रउवाच ॥ यदितुष्टोसिमेराजन्सपुरंचसपुत्रकम् ॥ सदाचारंजगन्नाथनयमांत्वंनिवासनम् ॥
॥ ४५ ॥ यतोब्रह्मपदानांचपुनःसंसारबंधनम् ॥ इत्युक्तेतत्रहरिणानृपतौविष्णुरूपिणा ॥ ४६ ॥ उद्धृतानगरीसर्वाहरिश्चं
द्रोऽपिसोधृतः ॥ सपुत्रःसकलत्रश्चसबंधुश्चससेवकः ॥ ४७ ॥ कृपयाजगदीशेनवैकुंठेस्वेनिवासितः ॥ ४८ ॥ इतिश्रीम
हाभारतेभारतसारेअरण्यपर्वणिहरिश्चंद्रोद्धरणंनामएकचत्वारिंशोऽध्यायः ॥ ४१ ॥ द्विचत्वारिंशेध्यायेतुमृकण्डात्मजधर्म
योः ॥ संवादेप्रलयोत्पत्तिरस्यविश्वस्यवर्ण्यते ॥ १ ॥ वैशंपायनउवाच ॥ एवमुक्त्वातदाव्यासोजगामस्वंनिकेतनम् ॥ एकदा
वनमध्येतुवर्त्तमानंयुधिष्ठिरम् ॥ २ ॥ आजगामभ्रमन्देशान्मार्कंडेयोमहामुनिः ॥ तंसंपूज्यहिधर्मात्मापप्रच्छधर्मनंदनः ॥
॥ ३ ॥ स्वामिन्त्वंप्रलयोत्पत्तिंकथयस्वममाग्रतः ॥ मार्कंडेयउवाच ॥ एकदास्वाश्रमेशिष्यान्पाठयामोनिरंतरम् ॥ ४ ॥
तावद्वायुःसमभवद्वृक्षाःसंचूर्णतांगताः ॥ पश्चात्तोयमनुप्राप्तंचतुर्दिग्भ्योममाश्रमे ॥ तत्रोपरिसमास्थायसत्यलोकंगतोस्म्यहम्

॥ ५ ॥ वटेतत्रहरिर्दृष्टोबालरूपधरोविभुः ॥ तंप्रयुक्तंयथातत्रनाथभीतोऽस्मिसांप्रतम् ॥ ६ ॥ तदोक्तंतुमुकुंदेनपुत्रसन्मुख
माविश ॥ एवमुक्त्वामुकुंदोऽपिमुखंविस्तार्यसंस्थितः ॥ ७ ॥ तावत्तत्रप्रविष्टोऽहमागतःस्वंनिकेतनम् ॥ तदाहंविस्मयाविष्टः
सर्वान्शिष्यान्वभाषतान् ॥ ८ ॥ वायुनाप्युद्धितायूयंकथमत्रसमागताः ॥ ९ ॥ शिष्याऊचुः ॥ नोद्धिताह्यभवन्स्वामिन्
भवंतोऽव्याकुलाःकथं ॥ पश्चादंतर्मनासिवैध्यात्वातेपेसुदारुणम् ॥ १० ॥ तपतोमेतदाराजन्वर्षाणामयुतंययौ ॥ एकदासम
येराजन्मुकुंदंस्मृतवानहम् ॥ ११ ॥ करारविंदेनपदारविंदंमुखारविंदेविनिवेशयंतम् ॥ वटस्यपत्रस्यपुटेशयानंबालंमुकुंदंम
नसास्मरामि ॥ १२ ॥ कंठेसुमालांतिलकांकभालंसौंदर्यनिष्काशितमेघजालम् ॥ रिपोःकरालंजलजामरालंबालंमुकुंदंमन
सास्मरामि ॥ १३ ॥ गोपालबालंभुवनैकपालंसंसारमायामतिमोहजालम् ॥ यशोविशालंशिशुपालकालंबालंमुकुंदंमनसास्म
रामि ॥ १४ ॥ एवंमयायदाध्यातःस्तदादृष्टोहरिःशिशुः ॥ ममाग्रेकथितंतेनचोत्पत्तिंपश्यसादरम् ॥ १५ ॥ आविर्भूतस्त
दाब्रह्माविष्णोश्चनाभिपंकजात् ॥ विरिंचिर्हरिणादिष्टःसृष्टिंचकृतवांस्तदा ॥ १६ ॥ विष्णौचांतर्हितेपश्चात्जातंचपंचभूतक
म् ॥ अनेनविधिनाराजन्प्रलयाबहवोगताः ॥ १७ ॥ मयाविलोकितास्तेवैमाधवस्यप्रसादतः ॥ तस्मात्त्वमपिराजेंद्रनित्यं
भजहरिंध्रुवम् ॥ १८ ॥ इत्युक्त्वांतर्दधेसोऽपिमार्कंडेयोमहामुनिः ॥ १९ ॥ इतिश्रीमहाभारतेभारतसारेअरण्यपर्वणिप्र
लयोत्पत्तिकथनंनामद्विचत्वारिंशोऽध्यायः ॥४२॥ इतिवनपर्वसमाप्तं ॥ ॥ अथविराटपर्वमाह॥त्रिचत्वारिंशेऽध्यायेतुविरा
टस्यपुरंगतिः ॥ पांडवानांचभीमेनमल्लदर्शनमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ प्रथमाब्दाद्द्वादशांतंपांडवैरुषितंवनम् ॥ प्रा
प्तंत्रयोदशंवर्षंनष्टचर्यांचिकीर्षवः ॥ २ ॥ विराटनगरंप्राप्ययुधिष्ठिरपुरःसराः ॥ चक्रुर्नामानिगुप्तानिप्रत्येकंतंब्रवीमिते ॥ ३ ॥

युधिष्ठिरउवाच ॥ धौम्यादीनांचसर्वेषांऋषीणांभावितात्मनाम् ॥ प्रगच्छंतुयथास्थानंयूयंसर्वेऋषीश्वराः ॥ ४ ॥ कृष्णदर्शनसंपूतांद्वारकांवैव्रजंतुते ॥ अस्माकंयेमहावीरारथिनोगजिनश्चये ॥ ५ ॥ अपरेसेवकायेवैयेचकर्मकराश्चये ॥ शिबिकावाहकायेचयतयःशस्त्रपाणयः ॥ ६ ॥ तेसर्वेममवाक्येनयांतुद्रुपदमंदिरे ॥ अस्मन्माताचयाकुंतीदेवकींयातुसाचिरम् ॥ ७ ॥ इतिधर्मवचःश्रुत्वागताःसर्वेयथोदितम् ॥ तेगताःकृष्णसदनंयादवैस्तेप्रपूजिताः ॥ ८ ॥ द्रुपदेनापिराज्ञावैपूजिताधर्मसेवकाः ॥ धर्मेणोक्तमहोभीमत्वंशस्त्रान्स्थापयाशुवै ॥ ९ ॥ ततःशस्त्रास्त्रसंघातंबध्वामुक्तंशमीतरौ ॥ धर्मउवाच ॥ ममाग्रेकथ्यतांसर्वेभ्रातरोवास्तुचेष्टितम् ॥ १० ॥ यस्यास्तिगुणविज्ञानंकीदृशंकथ्यतांमम ॥ अहंब्राह्मणरूपेणकंकोनामभवामिवै ॥ ॥ ११ ॥ बल्लवोभीमसेनस्तुसूपकारोऽन्नपाचकः ॥ अर्जुनोनर्तकोजातोबृहन्नटइतिस्मृतः ॥ १२ ॥ नकुलोग्रंथिकोनामवाजिपालोभवत्तदा ॥ गोरक्षकाणामुपरिसहदेवोभवत्तदा ॥ १३ ॥ सैरंध्रीद्रौपदीजातामालिनीनामविश्रुता ॥ सर्वेनामानिगुप्तानितदाचक्रुर्नराधिपाः ॥ १४ ॥ पांडवानांतुनामानिद्रौपद्याःकथितानिवै ॥ जयोजयंतोविजयोजयत्सेनोजयद्बलः ॥१५॥ इतितेनिश्चयंकृत्वासंप्राप्ताराजमंदिरे ॥ सभाचमंडितातत्रनटनाटकचारणैः ॥ १६ ॥ गीतवादित्रनादैश्चमल्लैश्चारुसुशोभिता ॥ वीरभद्रसमाकीर्णानानापंडितभूषिता ॥ १७ ॥ नानालक्षसमाकीर्णाभातिवैराटकीसभा ॥ यथानुरूपचिन्हाचसादिपश्चादनुक्रमात् ॥ १८ ॥ विराटोपिचराजेंद्रःसभायामागतस्तदा ॥ सभायांतेनृपंदृष्ट्वाप्रोचुस्तत्रविचेष्टितम् ॥ १९ ॥ तत्रतेनविराटेनकंकप्रभृतयस्त्वमी ॥ सभाजितास्तदावीराःस्थिताःप्रच्छन्नरूपिणः ॥ २० ॥ अवरोधेगताप्येवंसैरंध्रीमानिताभृशम् ॥ सुदेष्णयाराजपत्न्यास्थापितास्वगृहेतदा ॥ २१ ॥ सुदेष्णांराजपत्नींचसैरंध्रीतामुवाचह ॥ द्रौपद्युवाच ॥ नाहंल

भ्याविराटेनचान्यैश्चनकथंचन ॥२२॥ गंधर्वाःपतयःपंचसर्वेप्रच्छन्नरूपिणः ॥ योमांपश्येच्चवक्रेणचक्षुषाघ्नंतितंद्रुतम् ॥ २३ ॥
तिष्ठंत्येवंतुतत्रैतेस्वाधिकारेचपांडवाः ॥ अथमासेचतुर्थेचमल्लैर्नानाविधैरपि ॥ २४ ॥ मल्लानामधिपःकश्चिन्मेघनादोतिवि
श्रुतः ॥ याचमानोमल्लयुद्धंसभायामागतस्तदा ॥ २५ ॥ महाबलोमहाकायोदुर्निवारोमहाबलैः ॥ तेनैवसहसंग्रामंकोपिक
र्तुंनहिक्षमः ॥ २६ ॥ सभायांबल्लवेनायंयुद्धायाधिकृतस्तदा ॥ तयोर्युद्धमभूत्घोरमशस्त्रंबाहुयुग्मकम् ॥ २७ ॥ दारुणंभी
षणंघोरंजगद्विस्मयकारकम् ॥ ततःशब्देनमहताभीषयंतौपरस्परम् ॥ २८ ॥ समस्तमल्लमध्यस्थोमेघनादोमहाबलः ॥
अरत्नीद्विहस्तपादौगुंफितौमुष्टिघातकौ ॥ २९ ॥ उड्डायनंक्रीयमाणौतथापार्श्वविमर्दिनौ ॥ क्रुद्धेनबल्लवेनास्यगृहीत्वापादयु
ग्मकम् ॥ ३० ॥ भ्रामितःपरितःशीर्षताडितोधरणीतले ॥ गतासुःपतितेतस्मिन्सभास्थाःसकलाजनाः ॥ ३१ ॥ जयश
ब्दोनमःशब्दःसाधुशब्दप्रभाषिणः ॥ बल्लवंतुततोराजाबहुमानपुरःसरं ॥ ३२ ॥ पूजयामासधर्मज्ञोविराटोहर्षसंयुतः ॥३३॥
इतिश्रीमहाभारतेभारतसारेविराटपर्वणित्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ चतुश्चत्वारिंशेऽध्यायेकीचकानांवधोयथा ॥ पाण्ड
वानांसभायांचकुरूणांप्रकटोच्यते ॥ १ ॥ वैशंपायनउवाच ॥ मेघनादवधादूर्ध्वंमासमात्रादनंतरम् ॥ तथाचरतिपांचालीसु
देष्णायानिवेशने ॥ २ ॥ एवंहिवसतांतेषांविराटस्यहिशालकः ॥ कीचकश्चैवविख्यातोदृष्टातेनतदासती ॥ ३ ॥ पांचाली
रूपसंपन्नाभगिन्याःपरिचारिका ॥ तांदृष्ट्वादेवगर्भाभांदेवमायामिवापराम् ॥४॥ कीचकस्त्विच्छयामासकामबाणप्रपीडितः ॥
सुदेष्णांप्रत्युवाचाथंगत्वाविनयपूर्वकम् ॥ ५ ॥ कीचकउवाच ॥ सुदेष्णेतवसैरंध्रीममभोगायदीयतां ॥ तयातस्यतथैवोक्तं ॥४५॥
गंधर्वाश्चमहाबलाः ॥ ६ ॥ रक्षंतेऽस्याश्चभर्त्तारःप्रछन्नाश्चयमोपमाः ॥ यदित्वमस्याउपरिदुष्टांबुद्धिंकरिष्यसि ॥ ७ ॥ त

दास्वांतेहिगंधर्वाघातयिष्यंतिनान्यथा ॥ परस्त्रियांत्वयाबुद्धिर्नकर्त्तव्याकदाचन ॥ ८ ॥ रावणस्यशिरःपंक्तिश्छिन्नापश्यनचा
गता ॥ ततोऽसौकीचकोदुष्टोभगिन्याःपरिचारिकाम् ॥९॥ सैरंध्रींचतदाप्राहप्रहस्यकामुकोवचः ॥ तच्छ्रुत्वाप्राहसैरंध्रीतदातं
कीचकंप्रति ॥ १० ॥ कीचकत्वंमयासार्द्धंमाविनोदंसमाचर ॥ गंधर्वाःपतयःपंचघातयिष्यंतितेतदा ॥ ११ ॥ इतितस्यावचः
श्रुत्वाकीचकोवाक्यमब्रवीत् ॥ १२ ॥ कीचकउवाच ॥ नाहंबिभेमिसैरंध्रीगंधर्वाबलवान्यदि ॥ त्वांतुनेष्याम्यहंरात्रौब
लादेवगृहंमम ॥ १३ ॥ तेनोक्तंचेष्टितंतत्रकृष्णाभीमंन्यवेदयत ॥ भीमेनांगीकृतंतस्यसंकेतंनर्त्तकेगृहे ॥ १४ ॥ भीमउवा
च ॥ देव्यालयेसमागच्छसैरंध्रीब्रूहिकीचकम् ॥ मोदकान्मधुरोपेतान्भक्षणार्थंसमानय ॥ १५ ॥ निर्भयातिष्ठसैरंध्रीसाध
यिष्यामिकीचकम् ॥ ततोनिशीथसमयेकीचकःकाममोहितः ॥ १६ ॥ भक्ष्यभोज्यंसमादायप्रविष्टोदेवमंदिरे ॥ प्रविष्टोनर्त्त
नागारंभीमेनचकरेधृतः ॥ १७ ॥ ततोजग्राहकेशेषुमाल्यवत्सुमहाबलः ॥ कीचकेनपरामृष्टोबलेनबलिनांवरः ॥ १८ ॥ आ
क्षिप्यकेशान्वेगेनबाव्होर्जग्राहपांडवम् ॥ बाहुयुद्धंतयोरासीत्क्रुद्धयोर्नरसिंहयोः ॥ १९ ॥ तावन्योन्यंसमाश्लिष्यप्रवृद्धौवृ
षभाविव ॥ तयोरासीत्सुतुमुलःसंप्रहारःसुदारुणः ॥ २० ॥ नखदंष्ट्रायुधवतोर्व्याघ्रयोरिवहृप्तयोः ॥ मातंगमिवमातंगोलु
लावचनमाहिषः ॥ २१ ॥ सचाप्येवंतथाभीमंप्रतिजग्राहवीर्यवान् ॥ तमाक्षिपत्कीचकोऽथबलेनबलिनांवरः ॥ २२ ॥
तयोर्भुजविनिष्पेषान्मर्दितौचपरस्परम् ॥ सशब्दस्त्वभवद्घोरोमेघस्फोटसमोयुधि ॥ २३ ॥ अथैनमाक्षिपन्मध्येबलात्संगृह्य
वापुनः ॥ धूनयामासवेगेनचंडोवायुरिवद्रुमम् ॥ २४ ॥ भीमसेनपरामृष्टोदुर्बलोबालिनांरणे ॥ पातितोभुविभीमेनकीचको
रुधिरंवमन् ॥ २५ ॥ पुनरुत्थायवेगेनभीममासादितश्वसः ॥ पुनश्चभीमसेनेनपातितोनर्त्तनेगृहे ॥ २६ ॥ तद्गृहंकंपितंतत्र

॥४६॥ अ०४४

वि०पर्व ४

तद्भ्राताच्चमुहुर्मुहुः ॥ प्रतिशब्दोमहानासीत्तस्मिन्नर्तनवेश्मनि ॥ २७ ॥ कीचकंशिथिलीभूतंपातयित्वाधरातले ॥ घर्षयामा
सवेगेनसिंहोमृगइवाक्षिपत ॥ २८ ॥ अथतंभग्नसर्वांगंगतासुंकीचकंखलम् ॥ हस्तौपादौशिरोभीमोदेहमध्येविचिक्षिपत् ॥
॥ २९ ॥ मांसपिंडंततःकृत्वादेव्याअग्रेन्यवेदयत ॥ पश्चाच्छिलायांरुधिरेणाक्षराणिकृतानिवै ॥ ३० ॥ लिखितंभीमसेनेन
मयैवायंनिपातितः ॥ एवंकृत्वातदाभीमस्तस्याभरणसंचयम् ॥ ३१ ॥ गृहीत्वामत्स्यराजस्यद्वारेत्यक्त्वागृहंययौ ॥ दृष्ट्वालं
करणान्सर्वान्हाहाकारोमहानभूत् ॥ ३२ ॥ सुदेष्णाशोकसंतप्तारुरोदकरुणंतदा ॥ गंधर्वेणहतोवीरोजनैर्लोकेषुभाषितम्
॥ ३३ ॥ तदातेकीचकाःसर्वेराजापितैर्युतस्तदा ॥ आगत्यालोकयामासमांसपिंडोह्यदृश्यत ॥ ३४ ॥ तान्यक्षराणिसंदृश्य
विराटःसस्मितोऽवदत ॥ वाचयध्वंजनायूयंशिलायांकिंविलेखितम् ॥ ३५ ॥ वाचयित्वातुतेलोकाःसस्मिताश्चाभवंस्तदा ॥
तद्भ्रातृभिःसासैरंध्रीनीतावसतिकाननम् ॥ ३६ ॥ प्रज्वालनायभ्रात्रावैतदाकर्ण्यहिसत्वरम् ॥ भीमोभयंकरंरूपंधृत्वासर्वान्
जघानह ॥ ३७ ॥ बल्लवेनैवक्रुद्धेनकीचकानांतरस्विनाम् ॥ लीलयाकालरूपेणहतंपंचाधिकंशतम् ॥ ३८ ॥ तेषांमध्येतुचै
कस्यजिह्वाचोत्पाटितातलात् ॥ तेनागत्यतुसंज्ञाभिराजाऽग्रेतुनिवेदितम् ॥ ३९ ॥ तच्छ्रुत्वाहसितोराजासभास्थास्तेपिस
स्मिताः ॥ गंधर्वैश्चनिशीथेवैकीचकाश्चनिपातिताः ॥ ४० ॥ शकुनिर्जनश्रुतिंश्रुत्वादुर्योधनमुवाचह ॥ गंधर्वैश्चविराटस्यह
तास्तेकीचकाइति ॥ ४१ ॥ इतिश्रुत्वासभायांतुद्रोणाचार्योब्रवीदिदम् ॥ निमित्तस्तुपुराबाप्राज्योतिर्विद्भिस्तुजातके ॥४२॥
मृत्युर्भीमाच्चमत्तानांकीचकानांमहात्मनाम् ॥ हिडिंबबकयोश्चैवकीचकानांतथैवच ॥ मरणंभीमहस्तेनसत्यमुक्तंपुरातनैः ॥ ॥४६॥
॥ ४३ ॥ द्रोणवाक्यंसमाकर्ण्यशकुनिर्वाक्यमब्रवीत ॥ शकुनिरुवाच॥त्वच्छासनात्प्रभुंजंतिद्रोणप्रभृतयस्त्वमी॥४४॥ पांड

वानांकथानित्यंकुर्वंतिदुष्टबुद्धयः ॥ गतानष्टाःक्षयंप्राप्ताःपांडवान्नृपसत्तम ॥ ४५ ॥ गुणान्गृण्हंतिशत्रूणामात्मानंदोषवादिनः ॥ ४६ ॥ अथवायदितिष्ठंतिपांडवादैवमोहिताः ॥ उपायंचप्रवक्ष्यामिज्ञातवांस्तेप्रयत्नतः ॥ ४७ ॥ ज्ञातानांचपुनस्तेषांवनवासोभविष्यति ॥ सम्यक्मंत्रंप्रवक्ष्यामितेषांप्रकटनायच ॥ ४८ ॥ गोग्रहःक्रियतांतत्रविराटनगरेप्रभो ॥ यदितत्रभविष्यंतिह्यागमिष्यंतिगोग्रहे ॥ ४९ ॥ ज्ञातानांतत्रचास्माभिःपुनर्द्वादशवार्षिकम् ॥ वनवासोनृपश्रेष्ठभविष्यतिनसंशयः ॥ ॥ ५० ॥ कर्णउवाच ॥ सुंदरंजल्पितंराजन्मातुलेनसुबुद्धिना ॥ गोग्रहःक्रियतांतत्रतेषांज्ञानेसुयोधन ॥ ५१ ॥ कर्णस्यवचनंश्रुत्वाभीष्मोवचनमब्रवीत् ॥ ईदृशंहिनकर्त्तव्यंयदिपृच्छसिमेमतम् ॥ ५२ ॥ वीराणांक्षत्रियाणांचह्येदंकर्मनयुज्यते ॥ गोग्रहंनैवकुर्वंतिचोराःपल्लिनिवासिनः ॥ ५३ ॥ आगमिष्यंतितेतत्रयुद्धायपालनेगवाम् ॥ ५४ ॥ इतिश्रीमहाभारतेभारतसारे विराटपर्वणिचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ पंचचत्वारिंशतौहिमालिकात्पांडुबोधनम् ॥ सुशर्मणाविराटस्यसमरश्चेहकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ इतिभीष्मवचःश्रुत्वापुनःशकुनिरब्रवीत् ॥ शकुनिरुवाच ॥ वृद्धानांपंडितानांचगृहेवासस्तुयुज्यते ॥ २ ॥ कथांविचित्रांकुर्वंतिसभायांचगृहेषुच ॥ वार्त्तांसर्वेषुसंग्रामेशूराणांभयकारकाः ॥ ३ ॥ इतितस्यवचःश्रुत्वाजनास्तत्रस्थिताश्चये ॥ इतिनानामतीर्ज्ञात्वाप्रोचुःसर्वेजनाधिपम् ॥ ४ ॥ अस्मद्वचनमाकर्ण्यक्रियतांहिपरंत्विदम् ॥ प्रेरयत्वंचरंकंचित्पांडवानांनिरीक्षणे ॥ ५ ॥ आगतेचतुरेतस्मिन्प्रत्यभिज्ञायपांडवान् ॥ पश्चाद्विचार्ययुष्माभिःक्रियतांचयथेप्सितम् ॥ ६ ॥ सर्वेषांचवचःश्रुत्वाभीष्मोधर्मभृतांवरः ॥ मालाकारंसमाहूयवाक्यंचेदमुवाचह ॥ ७ ॥ चरोभूत्वातुगच्छत्वंयत्रतिष्ठंतिपांडवाः ॥ मालाकारउवाच ॥ कथंज्ञास्याम्यहंभीष्मकुत्रतिष्ठंतिपांडवाः ॥ ८ ॥ भीष्मउवाच ॥ यत्रदेशेसुभि

भारत क्षंचयत्रनिष्पत्तिरुत्तमा ॥ कामंववर्षपर्जन्योबहुच्छायोवनस्पतिः ॥ बहुपुष्पाबहुफलाःसर्वदोषविवर्जिताः ॥ ९ ॥ अग्निहोत्र सार.
॥४७॥ पराविप्रावेदशास्त्रपरायणाः ॥ प्रभूतदुग्धागावश्चस्वधर्मनिरताजनाः ॥ १० ॥ सर्वदामुदितालोकादुःखदारिद्र्यवर्जिताः ॥
महामहोत्सवोयत्रदृश्यतेचगृहेगृहे ॥ ११ ॥ एवंचिन्हानियत्रस्युस्तत्रदेशेयुधिष्ठिरः ॥ भवंत्येवहिचिन्हानियत्रराजायुधि अ०४५
वि०पर्व ष्ठिरः ॥ १२ ॥ मालिकत्वमिदंकार्यंकुरुदुर्योधनस्यच ॥ मालाकारस्तथादेशंगृहीत्वाभीष्मभाषितम् ॥ १३ ॥ शिरस्याधाय
४ चतुरोविराटनगरंययौ ॥ यदुक्तंभीष्मदेवेनदृष्टंतत्रहितेनतत् ॥ १४ ॥ गीतवादित्रघोषाश्चश्रूयंतेचपदेपदे ॥ दृष्टंविराटनग
रंबहुप्रासादशोभितम् ॥ १५ ॥ पुरद्वारेप्रविश्यासौविराटमंदिरंययौ ॥ सभायांतत्रदूतेनदृष्टोराजायुधिष्ठिरः ॥ १६ ॥ कंक
ब्राह्मणरूपेणसभायांचयुधिष्ठिरः ॥ दत्ताचिकित्सितामालातंदृष्ट्वासोऽतिविस्मितः ॥ १७ ॥ ज्ञातोराजातदातेनभीमंतुदृ
ष्टवान्तदा ॥ सूपकारस्यवेषेणविराटस्यमहानसे ॥ १८ ॥ बृहन्नटाकारधारीकन्यानर्त्तनकोऽर्जुनः ॥ गोषुवाजिषुरक्षार्थंयम
लौचनिरीक्षितौ ॥ १९ ॥ द्रौपदीचसुदेष्णायाःसैरंध्रीरूपधारिणी ॥ एवंतुपांडवान्दृष्ट्वामालिकोऽप्यागमत्तदा ॥ २० ॥ ह
स्तिनापुरमागत्यसभायांचाब्रवीन्नृपम् ॥ मालाकारउवाच ॥ दृष्टोयुधिष्ठिरोराजाचतुर्भिर्भ्रातृभिःसह ॥ २१ ॥ अज्ञानाद्य
द्वचोवक्ष्येनृपतत्क्षंतुमर्हसि ॥ तत्रदेशेनगंतव्यंयत्रतिष्ठंतिपांडवाः ॥ २२ ॥ प्राणानपिहरिष्यंतिकिंतुराज्यंनराधिप ॥ इतित
द्वाक्यमाकर्ण्यक्रुद्धोराजासुयोधनः ॥ २३ ॥ बंधनंताडनंचास्यमालाकारस्ययुज्यते ॥ योवक्तिशत्रुतोभीतिंसभायांभाषसे
शठ ॥ २४ ॥ दुर्योधनेनतत्रैवप्रेषिताःसर्वसैनिकाः ॥ सुशर्माणंसमाहूयप्रादिदेशेदृशंवचः ॥ २५ ॥ दुर्योधनउवाच ॥ सुश ॥४७॥
र्मन्याहिशीघ्रंत्वंचतुरंगबलान्वितः ॥ दक्षिणांदिशमाश्रित्यविराटनगरस्यच ॥ २६ ॥ गृह्यतांगोधनंचास्यदुष्टस्यनाशनंकु

९३

रु ॥ द्वितीयेह्युत्तरस्यांचह्यागमिष्यामिगोग्रहे ॥ २७ ॥ इत्युक्त्वाचसुशर्माणंप्रेषयामासगोग्रहे ॥ जगामाथसुशर्मासौविरा
टनगरंप्रति ॥ २८ ॥ दृष्टानिदुर्निमित्तानिकार्यनाशकराणिच ॥ प्रस्थितोऽसौमहातेजाश्वतुरंगबलान्वितः ॥ २९ ॥ दक्षिण
स्यांमहाराजासुशर्मागोग्रहंतदा ॥ कृतवांस्तत्रगोपालाविराटनगरंययुः ॥ ३० ॥ प्रकुर्वंतितदारौद्रंकोलाहलमतिद्रुतम् ॥ गो
धनंव्यावृतंसर्वंगोपालाबहवोहताः ॥ ३१ ॥ इतितेषांवचःश्रुत्वाविराटोविस्मयंगतः ॥ विराटउवाच ॥ योद्धारोरणशूराश्च
विराटनगरेस्थिताः ॥ ३२ ॥ विलंबरहिताःसर्वेयुद्धायकृतनिश्चयाः ॥ निर्यांतुस्वबलैर्युक्तामच्छासनपुरःसराः ॥ ३३ ॥ इ
त्युक्तेहिविराटेतुयोद्धारोबलसंयुताः ॥ निर्गतामदहृष्टाश्चविराटनगरात्तदा ॥ ३४ ॥ अष्टौरथसहस्राणिलक्षमेकंतुवाजिनाम् ॥
अयुतंहस्तिनांतत्रस्वर्णघंटानिनादितम् ॥ ३५ ॥ अनंतंपत्तिसंघातांस्ततक्षणादेवनिर्गताः ॥ टोकायचरथोदत्तःपताकाःशु
भ्रवाहनाः ॥ ३६ ॥ कंकेनचतदाराज्ञाविज्ञप्तस्त्वीदृशंवचः ॥ बल्लवस्यरथोदेयोराजसंग्रामशोभिनः ॥ ३७ ॥ बल्लवेनपुरा
युद्धेभग्नावीरास्त्वनेकधा ॥ कंकस्येतिवचःश्रुत्वातथेतिप्रत्यभाषत ॥ ३८ ॥ बल्लवस्यरथोदत्तोससारथिहयैर्वृतः ॥ ततोऽसौ
प्रस्थितोराजाकोपाविष्टःससैनिकः ॥ ३९ ॥ नेदुर्दुंदुभयोरौद्राःशंखनिर्घोषभीषणाः ॥ कंपितावसुधासर्वारेणुभिःच्छादितोर
विः ॥ ४० ॥ अंधकारस्तदाजातोविराटेप्रस्थितेसति ॥ सुशर्माचस्थितस्तत्रकृत्वागोधनमग्रतः ॥ ४१ ॥ युद्धार्थंकृतसन्नाहा
न्दृष्ट्वाचसुभटान्दृढान् ॥ उभयोःसैन्ययोस्तत्रसंग्रामस्तुमुलोऽभवत् ॥ ४२ ॥ खड्गैःपुरुषसंघातैर्मुद्गरैश्चातिदारुणैः ॥ नारा
चैर्विविधाकारैःसंग्रामोऽभूद्भयंकरः ॥ ४३ ॥ पत्तिंपदातिरथिनंरथेशंतुरंगसादोतुरगाधिरूढम् ॥ यंताजगस्थोऽभ्यपतद्गजस्थं
तुल्यंप्रतिद्वंद्विबभूवयुद्धम् ॥ ४४ ॥ विराटश्चसुशर्माचयुयुधातेपरस्परम् ॥ सुशर्मणाविराटोऽसौबाणेनैकेनताडितः ॥ ४५ ॥

अश्वांश्चपातयामासभीतिदैरिषुभिर्बली ॥ सारथिंत्वेकबाणेनपातयामासभूतले ॥ ४६ ॥ विराटंभूमिपतितंमूर्च्छापन्नंविलो
क्यच ॥ सुशर्माचमहावीरोरथेसंस्थाप्यतंनृपम् ॥ ४७ ॥ गोधनंचपुरस्कृत्यपरावृत्यशनैःशनैः ॥ ततोविराटसैन्यंचनिर्नाथं
नगरंप्रति ॥ ४८ ॥ पलायमानंतंदृष्ट्वाभीमाधर्मात्मजंजगौ ॥ त्वदाज्ञयानिबद्धोऽहंकर्तुंकिमपिनक्षमः ॥ ४९ ॥ अनेनानिर्जि
तःस्वामिन्विराटःशत्रुणांनृपः ॥ विलंबोनात्रकर्त्तव्योममाज्ञादीयतांप्रभो ॥ ५० ॥ विराटंमोचयित्वातुगोधनंचहराम्यहम्
॥ ५१ ॥ इतिश्रीमहाभारतेभारतसारेविराटपर्वणि विराटमूर्च्छायां पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ षट्चत्वारिंशकाध्या
येसुशर्मणःपराजयः ॥ जयोभीमस्ययुद्धाच्चनृपमोचनमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ इत्युक्तेभीमसेनेतुधर्मोवचनमब्र
वीत् ॥ धर्मउवाच ॥ गतागावोविराटश्चनीयतेशत्रुकर्षण ॥ २ ॥ प्राप्तव्योहिविराटस्तुतत्राज्ञाकिंविचार्यते ॥ यस्यान्नानि
चभुक्तानिचिरंचैवोषितागृहे ॥३॥ कर्मणामनसावाचाहितंतस्यसमाचरेत् ॥ गतंत्रयोदशंवर्षंतदूर्ध्वंचदिनानिषट् ॥ ४ ॥ अ
धुनाचत्वयाकार्यंरणेभीमयथेप्सितम् ॥ धर्मजाज्ञांतदालब्ध्वाभीमसेनोतिहर्षितः ॥ ५ ॥ सिंहनादंचकारोच्चैःशत्रूणांत्रासकार
कम् ॥ ततोभीमोरथंत्यक्त्वाधावितश्चसुशर्मणे ॥ ६ ॥ सरलंवृक्षमुत्पाट्यजगामकुंजरान्प्रति ॥ तेनतान्पोथयामासवृक्ष
संचूर्णतांगतः ॥ ७ ॥ ततोभीमोमहाबाहुःकुंजरेणैवकुंजरम् ॥ रथैरेवरथान्वाश्वैरश्वान्जघ्नेपृथक्पृथक् ॥ ८ ॥ एवंभीमोर
थेक्रुद्धस्तत्सैन्यंविनिपातयत् ॥ निमिषार्द्धेनवीरोऽसौसुशर्माणमथासदत् ॥ ९ ॥ सुशर्मापिमहाबाहुःशनैर्भीममताडयत ॥
इषुभिर्भिन्नगात्रोऽपिभीमोजग्राहतंध्रुवम् ॥ १० ॥ धरण्यांपोथयामासभ्रामयित्वाशिरोपरि ॥ संचूर्णितेरथेतस्मिन्सुशर्माच
विराटकः ॥ ११ ॥ उभौनिपतितौभूमौगव्यूतिपंचकेरथात् ॥ ततोभीमःसुशर्माणंकेशेधृत्वातिविह्वलम् ॥ १२ ॥ धर्मराज

पुरोनीत्वाशिरश्छेत्तुंसमाददे ॥ तदासुशर्माराजानमिदंवचनमब्रवीत् ॥ १३ ॥ सुशर्मोवाच ॥ रक्षमांत्वंनृपश्रेष्ठभीमसेनात् यमोपमात् ॥ पुनर्नेदंकरिष्यामिकार्यंक्षत्रविवर्जितम् ॥ १४ ॥ मांमोचयकृपासिंधोपश्यदासंदयानिधे ॥ युधिष्ठिरउवाच ॥ भोभोभीममहाबाहोमुंचैनंचसुशर्मकम् ॥ १५ ॥ जामातरंतुचास्माकंनवध्योहिकदाचन ॥ भीमउवाच ॥ जामातुःकेशहानिंवैकरिष्येधर्मनंदन ॥ १६ ॥ हास्यंकुर्वंतितेसर्वेशालकायेभवंतिहि ॥ इत्युक्त्वाभीमसेनस्तुखड्गेनैवसुशर्मणः ॥ १७ ॥ शिरःकूर्चंचमूर्धन्यान्द्वौद्वौविनिकृंतत ॥ धर्मेणवार्यमाणोपिसुशर्माणंतथाकरोत् ॥ १८ ॥ दुर्मनाहिसुशर्माचजीवशेषःकुरून्ययौ ॥ तदाधर्माज्ञयावीरोविसंज्ञंचविराटकम् ॥ १९ ॥ स्वरथेस्थापयामासगोधनंहिपुरस्कृतम् ॥ एतस्मिन्नंतरेराजाविराटःसमबुद्ध्यत ॥ २० ॥ कंकंचबल्लवंचाथददर्शस्वरथोपरि ॥ ततोविराटःस्वरथेसंविश्यचजगर्जच ॥ २१ ॥ सर्वंबलंजितंसम्यक्प्रस्थितःस्वपुरंप्रति ॥ २२ ॥ इतिश्रीमहाभारतेभारतसारेविराटपर्वणिभीमपराक्रमेदक्षिणगोग्रहोनामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ सप्तचत्वारिंशतिकेगोषूत्तरविकत्थनम् ॥ अर्जुनस्यचशूरत्वंमार्गगमनमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ शृणुराजन्विचित्रंतमर्जुनस्यपराक्रमम् ॥ यंश्रुत्वाशूरदेहेषुरोमहर्षश्चजायते ॥ २ ॥ ततोदुर्योधनोराजासर्वसैन्यसमन्वितः ॥ भीष्मद्रोणकृपैःसार्धमाजगामोत्तरांदिशम् ॥ ३ ॥ गावस्तेनहृताःसर्वागोपालाबहवोहताः ॥ हतशेषाश्चगोपालाविराटनगरंययुः ॥ ४ ॥ दृष्ट्वातांनगरींशून्यांविराटस्यमहात्मनः ॥ ततस्तेराजभवनंविविशुर्भयपीडिताः ॥ ५ ॥ आक्रोशंतोमहाराजन्हतागोधनमाहतम् ॥ दुर्योधनेनभोमातरुत्तरस्यांतदादिशि ॥ ६ ॥ इतितेषांवचःश्रुत्वासुदेष्णाबहिरागता ॥ समस्तस्त्रीजनैःसार्धमुत्तरेणसमन्विता ॥ ७ ॥ उत्तरस्त्वब्रवीद्वाक्यंसुदेष्णांमातरंप्रति ॥ विराटेनजितंसैन्यंगोधनंव्याप्ततंपुनः ॥

॥ ८ ॥ प्रकुर्वतिकिमर्थंहिगोपालाभैरवंरवम् ॥ सुदेष्णोवाच ॥ दक्षिणस्यांगतःपुत्रपितातेसुमहाबलः ॥ ९ ॥ तत्रतेन
जितंसैन्यंगोधनंव्यापृतंपुनः ॥ उत्तरस्यांतथापुत्रदुर्योधनःसमागतः ॥ १० ॥ महाबलोमहाकायोह्यजेयःपृथिवीतले ॥
अस्मांश्चयोजयित्वापिराज्यंभुंक्तेबलादसौ ॥ ११ ॥ तथापिक्षत्रधर्मेणस्थेयंनात्रविचारणा ॥ अधुनाचपुरीशून्याकिंकरि
ष्यसिचोत्तर ॥ १२ ॥ इतितस्यवचःश्रुत्वाउत्तरोवाक्यमब्रवीत् ॥ उत्तरउवाच ॥ धैर्यंकुरुष्वमातस्त्वंदर्शयिष्यामिपौ
रुषम् ॥ १३ ॥ कुरूणांसकलंसैन्यंविजेष्यामिरणांगणे ॥ एतद्वाक्यंचवदतिध्रुवस्थानेचजंबुकाः ॥ १४ ॥ शङ्खंचक्रुस्तदा
तेनजयशङ्खमकारिच ॥ उवाचगर्वतोवाक्यंमातरंचोत्तरःशिशुः ॥ १५ ॥ उत्तरउवाच ॥ द्रोणभीष्मादयःकेऽमिपुरतोममयु
ध्यतः ॥ अहमेकोहनिष्यामिकौरवान्सकलान्रणे ॥ १६ ॥ पुनरेकंनपश्यामिसारथिंरथवाहकम् ॥ तस्यवाक्यंसमाकर्ण्य
मालिनीवाक्यमब्रवीत् ॥ १७ ॥ मालिन्युवाच ॥ पूर्वंचासौमयादृष्टःसारथिश्चबृहन्नटः ॥ इतितस्यावचःश्रुत्वाउत्तरोहर्षसं
युतः ॥ १८ ॥ आहूयतांततःशीघ्रंयथागच्छामिगोग्रहे ॥ तयाह्याकारितःशीघ्रमागतोऽसौबृहन्नटः ॥ १९ ॥ उत्तरस्तुतदा
प्राहमानपूर्वंबृहन्नटम् ॥ भोभोवीरमहायुद्धेसारथ्येयदिनिश्चलः ॥ २० ॥ अश्वान्प्रेरयमेशीघ्रंयथागच्छामिगोग्रहे ॥ कौर
वांस्तान्विनिर्जित्यचानयिष्यामिगोधनम् ॥ २१ ॥ बृहन्नटउवाच ॥ सैरंध्र्यासत्यमेवोक्तंजानामिरथकर्महि ॥ दिवसाबहवो
जातारथवाहेपरंमम ॥ २२ ॥ परंचाद्यगवामर्थंवाहयिष्यामितेरथम् ॥ बालवृद्धमृतस्त्रीणांदुःखार्तंव्याधितात्मनाम् ॥ २३ ॥
गवामर्थेब्राह्मणार्थेसमयःकिंकरिष्यति ॥ इतितस्यवचःश्रुत्वाउत्तरोवाक्यमब्रवीत् ॥ २४ ॥ रथंसन्नद्धदृढंशीघ्रंबृहन्नटसमान
य ॥ उत्कृष्टाःसंतियेचाश्वायुज्यंतांतेरथेमम ॥ २५ ॥ शस्त्राण्यस्त्राणिसर्वाणिरथेस्थापयवेगतः ॥ तैरहंतान्विजेष्यामियदि



96

धर्मःसनातनः ॥ २६ ॥ इतितस्यवचःश्रुत्वाहर्षतोऽसौबृहन्नटः ॥ ओमित्युक्त्वामहावीरउत्तरोक्तंतथाकरोत् ॥ २७॥ हंस
वर्णाःकुलीनाश्वस्वर्णकिंकिणिभूषिताः ॥ ततस्तेचार्जुनंदृष्ट्वाहर्षिताश्वतदाभृशम् ॥ २८ ॥ सज्जीकृत्यरथंदिव्यमानीयोत्तरस
निधौ ॥ उवाचचोत्तरंतत्रत्वहोहयहयावह ॥ २९ ॥ इतितस्यवचःश्रुत्वायावत्तिष्ठतिचोत्तरः ॥ तावत्तस्यानुजाबालाचोत्तरा
वाक्यमब्रवीत् ॥ ३० ॥ उत्तरोवाच ॥ क्रीडार्थेकर्पटाःश्रेष्ठाह्यानेतव्यास्त्वयामम ॥ रिपून्जित्वासमागच्छजयलक्ष्म्यावृ
तःस्वयम् ॥ ३१ ॥ इतितस्यावचःश्रुत्वामातरंतांप्रणम्यच ॥ मात्रानिवार्यमाणोपिनिर्जगामपुराद्बहिः ॥ ३२ ॥ पुरान्निर्गच्छ
तस्तस्यवामेखररवोभवत् ॥ रथस्यगच्छतस्तस्यमृगाजग्मुःप्रदक्षिणम् ॥ ३३॥ शकुनानितानिदृष्ट्वासोहर्षितोऽसौभृशंनृप ॥
जयनिश्चयमाज्ञायप्रोवाचनटमुत्तरः ॥ ३४ ॥ रथंप्रेरयमेशीघ्रंय त्राजासुयोधनः ॥ रथवेगात्पुरोदृष्टंकौरवाणांबलंमहत् ॥
॥ ३५ ॥ अर्जुनेनोत्तरेणाथछत्रैश्वबहुभिःर्वृतम् ॥ महतीभिःपताकाभिःस्वैःस्वैश्चिन्हैरलंकृतम् ॥३६॥ दुंदुभीनांनिनादैश्च
गजानांबृंहितैस्तथा ॥ हयानांहेषितैश्चापिरथानांनेमिनिःस्वनैः ॥ ३७ ॥ भटानांसिंहनादैश्चभूमिकंपइवाभवत् ॥ इतिनि
र्घोषसंघातंश्रुत्वाभीतस्तदोत्तरः ॥ ३८ ॥ उत्तरउवाच ॥ वायुवेगरथंचात्रमांवारयबृहन्नट ॥ कौरवैःसहसंग्रामंकर्त्तुंनास्मिक्ष
मोरणे ॥ ३९ ॥ राजपुत्रामहावीरामहाबलपराक्रमाः ॥ भीष्मद्रोणकृपाचार्याःकर्णश्चरविनंदनः ॥ ४० ॥ एकेनैवनिमेषेणम
ममृत्युंविधास्यति ॥ व्यावर्त्तयरथंशीघ्रंत्वंचेदिच्छसिजीवितम् ॥ ४१ ॥ प्रभूतमर्थंदास्यामिगृहंगत्वाबृहन्नट ॥ बृहन्नटउवा
च ॥ क्षत्रियाणांचयोद्धृणामयुक्तमीदृशंवचः ॥ ४२ ॥ गवांतुनीयमानानांसंग्रामेयःपलायते ॥ सयातिनरकंघोरंजीवन्नपयशो
भवेत् ॥ ४३ ॥ गवांतुर्नीयमानानांशरणागतरक्षणे ॥ विशेषेणतुयोद्धव्यंनतुयुक्तंपलायनम् ॥ ४४ ॥ जितेचलभतेलक्ष्मींमृते

चापिसुरांगनाः ॥ क्षणविध्वंसिनीकायेकाचिंतामरणेरणे ॥ ४५ ॥ द्वारंविमुक्तेःप्रतिबंधमुक्तंकीर्त्यंगनानर्तनभूमिरंगे ॥ फलंजि
गीषोरिहजीवितस्यकःसमरंप्राप्यपराङ्मुखःस्यात् ॥ ४६ ॥ द्वाविमौपुरुषौलोकेसूर्यमंडलभेदकौ ॥ परिव्राड्योगयुक्तश्चरणे
चाभिमुखोहतः ॥ ४७ ॥ यत्रयत्रहताःशूराःशत्रुभिःपरिवेष्टिताः ॥ अक्षयान्लभतेलोकान्यदिक्लीबंनभाषते ॥ ४८ ॥ ज्ये
ष्ठपुत्रोविराटस्यशूरःशोभनउत्तरः ॥ कौरवैरथसंग्रामंकुरुष्वनिर्भयःस्थितः ॥ ४९ ॥ इतिश्रीमहाभारतेभारतसारेविराटपर्व
णिअर्जुनवाक्यंनामसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ अष्टचत्वारिंशतितमेकुरूणांपार्थकीर्त्तनम् ॥ परस्परंविवादश्चतेषामेव
सकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ इत्यर्जुनवचःश्रुत्वाउत्तरोवाक्यमब्रवीत ॥ उत्तरउवाच ॥ वीरमुख्यांयुद्धवार्त्तांजा
नासित्वंबृहन्नट ॥ २ ॥ गीतवादित्रनृत्येचकुशलस्त्वंनपुंसकः ॥ गोभिर्नैवास्तिमेकार्यंदुग्धेनास्तिप्रयोजनम् ॥ ३ ॥
कांजिकंचैवभक्ष्यामिजीवंलिप्सेनगोधनम् ॥ येनयेनप्रकारेणजीवंरक्षेद्धिपंडितः ॥ ४ ॥ व्यावर्त्तयरथंशीघ्रंविराटनगरंप्र
ति ॥ यदितेजीवितंभव्यंमद्वाक्यंत्वंसमाचर ॥ ५ ॥ वदंतौतुतदातत्रएवमर्जुनचोत्तरौ ॥ कौरवाणांबलंतावन्निरीक्षंतौपर
स्परं ॥ ६ ॥ किमिदंकुतह्यायातिसर्वेषांविस्मयोऽभवत् ॥ स्त्रीरूपंनररूपंचरथारूढंचदृश्यते ॥ ७ ॥ सुभटानांचवीरा
णामयंकालःसमागतः ॥ इतितेषांवचःश्रुत्वाशकुनिर्वाक्यमब्रवीत् ॥ ८ ॥ शकुनिरुवाच ॥ धनंत्हृतंविराटस्यदेशो
विप्लावितस्त्वया ॥ सौजन्यंकर्त्तुकामोयमायातिचसकन्यकः ॥ ९ ॥ दुर्योधनमहाबाहोविवाहंकुरुवेगतः ॥ इत्युक्त्वा
शकुनिर्वाक्यंदुर्निमित्तान्यनेकशः ॥ १० ॥ जातानिचतदासैन्येविस्मयस्तुमहानभूत् ॥ तस्मिन्बलेनृपश्रेष्ठक्रूराःक्रव्यादप
क्षिणः ॥ ११ ॥ कोलाहलंप्रकुर्वाणाभ्रमंतिमस्तकोपरि ॥ अन्येपिश्वापदाजीवाःकाननस्यनिवासिनः ॥ १२ ॥ तेसर्वेसैन्य

मध्यस्थाःक्रीडंतिस्वेच्छयानृप ॥ दुर्निमित्तंसमालोक्यद्रोणोवचनमब्रवीत् ॥ १३ ॥ द्रोणउवाच ॥ अन्यच्चाप्यशुभंपश्यत्वं
हिराजन्सुयोधन ॥ उज्ज्वलान्यायुधान्यत्रकृष्णाराजन्चमूस्तव ॥ १४ ॥ उल्कापातंचनिर्घातंदिशोदग्धंश्चपश्यत ॥ रुदंति
वाजिनःसर्वेहीनसत्वाश्चक्षत्रियाः ॥ १५ ॥ रजोवृष्टिर्भवत्येषाशीतांशुरिवभास्करः ॥ दुर्निमित्तंरणेदृष्ट्वातन्मन्येरिपुतोभय
म् ॥ १६ ॥ दारुणश्चात्रसंग्रामोभविष्यतिनराधिप ॥ अर्जुनेनविनायोद्धुंकःशक्नोतित्वयासह ॥ १७ ॥ तन्मन्येचाद्यसंग्रा
मोह्यर्जुनेनभविष्यति ॥ १८ ॥ नदीजलंकेशवनारिकेतुर्नगाह्वयोनामनगारिसूनुः ॥ एषोंऽगनावेषधरःकिरीटीजित्वाऽवय
न्नेष्यतिचाद्यगावः ॥ १९ ॥ भीष्मउवाच ॥ एषानयोषायदियोषिदेषाभवेत्तदाशुंभनिशुंभहंत्री ॥ मायामयंवावपुरातनो
तिलीलामयोवापुरुषःपुराणः ॥ २० ॥ सएषनारीवरवेषधारीप्राणापहारीरिपुनाशकारी ॥ वनंविगाह्यागतएषपार्थस्त्वमेव
रक्षांकुरुकौरवाणाम् ॥ २१ ॥ कर्णउवाच ॥ वृद्धानांपंडितानांचगृहेवासश्चयुज्यते ॥ वृद्धाश्चपंडितायेवैभव्यानात्रसुयोध
न ॥ २२ ॥ राज्यभ्रष्टाश्चतेजातानष्टप्रायःश्चपांडवाः ॥ स्मरंतितान्सदाशत्रून्भीष्मद्रोणादयस्त्वमी ॥ २३ ॥ श्राद्धदानेच
होमेचविवाहेचमहोत्सवे॥भोजयित्वाचसंपूज्यस्थापयेदासनेशुभे॥२४॥यद्येकएवार्जुनोऽयमागतःकिंकरिष्यति॥किंशक्नोतिम
माग्रेतुस्थातुमेकोधनंजयः ॥ २५ ॥ ईदृशंवचनंश्रुत्वाकृपाचार्योब्रवीदिदम् ॥ कर्णत्वंहिमहावीरवदमाईदृशंवचः॥२६॥ एके
नचार्जुनेनैवकिंकिंकार्यंनसाधितम् ॥ कृतंतेनैवरूपेणसुरेंद्रस्यैवपश्यतः ॥ २७ ॥ वन्हिंखांडवदाहेनतर्पयामासवेगतः ॥ ए
कःसुभद्रामारोप्यरथेशुभ्रेजहारसः ॥ २८ ॥ पश्यतांयादवानांचबलभद्रस्यपश्यतः ॥ एकोहिमाचलंगत्वातपस्तप्त्वासुदु
ष्करम् ॥ २९ ॥ किरातरूपिणंदेवंनीत्वासंतोष्यधूर्जटिम् ॥ एकःपाशुपतास्त्रंचतीक्ष्णंजग्राहशंकरात् ॥ ३० ॥ एकःसमा

चरत्पूर्वमतस्यवेधंभयंकरम् ॥ काम्यकेतपनेपूर्वधृतोराजासुयोधनः ॥ ३१ ॥ चित्रांगदेनचतदामोचितःसहबंधुभिः ॥ एके
नचार्जुनेनैवतदात्वंकुत्रसंस्थितः ॥ ३२ ॥ राजसूयेमहायज्ञेत्वासमुद्रांतभूमिपाः ॥ वशीकृताश्चवीरेणह्यर्जुनेनबलीयसा ॥
॥ ३३ ॥ अनेनचार्जुनेनाथशरजालेनसागरे ॥ बद्धोजितःकपींद्रोपिहेमानीतंबिभीषणात ॥ ३४ ॥ नकर्हिचित्त्वयादृष्टोह्य
र्जुनस्यपराक्रमः ॥ अचिरेणैवकालेनह्यर्जुनस्त्वांहनिष्यति ॥ ३५ ॥ अश्वत्थामोवाच ॥ अप्रसिद्धकुलेजातःसोब्रवीदीदृशं
वचः ॥ निर्जितास्त्वरयःकर्णकिंत्वंगर्वयसेऽधुना ॥ ३६ ॥ इतितेषांवचःश्रुत्वाकर्णोवचनमब्रवीत् ॥ यत्कुलेऽहंमहावीरा
योऽसौसोऽहंभवाम्यहम् ॥ ३७ ॥ यस्यास्तिमेकुलेजन्मदेवाजानंतिनेतरे ॥ अर्जुनेनचसंग्रामंकरिष्याम्यद्यनिश्चितम् ॥
॥ ३८ ॥ इत्थंमिथोहिजल्पंतःसर्वेराज्ञानिवारिताः ॥ ३९ ॥ इतिश्रीमहाभारतेभारतसारेविराटपर्वणिदुर्योधनसेनापरस्प
रविचारोनामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ एकोनपंचाशतितमेचोत्तरस्यपलायनम् ॥ गोसुखंपार्थशूरत्वंतस्याप्युत्कर्षउ
च्यते ॥ १ ॥ वैशंपायनउवाच ॥ उत्तरोभयभीतस्तुरथाद्वेगतरस्तदा ॥ शीघ्रमुत्पद्यभूमौचपलायनमथाकरोत् ॥ २ ॥ तत्क्ष
णादेवपार्थेनगच्छमानस्तदोत्तरः ॥ पश्चात्पादेनतंगत्वावामेचासौकरेधृतः ॥ ३ ॥ स्थापयित्वारथेतंवैवचनंचेदमब्रवीत् ॥
बृहन्नटउवाच ॥ कुमारशृणुमेवाक्यंयोत्स्येऽहंकौरवैःसह ॥ ४ ॥ धैर्यंकृत्वाहिसारथ्यंकुरुष्वनिर्भयोमम ॥ यशस्तुभ्यंप्रदा
स्यामिजित्वाचकौरवान्रणे ॥ ५ ॥ उत्तरउवाच ॥ एभिर्महारथैःसार्द्धंकथंशक्नोमियोधितुम् ॥ सुरासुरैश्चदुर्जेयाद्रोणभीष्म
कृपादयः ॥ ६ ॥ एषांयुद्धेसमर्थश्चकोभवेदर्जुनंविना ॥ एकेनैवतुपार्थेनराधावेवेजितास्त्वमी ॥ ७ ॥ बृहन्नटउवाच ॥ पश्य
त्वंचार्जुनश्चाहंजेष्यामिकौरवान्रणे ॥ गवांहिमोचनंकृत्वाविराटंहर्षयाम्यहम् ॥ ८ ॥ उत्तरउवाच ॥ कथंत्वमर्जुनश्चासिप्र

त्वयंदर्शितांमम ॥ पांचाल्याःपांडुपुत्राणांवियोगोनैवविद्यते ॥ ९ ॥ बृहन्नटउवाच ॥ कंकोब्राह्मणरूपेणज्ञेयोराजायुधिष्ठिरः ॥
बल्लवोभीमसेनस्तुनकुलश्चाश्वपालकः ॥ १० ॥ गोरक्षपालनेमेयःसहदेवश्चउच्यते ॥ बृहन्नटोऽर्जुनश्चास्मिसैरंध्रीद्रौपदीतथा
॥ ११ ॥ तदर्थंभीमसेनेनकीचकाश्चनिपातिताः ॥ इत्येवंनिश्चयंधैर्यंकुरुत्वंतुविराटज ॥ १२ ॥ उत्तरउवाच ॥ यदित्वमर्जु
नश्चासिदशनामानिकथ्यताम् ॥ कर्मणाकीदृशेनापिदशनामानितेऽभवन् ॥ १३ ॥ विश्वासंचतदाप्राप्स्ययदावदसिचस्फुटम्
अर्जुनउवाच ॥ अर्जुनःफाल्गुनोपार्थःकिरीटीश्वेतवाहनः ॥ १४ ॥ बीभत्सुर्विजयःकृष्णःसव्यसाचीधनंजयः ॥ एता
निदशनामानिप्रातरुत्थाययःपठेत् ॥ १५ ॥ उद्यमंचैवसामर्थ्यमारोग्यंचैवजायते ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छ
ति ॥ १६ ॥ शुचित्वादर्जुनोनामफाल्गुनःफाल्गुनीजनः ॥ बीभत्सुश्चरणेशत्रोर्बीभत्सुरितिकीर्तितः ॥ १७ ॥ विजयाद्वि
जयोनामकृष्णःश्यामशरीरतः ॥ दक्षिणेनचवामेनकरेणसदृशंधनुः ॥ १८ ॥ सव्यसाचीचतेनास्मिधनंजेताधनंजयः ॥ इतिते
दशनामानिकथितानिचकारणम् ॥ १९ ॥ षंढत्वस्यनिमित्तंमेशृणुचोत्तरतत्वतः ॥ अहंनिवातकवचान्शस्त्राण्यस्त्राणिचशिक्षि
तुम् ॥ २० ॥ यदाचाहंगतःस्वर्गेदेवराजस्यसद्मनि ॥ आगताममपार्श्वेतुमेनकाकाममोहिता ॥ २१ ॥ नस्वीकृतामयासातु
तदाशप्तोस्म्यहंतया ॥ तस्याःशापप्रभावेनवर्षैकंषंढताम्मम ॥ २२ ॥ अभिजानीहिमांत्वंहिविश्रब्धोभव सारथेः ॥ रथस्यधु
रमास्थायहयरश्मीन्स्वयंनय ॥ २३ ॥ दृश्यतेऽयंशमीवृक्षोरथंवाहयतत्रमे ॥ आयुधानिविचित्राणितत्रास्माकंचसंतिहि
॥ २४ ॥ उत्तरस्तद्वचःश्रुत्वारथंप्रेरितवान्शनैः ॥ शमीवृक्षोबहुच्छायःकोटरैःपरिवारितः ॥ २५ ॥ सर्वकीटकजालैश्चवेष्टि
तःसर्वतोदिशम् ॥ अर्जुनउवाच ॥ अवतीर्यरथादस्मादायुधान्यानयस्वयम् ॥ २६ ॥ उत्तरोत्तरितस्तस्मात्रथात्तुवेगवत्तरः ॥

तथावृक्षसमीपेतुयावद्गच्छतिचोत्तरः ॥ २७ ॥ तदाक्रुद्धाश्चदुष्टाश्चदृष्टातत्रसरीसृपाः ॥ तदाप्रत्यागतःशीघ्रमुत्तरोभयविह्वलः
॥ २८ ॥ प्रत्याहचार्जुनंवाक्यंत्वयाऽहंकालसंनिधौ ॥ प्रेरितश्चतदापार्थोहसित्वास्वयमाययौ ॥ २९ ॥ प्रदक्षिणांशमींकृत्वा
स्तुतिंकृत्वाधनंजयः ॥ शमीशमयतेपापंशमीशमयतेरिपून् ॥ ३० ॥ शमीशमयतेरोगान्शमीसर्वार्थसाधिनी ॥ एवंसंप्रार्थ्य
तौवीरौपार्थोभूमौननामह ॥ ३१ ॥ तावदायुधराशिर्यःप्राप्तश्चार्जुनसंनिधौ ॥ अर्जुनेनतदाशीघ्रंबाणेनताडितामही ॥ ३२ ॥
तत्प्रहारात्समुत्पन्नाबाणगंगामहानदी ॥ बलवांस्तारयामासकंचुकींचविसर्जिता ॥ ३३ ॥ स्नानंचक्रेतदापार्थःषंढव्रतविसर्ज
नम् ॥ आरुरोहरथंदिव्यंश्रीकृष्णःसंस्मृतोहृदि ॥ ३४ ॥ कृष्णतेजस्तदाजातंशरीरेतस्यचोत्तरे ॥ हनूमान्चिंतितस्तेनसो
पिततक्षणमागतः ॥ ३५ ॥ देवदत्ताभिधःशंखःस्मृतमात्रःसमागतः ॥ सिंहनादंचकारोच्चैःशंखनादंप्रतापवान् ॥ ३६ ॥
ज्यानेमीनांचनिर्घोषःकपिराजस्यगर्जना ॥ एभिर्नादैर्महाभीमैर्वज्रपातइवाभवत् ॥ ३७ ॥ कंपिताधरणीतत्रसमुद्रामार्गलो
पिनः ॥ तंनादंहिसमाकर्ण्यकौरवाभयविह्वलाः ॥ ३८ ॥ केचिद्भीष्मंचनिकटेकेचिद्द्रोणंनृपंनृप ॥ केचित्कर्णंसमाजग्मुः
पाहिपाहीतिभाषिणः ॥ ३९ ॥ वैशंपायनउवाच ॥ एवंविह्वलतांप्राप्तंकौरवाणांबलंमहत् ॥ दृष्टमात्रेणपार्थेनतदेवंजनमे
जय ॥ ४० ॥ दुर्योधनउवाच ॥ त्रयोदशस्यवर्षस्यकतितिष्ठंतिवासराः ॥ शीघ्रंकथयगांगेयप्रेरयामिवनंपुनः ॥ ४१ ॥
गांगेयउवाच ॥ गतंत्रयोदशंवर्षंवासराश्चत्रयोदश ॥ अधुनाप्रकटीभूतःसव्यसाचीमहाबलः ॥ ४२ ॥ ततोऽर्जुनेनवीरेण
बाणयुग्मंगुरुंप्रति ॥ प्रेरितंप्रथमंशीघ्रंप्राप्तंद्रोणस्यपादयोः ॥ ४३ ॥ पादाग्रेपतितंदृष्टंगुरुणाशरयुग्मकम् ॥ आज्ञार्थावाग
तौबाणौगुरुणाप्रेरितौततः ॥ ४४ ॥ द्रोणउवाच ॥ बाणाविमौतुप्रहितावर्जुनेनबलीयसा ॥ संग्रामेशिष्यभक्तिश्चदर्शितातेे

नधर्मिणा ॥ ४५ ॥ तादृशंबाणयुग्मंचप्रेरितंचपितामहे ॥ गांगेयेनतदाबाणौप्रहितावर्जुनंप्रति ॥ ४६ ॥ प्राहभीष्मस्ततो वाक्यंनृपंदुर्योधनंप्रति ॥ भ्रात्रोश्चैवोभयोःपुत्राःपूर्वेवैपंचपांडवाः ॥ ४७ ॥ विभज्यपृथिवींभुंक्ष्वयुद्धेनकिंप्रयोजनम् ॥ त दादुर्योधनोराजाक्रुद्धोवाक्यमथाब्रवीत् ॥ ४८ ॥ भूमिंनिष्पांडवींकृत्वाभोक्ष्येराज्यमहंप्रभो ॥ इतितेषुब्रुवाणेषुकिरीटीवा क्यमब्रवीत् ॥ ४९ ॥ उत्तरंप्रतिराजेंद्रगोधनंनीयतेपुरः ॥ गोधनंप्रथमंनीत्वापश्चाद्युद्धंकरोम्यहम् ॥ ५० ॥ इतितस्य वचःश्रुत्वारथंचोत्तरआनयत् ॥ रथशब्देनतागावोगतावैराटकंपुरम् ॥ ५१ ॥ जयस्यसिंहनादेनरथनेमिस्वनेनच ॥ शंखस्यनिःस्वनेनैवज्यानिर्घोषेणधीमतः ॥ ५२ । त्रासितंगोधनंसर्वंपुच्छमुद्यम्यनिःसृतम् ॥ तत्क्षणेनगतंसर्वंविराटन गरंप्रति ॥ ५३ ॥ ततोऽर्जुनोमहावीरोरथंसंस्थाप्यतत्रवै ॥ व्यतिष्ठद्धनुरुद्यम्यउत्तरस्तमभाषत ॥ ५४ ॥ इतिश्रीमहाभारते भारतसारेविराटपर्वणिअर्जुनपराक्रमोनामएकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ पञ्चाशत्तमअध्यायेसंप्रश्नश्चोत्तरस्यच ॥ पार्थस्यधार्तराष्ट्राणांसग्रामागमउच्यते ॥ १ ॥ वैशंपायनउवाच ॥ एवंपार्थःस्थितोराजनरथारूढस्यसन्मुखे ॥ तदोत्तरेण वीरेणपृष्टःकिंचिच्छुभंवचः ॥ २ ॥ उत्तरउवाच ॥ एषांमध्येमहावीरःकोभीष्मोद्रोणएवच ॥ कोऽश्वत्थामाकृपःकोऽसौकः कर्णःसूर्यनंदनः ॥ ३ ॥ दुर्योधनोनृपःक्कासौवर्त्ततेमानिनांधुरि ॥ धृतराष्ट्रसुताःकेकेशकुनिर्मातुलश्चकः ॥ ४ ॥ ए षांरूपाणिचिन्हानिदर्शयस्वममाधुना ॥ अर्जुनउवाच ॥ यस्यध्वजोभातिवत्ससौवर्णाचलसन्निभः ॥ ५ ॥ रथःसूर्यप्रतीका शोयानेशुक्लाश्ववाहनाः ॥ ध्वजःश्वेतःसितंछत्रंशुभ्रंहिचामरद्वयम् ॥ ६ ॥ इच्छाविनानमृत्युश्चगुरुर्यस्यतुभार्गवः ॥ त्रिद शैरपिदुर्जेयोभीष्मोऽस्माकंपितामहः ॥ ७ ॥ ध्वजाग्रेदृश्यतेयस्यसौवर्णकलशोदृढः ॥ अतिस्थूलोरथश्चायंदीर्घस्थूलंप्रदृश्य

ते ॥ ८ ॥ हयाःश्वेताःपताकाश्चछत्रंश्वेतंचदृश्यते ॥ अस्माकंकौरवाणांचगुरुर्द्रोणोभवत्यसौ ॥ ९ ॥ पांडुरंयस्यछत्रंचश्वेत
वर्णास्तथाहयाः ॥ अजेयस्त्रिषुलोकेषुअश्वत्थामागुरोःसुतः ॥ १० ॥ ध्वजाग्रेदृश्यतेवेदीसौवर्णीसूर्यसन्निभा ॥ अतिशुभ्रा
पताकाचछत्रयुग्मंविराजते ॥ ११ ॥ एषःकृपोमहावीरोद्रोणवामेस्थितःसुधीः ॥ ध्वजाग्रेदृश्यतेयस्यव्याघ्रोहेममयोदृढः ॥
॥ १२ ॥ ध्वजोऽतिपीतच्छत्रंहिपीतंचामरयुग्मकम् ॥ पीताश्वायस्यविख्याताःसकर्णःसूर्यनंदनः ॥ १३ ॥ तदाशूरश्चधीर
श्चयस्यचापशरादृढाः ॥ अनेनसहसंग्रामोदारुणोमेभविष्यति ॥ १४ ॥ यस्यध्वजाचसंरक्तारक्ताश्वारक्तचामराः ॥ रक्तछत्रं
रथोरक्तोवडवानलसन्निभः ॥ १५ ॥ एषदुर्योधनोराजामहाबलपराक्रमः ॥ वामेदक्षिणभागेचदृश्यंतेबहवोनृपाः ॥ १६ ॥
धृतराष्ट्रसुताःसर्वेशतसंख्याविनिश्चिताः ॥ सर्वेतेहिमयाख्याताःसर्वेवीराःसुदारुणाः ॥ १७ ॥ द्रोणाचार्यप्रतिरथंचालय
स्वममोत्तर ॥ एतस्मिन्नंतरेदेवागगनेसमुपस्थिताः ॥ १८ ॥ द्रोणस्यचार्जुनस्यापिद्रष्टुंसंग्रामकौतुकम् ॥ ततोऽर्जुनेनबाणौ
द्वौप्रेरितौगुरुपातने ॥ १९ ॥ गुरुणाच्छेदितौसोऽथनाराचैर्निशितैस्तदा ॥ गुरुणाशिष्यमुद्दिश्यप्रेरितंबाणपूरकम् ॥ २० ॥
च्छिन्नंचशतधातेनद्रोणःक्रोधयुतोऽभवत ॥ क्रुद्धेनगुरुणातस्यघातायशरपंचकम् ॥ २१ ॥ प्रेरितंचयदादृष्टंतदाशिष्योऽब्रवी
द्वचः ॥ अर्जुनउवाच ॥ भोगुरोपंचबाणावैप्रेरितामद्वधायच ॥ २२ ॥ तेनिष्फलाभविष्यंतियतोऽधर्मार्थमागताः ॥ अधर्मे
णकदानास्तिविष्णोरपिजयोध्रुवम् ॥ २३ ॥ इत्युक्त्वापंचबाणैस्तान्सायकान्दशधाच्छिनत् ॥ तीक्ष्णेनैकेनबाणेनहृदिविद्धोगु
रुस्तदा ॥ २४ ॥ पतितश्चमहाद्रोणोरथोपरिसमूर्च्छितः ॥ सारथिस्तमपोवाहरणात्सद्योबहिस्तदा ॥ २५ ॥ इतिद्रोणंनिवा
र्यथभीष्मंप्राप्याहचार्जुनः ॥ पितामहमहावीरधर्ममार्गेस्थितःसदा ॥ २६ ॥ पालिताःपूर्वजाःसर्वेत्वयाधर्मेणसर्वदा ॥ कि

मिदंक्रियतेनाथकर्मदुष्टंविगर्हितम् ॥ २७ ॥ येपक्षित्रासिनश्चौराःपापिष्ठाधर्मचारिणः ॥ तेपिस्त्रामिन्नकुर्वंतित्वद्देशेधर्मसागरे
॥ २८ ॥ नयुज्यतेगवांकर्तुंहरणंनिंदितंतव ॥ प्रवृत्तानामधर्मेणजयोनास्तीतितिवचः ॥ २९ ॥ भीष्मउवाच ॥ सत्यमुक्तंत्व
यावत्सवचोमेरोचतेभृशम् ॥ संगदोषेणकुर्वंतिदुष्टकार्याणिसाधवः ॥ ३० ॥ दुर्योधनप्रसंगेनचाहंगोहरणंगतः ॥ यथारोग
प्रसंगेनदह्यतेस्वकलेवरम् ॥ ३१ ॥ अधुनाहित्वयाचात्रयुद्धंकार्य्यंयथेप्सितम् ॥ अर्जुनश्चतदादेशाद्बाणमेकंमुमोचसः ॥
॥ ३२ ॥ तेनबाणेनभीष्मोऽपिपपातचरथोपरि ॥ ततःकर्णप्रतियया वर्जुनःपरवीरहा ॥ ३३ ॥ कर्णःप्रोवाचयोद्धारंश्रृणुत्वा
क्वयंमहामते ॥ कर्णउवाच ॥ अर्जुनत्वंमहावीरोधर्ममार्गेस्थितोह्यसि ॥ ३४ ॥ सर्वथाशास्त्रधर्मेणजयस्तवनसंशयः ॥ तथा
पितेऽद्यसंग्रामंकरिष्येधर्मतोऽप्यहम् ॥ ३५ ॥ इत्युक्त्वावचनंकर्णोबाणैर्विव्याधचाऽर्जुनम् ॥ सोपिक्रुद्धोमहावीरोबाणसंघं
मुमोचह ॥ ३६ ॥ तच्छित्वालाघवेनापिकर्णोवेगेनचार्जुनम् ॥ बाणैःपंचभिराविद्धोभालदेशेप्यलक्षितः ॥ ३७ ॥ तत्प्रहा
रात्तदावीरःपपातचरथोपरि ॥ पुनरुत्थायबाणौघैःकर्णंविव्याधसायकैः ॥ ३८ ॥ कर्णोऽपिबाणवेगेनबिभेदचकिरीटिनम् ॥
एवंयुद्धेचसंजातेरविर्नालक्ष्यतेशरैः ॥ ३९ ॥ अर्जुनेनतदातत्राप्यंधकारःकृतःशरैः ॥ परस्परंनलक्षेतवीरोवीरंचकंचन ॥
॥ ४० ॥ तमंधकारंसंवीक्ष्यकर्णोवचनमब्रवीत् ॥ कर्णउवाच ॥ रवेराच्छादनेवीरयत्त्वयाकर्मसाधितम् ॥ ४१ ॥ तन्मयाज्ञा
तमेवाग्रेकर्तुंमन्येपलायनम् ॥ कर्णेप्येवंजल्पमानेशब्दलक्ष्येणसोर्जुनः ॥ ४२ ॥ बहुलाघवमाश्रित्यबाणेनैकेनतालुकम् ॥
विव्याधहृदयेप्यस्यबाणैर्दशभिराहतः ॥ ४३ ॥ तद्घातात्सूर्यपुत्रोऽपिपपातधरणीतले ॥ ततोऽर्जुनोमहावीरःकर्णमालक्ष्य
भूमिगम् ॥ ४४ ॥ शरांधकारमासाद्यबाणेनैकेनसारथिम् ॥ ध्वजंछत्रंचबाणाभ्यांपातयामासभूतले ॥ ४५ ॥ ततोऽर्जुनो

ऽश्वत्थामानमासाद्यपरवीरहा ॥ उवाचवचनंघोरंज्याशब्दंचसमाचरन् ॥ ४६ ॥ गुरुबंधोगुरुसखायादृशीशिक्षितात्वया ॥
धनुर्विद्यामहाबुद्धेतादृशीशिक्षितामया ॥ ४७ ॥ आवयोरथसंग्रामेगुरुप्रीतिर्हिलक्ष्यते ॥ अहंप्रियतरःशिष्यस्त्वंहिपुत्रोह्यति
प्रियः ॥ ४८ ॥ एवंवदतिपार्थेसबाणैर्नानाविधैरपि ॥ विव्याधहृदयेगाढंनचकंपेकपिध्वजः ॥ ४९ ॥ ततोऽर्जुनोमहावीरः
शरैराच्छादयच्चतम् ॥ लाघवेनैवबाणेनपपातगुरुपुत्रकम् ॥ ५० ॥ पुनरुत्थायवेगेनपार्थंविव्याधपंचभिः ॥ नाराचैर्नाभिदे
शेचपार्थोविह्वलतांगतः ॥ ५१ ॥ पुनर्लाघवमाश्रित्यचाश्वत्थामामहाबलः ॥ हेमपुंखशरेणैवध्वजाग्रेकपिकुंजरम् ॥ ५२ ॥
जघानचतदागाढंप्रहस्यकपिरब्रवीत् ॥ हनूमानुवाच ॥ वृद्धब्राह्मणपुत्रेणरोमाग्रमपिनत्वया ॥ ५३ ॥ छेदितुंतत्परिज्ञातंबलं
तवधनुष्मतः ॥ इतिश्रुत्वावचस्तस्यद्रोणजःक्रोधसंभृतः ॥ ५४ ॥ शूलंमुमोचकपयेहननकृतमानसः ॥ तदापातंतुवेगेन
बाणैःपार्थोऽष्टधाच्छिनत् ॥ ५५ ॥ भिन्नेशूलेद्रोणसुतःकपयेशरमादधौ ॥ कुपितेचार्जुनेनाथछेदितःसोऽपिसायकः ॥ ५६ ॥
शरेच्छिन्नेततोविप्रःकोपादरुणलोचनः ॥ नानोपहसितस्तेनकपींद्रेणबलीयसा ॥ ५७ ॥ अश्वत्थाम्नाहरिशरःप्रेरितःकपिनाश
ने ॥ अनिवार्यःशरैरन्यैर्नारायणशरंविना ॥ ५८ ॥ नारायणास्त्रमुखतोनिर्ययौवन्हिरुल्बणः ॥ सोऽग्निराकाशमावृत्यशरः
कपिसमाययौ ॥ ५९ ॥ ततोऽर्जुनेनवीरेणशरंनारायणाभिधम् ॥ मोचयित्वाशरंतंतुस्वकीयमावृणोन्नृप ॥ ६० ॥ नारायणा
स्त्रमुभयेसंवृतंविजयेनच ॥ पुनरन्यंशरंयावन्मुमोचद्रोणनंदनः ॥ तावत्तुपंचभिर्बाणैर्विद्धोहृदिपपातच ॥ ६१ ॥ इतिश्रीम
हाभारतेभारतसारेऽश्वत्थामामूर्च्छनंनामपंचाशत्तमोऽध्यायः ॥ ५० ॥ एकपंचाशत्तमेचकुरूणामजयोजयः ॥ पार्थस्योत्तरपि
त्रोश्चसंवादस्त्विहकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ एतस्मिन्निपतितेभूमौद्रोणपुत्रेकृपस्तदा ॥ कोपाविष्टःशरैःषड्भिर्विव्या

घहदिचार्जुनम् ॥ २ ॥ तच्छित्वाचार्जुनेनासौकृपोविद्धःशतैःशरैः ॥ तेनघातेनविद्धोऽसौमूर्च्छांपन्नोभुवंययौ ॥ ३ ॥ ततोदु
र्योधनोराजासर्वेषांवाक्यमब्रवीत् ॥ एकाकीचार्जुनश्चासौअवद्भिर्जेतुमक्षमः ॥ ४ ॥ धिक्चापंपौरुषंकर्णबलवीर्यंचविक्रतव ॥
मिलिताःसुभटाःसर्वेहत्वागृण्हंतुचार्जुनम् ॥ ५ ॥ राजादशमनुप्राप्यमिलिताःसर्वपार्थिवाः ॥ भगदत्तःकलिंगश्चसोमद
त्तोजयद्रथः ॥ ६ ॥ धृतराष्ट्रस्यपुत्राणांशतंतुमिलितंतदा ॥ एकीभूयप्रधावंतोनानाहेतिभिराहनन् ॥७॥ तेषांशस्त्रैर्यदाच्छि
न्नंरथमालक्ष्यचार्जुनः ॥ नानाशस्त्रैःशस्त्रजालंनिजघानमहाबलः ॥ ८ ॥ दुर्योधनप्रयुक्तानांराज्ञामधर्मवर्त्तिनाम् ॥ नाशंकर्तुं
समर्थोऽभूच्छस्त्रास्त्रैःकोटिशैर्नृप ॥ ९ ॥ ततोऽर्जुनोमहावीरोमोहनास्त्रंसमादधे ॥ तेषांनिद्राकरंक्षिप्रंक्षिप्तंहिस्यात्कदाचन
॥ १० ॥ तन्मोचनाच्चराजानोनिद्रांप्रापारथेगजे ॥ यथाचिन्हंप्रकुर्वंतितथैवासविचेष्टितम् ॥ ११ ॥ तेसर्वेमोहितास्तत्रचि
त्रलेख्याइवाभवन् ॥ ततोऽर्जुनोब्रवीद्वाक्यमुत्तरंप्रतिसत्वरम् ॥ १२ ॥ रथादुत्तीर्यवस्त्राणिभगिन्याप्रार्थितानिते ॥ कर्पटानि
विचित्राणिग्रहणेनिर्भयोभव ॥ १३ ॥ इतितस्यवचःश्रुत्वारथादवरुरोहसः ॥ बहुमूल्यानिवासांसिजगृहेपार्थसारथिः ॥
॥ १४ ॥ अर्जुनेनतदातूर्णंध्वजासुलिखिताक्षरम् ॥ बाणेनरुधिरोक्तेनसर्वेषांभूभुजांतदा ॥ १५ ॥ यशोहतंमयाचात्रजीवि
तंनकृपालुना ॥ इतिवर्णान्समाविश्यचार्द्धचंद्रैर्महाशरैः ॥ १६ ॥ शिरांस्यग्रान्शिखायाश्चमूर्च्छायामलुनाच्चसः ॥ बाणेनैके
नतीक्ष्णेनगलेरेखाविनिर्मिताः ॥ १७ ॥ भवतांकंठच्छेदस्तुकृपयानकृतोमया ॥ भीष्मद्रोणकृपादीनामश्वत्थाम्नोनृपस्यच ॥
॥ १८ ॥ बृहत्वाच्चगुरुत्वाच्चनकृतंवैकृतंतदा ॥ देवरूपाःसदामान्याःपूज्यास्तेषसदामम ॥ १९ ॥ सिंहनादंतदाकृत्वाप्रस्थि
तःसपुरंप्रति ॥ पूरयन्देवदत्तंचजित्वाशत्रून्महाहवे ॥२०॥ ततोऽर्जुनःशमींप्राप्यमुमोचायुधसंचयम् ॥ हनूमंतंतदाऽऽमंत्र्य

नमस्कृत्यपुनःपुनः ॥ २१ ॥ विससर्जकपिंतत्रपुनरागमनायच ॥ ततोऽर्जुनेनवीरेणचोत्तरःस्थापितोरथे ॥ २२ ॥ सारथि
श्चस्वयंजातोविवेशनगरंप्रति ॥ स्त्रीरूपंचवपुर्धृत्वाकपटेनविनिर्मितम् ॥२३॥ दूतंहिप्रेषयामासविराटंप्रतिशिक्षयन् ॥ उत्त
रेणजितंसैन्यंकौरवाणांचपश्यताम् ॥ २४ ॥ इतिशिक्षापितोदूतस्तथैवोवाचपूर्वतः ॥ विराटमगमद्दूतस्तथैवोवाचपूर्वकम् ॥
॥ २५ ॥ तदाकर्ण्यततोराजासभायामास्थितोजनैः ॥ अतिहर्षसमापन्नःकंकंप्रोवाचगर्वितः ॥ २६ ॥ कंकसैन्यंविनाचाद्य
सैन्यंकौरवभूभुजाम् ॥ उत्तरेणजितंसम्यक्गोधनंव्याघृतंपुरा ॥ २७ ॥ यैर्जिताःपांडवाःसर्वेभीष्माद्यैर्धर्मकोविदैः ॥ विजि
त्यतान्समायातोमत्पुत्रोलीलयारणे ॥ २८ ॥ मत्समोनास्तिभूपालस्त्रिषुलोकेषुविश्रुतः ॥ यत्पुत्रेणजिताःसर्वेकौरवादेवदुर्ज
याः ॥ २९ ॥ अस्मिन्नवसरेतत्रकंकःक्रीडन्निवाक्षकैः ॥ प्रहस्यप्राहराजानंविराटंदुःखदंवचः ॥ ३० ॥ कंकउवाच ॥ यत्रबृ
हन्नटोयातिमहाबलपराक्रमः ॥ विजयस्तत्रसंदेहःकोऽस्तिराजन्नितिस्फुटम् ॥ ३१ ॥ तदाऽसौकुपितोराजाचिक्षेपपाशकान्रु
षा ॥ पादोपरिसमास्थायभालदेशेचपाशकः ॥ ३२ ॥ उच्चलित्वाचकंकस्यलग्नःसुस्त्रावशोणितम् ॥ एतस्मिन्नंतरेराज्ञीमालि
नीप्रार्थिताजलम् ॥ ३३ ॥ जलमानीयसाप्यग्रेयावत्तिष्ठतिमालिनी ॥ धर्मस्यभालदेशेतुरुधिरंसाददर्शह ॥ ३४ ॥ जल
मात्रेणतद्रक्तंजगृहेभयविह्वला ॥ यद्येतद्रुधिरंभीमःपार्थोवाद्रक्ष्यतेऽधुना ॥ ३५ ॥ विराटस्यकुलस्यांतंकरिष्यतितुतत्क्षणा
त् ॥ वर्षमात्रंगृहेयस्यचित्रंवैप्रोषितावयम् ॥ ३६ ॥ तस्यचास्तुशुभंनित्यमित्याशयसमाकुला ॥ततोविराटःसंक्रुद्धोमालिनीं
प्राहदुर्मतिः ॥३७॥किमर्थंजलपात्रेमेघृतंकंकस्यशोणितम् ॥ इतिनानाविधैर्वाक्यैर्निर्भर्त्स्याथमालिनींतदा॥ ३८॥ तस्यवाक्यंस
माकर्ण्यसैरंध्रीवाक्यमब्रवीत् ॥ भोभोराजन्वृथात्वंहिकिमर्थंकुप्यसेऽधुना ॥ ३९ ॥ शृणुकारणमत्रैवयदर्थंरुधिरग्रहः ॥



108

कंकस्यरुधिरंयत्रदेशेपततितत्रवै ॥ ४० ॥ दुर्भिक्षंमरणंपुंसामनावृष्टिर्भवेद्ध्रुवम् ॥ इत्युक्त्वामालिनीपश्चाज्जगामभुवनंस्वकम्
॥ ४१ ॥ एतस्मिन्समयेराजन्नाजगामबृहन्नटः ॥ उत्तरेणपुनस्तत्रसभायांधर्मनंदनम् ॥ ४२ ॥ प्रणिपत्यस्थितःसोपिधर्मे
णापिप्रनंदितः ॥ उत्तरोपितदाप्राप्यभीतवद्धर्मनंदनम् ॥ ४३ ॥ प्रणयावनतस्तत्रननामचपुनःपुनः ॥ पुनःपुनःपदेनत्वापाहि
पाहीतिचावदत् ॥ ४४ ॥ इतिपुत्रस्यनम्रत्वंविलोक्यधर्मनंदने ॥ विराटोविस्मितोराजामनस्येवंविचारयत् ॥ ४५ ॥ मा
मकंकंकमाज्ञायनमतेचपुनःपुनः ॥ अथवाद्विजवर्यत्वात्वृद्धत्वाच्चनमत्यसौ ॥ ४६ ॥ किंवायंभ्रमितःपुत्रोदृष्ट्वाकौरवसंयुगम् ॥
इतिविस्मयमापन्नंविराटंप्राहबालकः ॥ ४७ ॥ उत्तरउवाच ॥ भोतातकिमिदंरक्तंदृश्यतेकंकमूर्द्धनि ॥ अधर्मोहितवापन्नस्ता
तजातोऽस्तिसंशयः ॥ ४८ ॥ इतिविह्वलतांतस्यदृष्ट्वापुत्रस्यसोनृपः ॥ किमिदंक्रियतेपुत्रविह्वलोऽसिकथंवद ॥ ४९ ॥
इतिनानावदंतंतंपितरंह्युत्तरःकरे ॥ धृत्वाप्युत्थायचैकांतेनीत्वासर्वंन्यवेदयत् ॥ ५० ॥ इतिश्रीमहाभारतेभारतसारेविराट
पर्वणिविराटोत्तरसंवादेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ द्विपंचाशत्तमेऽध्यायेमानप्राप्तिर्विराटतः ॥ युधिष्ठिरादिपंचानांसाधु
त्वंचापिकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ विराटोविस्मितस्तत्रपुत्रेणैवंप्रबोधितः ॥ जगामत्वरयाराजाधर्मपादारविंदयोः
॥ २ ॥ साष्टांगंप्रणिपत्याहसांत्वपूर्वमिदंवचः ॥ विराटउवाच ॥ त्वंस्वामीत्वंप्रभुर्देवत्वंमाताचपितामम ॥ ३ ॥ मौर्ख्यकृ
तापराधस्यक्षम्यतांधर्मनंदन ॥ इदंराज्यंचसप्तांगंतवैवकरुणांकुरु ॥ ४ ॥ त्वंस्वामीहवयंसर्वेसेवकास्तान्नियोजय ॥ एकंसं
प्रार्थयेनाथनान्यथाकर्त्तुमर्हसि ॥ ५ ॥ अर्जुनायचमेपुत्रीमुत्तरांयौवनस्थिताम् ॥ ददामिपरितोषायप्रसादंकर्त्तुमर्हसि ॥
॥ ६ ॥ तस्मिन्नेवंप्रवदतिविराटेधर्मनंदनम् ॥ पार्थःप्रोवाचराजानंविराटंचनिषेधयन् ॥ ७ ॥ अर्जुनउवाच ॥ इयंचनर्त्तना

गारेपितृवन्मन्यतेमम ॥ पुत्रीकृतामयासातुशिष्यभावेनकन्यका ॥ ८ ॥ इतितस्यवचःश्रुत्वाविराटोवाक्यमब्रवीत ॥ पार्थ
नाथमहाबाहोश्रूयतांनिश्चयंमम ॥ ९ ॥ नैवांगीकुरुषेकन्यांतदाप्राणांस्त्यजाम्यहम् ॥ इतिनिश्चयमाज्ञायविराटस्यचध
र्मजः ॥ १० ॥ प्रोवाचतोषयन्वाण्याविराटंकृपयान्वितः ॥ धर्मउवाच ॥ शृणुराजन्वचोमेऽद्यविषादंमाकुरुप्रभो ॥ ११ ॥
अर्जुनस्यसुतोराजन्युवाषोडशवार्षिकः ॥ भागिनेयोहिकृष्णस्यसुभद्रातनयोबली ॥ १२ ॥ वरोऽतिसंमतोराजन्विचारंना
न्यथाकुरु ॥ विराटउवाच ॥ एवमस्तुतदादूताःप्रेषिताद्वारकांप्रति ॥ १३ ॥ इमंवृत्तांतमालोक्यधर्मेणसादरंहरी ॥ कृष्णकृ
ष्णाप्रमेयात्मन्नारायणजगद्गुरो ॥ १४ ॥ शरणागतदीनार्त्तपरित्राणपरायण ॥ पाहिमांपरमानंदधर्मंतेशरणागतम् ॥ १५ ॥
त्वत्समोनास्तिदेवोमेभ्रातामेनास्तित्वत्समः ॥ तस्मात्सर्वात्मनानाथप्रसादंकर्त्तुमर्हसि ॥ १६ ॥ विराटनगरेतातप्रतिज्ञायापु
राकृता ॥ वर्षेत्रयोदशेनष्टचर्याप्राप्तातवाज्ञया ॥ १७ ॥ अतःपरंविराटोऽयंपुत्रींदातुंसमुद्यतः ॥ युष्माकंभागिनेयायसुभद्रा
तनयायच ॥ १८ ॥ तत्संपादयविष्णोत्वंनान्योऽस्तिपालकोमम ॥ सपुत्राचसुभद्राचयूयंस्वस्त्रपुरःसरः ॥ १९ ॥ यथाविरा
टसामर्थ्यंह्यागंतव्यंतथात्वया ॥ इतिनानाविधंवाक्यंलिखित्वाप्राहिणोन्नृप ॥ २० ॥ पांचालेषुतदाराजन्द्रुपदाकारणायच ॥
दूतंसंप्रेषयामासविराटंप्रतिबोधयन् ॥ २१ ॥ एतस्मिन्नंतरेराजाविराटोप्युत्सवंमुदा ॥ चकारविभवैर्युक्तःसत्सहायःप्रभुर्म
हान् ॥ २२ ॥ ततस्तेनविराटेनस्थापयित्वाचपांडवान् ॥ नानाभूषणवस्त्रैश्चरत्नैर्नानाविधैरपि ॥ २३ ॥ संपूज्यभूषयित्वा
चहर्षंसंप्रापमानदः ॥ धर्मात्मानंनृपश्रेष्ठंसर्वबंधुविराजितम् ॥ २४ ॥ सिंहासनेसमास्थायस्वभिषेकंचकारह ॥ निवेद्यराज्यं
सप्तांगंदासोभूत्वास्वयंस्थितः ॥ २५ ॥ इतितस्यनयंदृष्ट्वाधर्मोवचनमब्रवीत ॥ धर्मउवाच ॥ साधोत्वंहिमहाप्राज्ञसत्यसं

घोमहारथः ॥ २६ ॥ युष्मदन्नानिभुक्तानिसुखेनैवोषितावयम् ॥ अस्माकनंष्टचर्यायांगतंवर्षत्रयोदशम् ॥ २७ ॥ तवगेहेच
राजेंद्रनिमिषार्द्धमिवप्रभो ॥ त्वत्समोनास्तिभूपालोऽप्यस्माकंहितकारकः ॥ २८ ॥ इतिनानाविधैर्वाक्यैर्विराटंतोषयन्नृपः ॥
धर्मस्तस्थौचतत्रैवनृपरीत्यासुखेनवै ॥ २९ ॥ इतिश्रीमहाभारतेभारतसारेविराटपर्वणियुधिष्ठिरराज्याभिषेकोनामद्विपंचाश
त्तमोऽध्यायः ॥ ५२ ॥ त्रिपञ्चाशत्तमेऽध्यायेवासुदेवागमस्तथा ॥ अभिमन्योरुत्तरायाउद्वाहश्चेहकथ्यते ॥ १ ॥ वैशंपाय
नउवाच ॥ एवंचसमयेराजन्कृष्णःसात्यकिनासह ॥ सुभद्रांरथमारोप्यसपुत्रांसपरिच्छदाम् ॥ २ ॥ सैन्यैश्चबहुभिर्युक्तो
यादवैःपरिवारितः ॥ विराटनगरंप्राप्यहर्षपूर्णसुमंगलम् ॥ ३ ॥ माधवस्यविराटेनस्वागतंचकृतंतदा ॥ नानोपहारसामग्री
रत्नैश्चबहुभिर्वृतः ॥ ४ ॥ माध्व्यावाण्याहरिंप्राहप्रेमंचजनयंस्तदा ॥ देवदेवकृपालोत्वंदीनंमांतवदासकम् ॥ ५ ॥ कृपांकृ
त्वात्वयादेवममोपरिहिपालकः ॥ एतस्मिन्नंतरेराजन्द्रुपदोऽपिसमागतः ॥ स्वपत्न्यास्वबलैर्युक्तोस्वदेशान्सकुटुंबकः ॥ ६ ॥
विराटःकृष्णसहितोधर्मस्तंसमपूजयत् ॥ गृहैर्नानाविधैःकृष्णःसंस्थाप्यद्रुपदंतदा ॥ ७ ॥ विवाहंचक्रतुस्तत्रविराटधर्मनंद
नौ ॥ महामहोत्सवस्तत्रकृष्णेनैवकृतस्तदा ॥ ८ ॥ अनुरूपंवरंलब्ध्वाकृतार्थाऽभूत्तदोत्तरा ॥ विराटेनचतेसर्वेविवाहेयेसमा
गताः ॥ ९ ॥ पूजितावैष्णवास्तत्रवासोऽलंकारवाहनैः ॥ १० ॥ इतिश्रीमहाभारतेभारतसारेविराटपर्वणिअभिमन्युविवा
होनामत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ इतिविराटपर्वसमाप्तं ॥ ४ ॥ ॥ अथउद्योगपर्वमाह ॥ ॥ चतुःपञ्चाशत्तमेऽवरा
ज्यार्थेप्रार्थनाहरौ ॥ पाण्डवानांवरप्राप्तिर्विदुरस्यचकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ एवंविवाहेसंजातेधर्मःकृष्णमथाब्रवी
त् ॥ धर्मउवाच ॥ कृष्णकृष्णाप्रमेयात्मन्यदैवंत्वंनचान्यथा ॥ सर्वज्ञःसर्वदःसर्वःसर्वाधारोमहीधरः ॥ २ ॥ एकनाथोभू

तनाथस्त्वमेवशरणंमम ॥ वर्षद्वादशपर्यंतंवनोद्देशेस्थितावयम् ॥३॥ इदंत्रयोदशंवर्षंप्रच्छन्नरूपधारिणः ॥ स्थिताविराटनगरेप्र
तिज्ञापालिताप्रभो ॥ ४ ॥ एतच्चतुर्दशंवर्षंशाधिनःकरवाणिकिम् ॥ इतितस्यवचः श्रुत्वाकृष्णोवचनमब्रवीत् ॥ ५ ॥ श्रीकृष्णउ
वाच ॥ साधुसाधुमहाप्राज्ञसत्यसंधदृढव्रत ॥ सत्येनपरमातुष्टिःसत्येनपरमागतिः ॥ ६ ॥ द्वादशाब्दंवनेवासात्प्रतिज्ञापालिता
त्वया ॥ त्रयोदशंनष्टचर्यायथोक्ताचत्वयाकृता ॥ ७ ॥ शृणुवाक्यंमहाराजदेशकालोचितंमम ॥ सप्रत्ययंमहामंत्रोऽप्यादौसं
धिर्विधीयताम् ॥ ८ ॥ संधिद्वाराचभूम्यर्द्धंतदर्द्धंवातथापिते ॥ तस्यसम्यग्भवेत्राधोगोत्रनाशोऽन्यथाभवेत् ॥ ९ ॥ युद्धे
नसकलांपृथ्वींप्राप्स्यसेनात्रसंशयः ॥ दुर्योधनसमीपेतुशिष्टमेकंप्रयुज्यताम् ॥ १० ॥ अर्धराज्यंहियाचेततदर्धंवापुनर्ध्रुवम् ॥
याचितेचार्द्धराज्येतुकदाचित्ग्रामपंचकम् ॥ ११ ॥ अथवाग्राममेकंतुदास्यतेवान वापिभो ॥ प्रायशोदृश्यतेह्येतद्राज्यंत्व
य्यागमिष्यति ॥ १२ ॥ धृतराष्ट्रसुताःसर्वेनाशंप्राप्स्यंतिनिश्चितम् ॥ इतितस्यवचःश्रुत्वाधर्मोवचनमब्रवीत् ॥ १३ ॥ धर्म
उवाच ॥ स्वामिन्नमेत्वत्समःकोऽस्तिहितकारीभवेत्प्रभो ॥ यंगत्वामानसंदुःखंकथयिष्येनरोत्तम ॥ १४ ॥ त्वंमेस्वामीसु
हृत्त्वंचसुखनिर्मंत्रबांधवः ॥ सर्वस्वंचममत्वंहिनान्यःकश्चिद्भवेत्प्रभो ॥ १५ ॥ कुशलःकार्यमात्रेतुप्रसादंकर्त्तुमर्हसि ॥ तस्मा
त्सर्वात्मनानाथनृपंदुर्योधनंप्रति ॥ १६ ॥ त्वमेवपरमानंदगंतुमर्हसिनान्यचित् ॥ यथातेरोचतेचित्तेतथाकार्यंचकारह ॥
॥ १७ ॥ प्रायोयुद्धंयथानस्यात्तथाकार्यंत्वयालघु ॥ युद्धंविनातुयत्प्राप्तंतदेवसुखदंमम ॥ १८ ॥ इतिधर्मवचःश्रुत्वाभीमो
वचनमब्रवीत् ॥ भीमउवाच ॥ धर्मबंधोसत्यसंधभिक्षांकिंयाचतेवृथा ॥ १९ ॥ असिधाराक्रयक्रुतंवरमेकंतुवीटकम् ॥ सं
ग्रामेनविनादेवसर्वापृथ्वीनरोचते ॥ २० ॥ इतितेनचधर्मेणसंप्रार्थ्यप्रेरितोहरिः ॥ जगामहस्तिनगरंचरैःकतिपयैर्वृतः ॥

॥ २१ ॥ बहिःसर्वांश्चसंस्थाप्यस्वयंविदुरमंदिरे ॥ कृष्णंसमागतंदृष्ट्वाविदुरोहर्षमानसः ॥ २२ ॥ हर्षणंवेदचात्मानंमग्नंमेने
ततोऽधिकम् ॥ यथादरिद्रःपुरुषोनिधानंप्राप्तवान्कथम् ॥ २३ ॥ मुदंप्राप्नोतिविपुलंतथायंविदुरोऽभवत् ॥ विदुरउवाच ॥ स्वा
गतंदेवदेवेशदासस्यपालनायवै ॥ २४ ॥ योगिनोयस्यदेवस्यकृपार्थंवनवासिनः ॥ तपसादुष्करेणैवकायांक्लिश्यंत्यनेकधा ॥
॥ २५ ॥ तेषांनगोचरोयोऽस्तिसदेवोगृहमागतः ॥ गृहमद्यपवित्रंवैभवद्भिश्चरणांकितम् ॥ २६ ॥ अद्यमेसफलंजन्मयज्जातं
तवदर्शनम् ॥ अद्यमेपितरस्तृप्ताह्यद्यतृप्ताःपितामहाः ॥ २७ ॥ मातामहाश्चतृप्तामेगोविंदेगृहमागते ॥ इत्युक्त्वाविदुरस्तत्र
दत्वार्घंविधिपूर्वकम् ॥ २८ ॥ पादौप्रक्षाल्यतत्तोयंसिंचन्भक्त्याशिरोपरि ॥ स्नापयित्वाचगोविंदंचंदनेनविलिप्यच ॥ २९ ॥
भोजयित्वाचश्रेष्ठान्नैर्दत्वातांबूलमग्रतः ॥ प्रणम्यशिरसादेवंविदुरोवाक्यमब्रवीत् ॥ ३० ॥ विदुरउवाच ॥ अप्रियंसुप्रियं
वापिधनहीनस्यमेप्रभो ॥ तत्सर्वंक्षम्यतांदेवसर्वपूर्णोसिसर्वदा ॥ ३१ ॥ तवातिथ्यंजगन्नाथकिंकरोमिनरोत्तम ॥
अहमस्मिन्धरापीठेनिर्धनानांशिरोमणिः ॥ ३२ ॥ श्रीकृष्णउवाच ॥ अहंविदुरतेभक्त्याह्यतिप्रीतोऽस्मिसांप्रतम् ॥
साधूनांदर्शनेनैवतुष्टागच्छंतिसाधवः ॥ ३३ ॥ तुष्यंतिभोजनेविप्रामयूराघनगर्जने ॥ साधवःपरकल्याणैःखलाःपरवि
पत्तिभिः ॥ ३४ ॥ साधूनांदर्शनंपुण्यंतीर्थभूताहिसाधवः ॥ कालेनफलतेतीर्थंसद्यःसाधुसमागमः ॥ ३५ ॥ विदुर
उवाच ॥ नवक्तव्यंजगन्नाथममसन्मुखमीदृशम् ॥ त्रैलोक्यवंद्यपादस्त्वमहंजीवस्तुकीटकः ॥ ३६ ॥ श्रीकृष्णउवाच ॥
अहोविदुरभक्तोऽसिभक्त्यातुष्टोऽस्मियोवरः ॥ रोचतेप्रार्थ्यतांसोपिददाम्यत्रनसंशयः ॥ ३७ ॥ विदुरउवाच ॥ त्वयिना
थजगन्नाथयादृशंविद्यतेमम ॥ तथैवभूयतांनाथविरक्तंमास्तुकर्हिचित् ॥ ३८ ॥ अचलाकेशवेभक्तिर्मनस्त्वच्चरणांबुजे ॥

चक्षुस्त्वद्दर्शनेनित्यंदेहिमेमधुसूदन ॥ ३९ ॥ त्वत्प्रसादकृतेनाथनकिंचित्प्रार्थ्यतेविभो ॥ विदुरंभक्तमालोक्यएवमुक्तोजना
र्दनः॥४०॥ इतितस्मैवरंदत्वाश्रीकृष्णविदुरौतथा ॥ दुर्योधनसभायांतुजग्मतुश्चमुदान्वितौ ॥ ४१ ॥ इतिश्रीमहाभार
तेभारतसारेउद्योगपर्वणिविदुरवरप्रदानंनामचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ पञ्चपञ्चाशत्तमेचसभायांविदुरेणच ॥ श्री
कृष्णस्यगतिर्धार्ष्ट्यंकौरवाणांचकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ श्रीकृष्णमागतंदृष्ट्वाविदुरेणसमन्वितम् ॥ प्रेषितंपांड
वैर्मत्वासन्मुखोनाभवन्नृपः ॥ २ ॥ भीष्मद्रोणादिभिःसर्वैःसभासद्भिःसमन्वितैः ॥ अभ्युत्थायागतंदूरात्पूजयामाससत्वरम्
॥ ३ ॥ नानोपहारैःसंपूज्यसभामानीयचासनम् ॥ दत्वाचोपस्थिताःसर्वेनानास्तुतिपरायणाः ॥४॥ विदुरोहिहरेरंतेह्युपवि
ष्टोमहामतिः ॥ एवंकृष्णेस्थितेसम्यग्राजावचनमब्रवीत् ॥५॥ दुर्योधनउवाच ॥ किमर्थमागतंकृष्णस्थितंकस्यगृहेत्वया ॥
कुतःसमागतंविष्णोतन्मांत्वंतत्वतोवद ॥ ६ ॥ श्रीकृष्णउवाच ॥ विराटनगराद्राजन्नागतंविदुरगृहे ॥ पांडवानांचकार्यार्थं
जानीहित्वंसुयोधन ॥ ७ ॥ दुर्योधनउवाच ॥ भीष्मद्रोणान्परित्यज्यकृपंमांमधुसूदन ॥ किमर्थंपुंडरीकाक्षस्थितंविदुरमंदिरे
॥ ८ ॥ भोजनंचकिमर्थंहिकृतंतत्रनरोत्तम ॥ श्रीकृष्णउवाच ॥ भोजनंपृच्छसेराजन्नादरंकिंनपृच्छसि ॥ ९ ॥ भोजनंगत
जीर्णंचह्यादरोअजरामरः ॥ वरंप्राणपरित्यागोसन्मानपरिखंडनात् ॥ १० ॥ प्राणत्यागेक्षणंदुःखंमानभंगोदिनेदिने ॥ आ
दरेणोपनीतानिशाकानिचबहून्यपि ॥ ११ ॥ प्रीणंतिममगात्राणिनामृतंमानवर्जितम् ॥ अनाहूतोव्रजेद्वेहमपृष्टोवाक्यमब्र
वीत् ॥ १२ ॥ अदत्तमासनंभेजेसपुमान्पुरुषाधमः ॥ भोजनंयत्कृतंतेनवरंमृत्युर्नभोजनम् ॥ १३ ॥ वरंहालाहलंपीतंस
द्यःप्राणहरंचतत् ॥ नतुभुक्तंधनाढ्यस्यगृहेचकुटिलेमुखे ॥ १४ ॥ अधमाधनमिच्छंतिधनमानौचमध्यमाः ॥ उत्तमामान

मिच्छंतिमानोहिमहतांधनम् ॥ १५ ॥ ब्राह्मणानांक्षत्रियाणांवैश्यानांचसुयोधन ॥ विवेकस्तुसतांसारोविकुलेननराधिप ॥
॥ १६ ॥ अन्येचैवतुयेशूद्राःसत्यशौचपरायणाः ॥ तेषांगृहेतुभोक्तव्यंविदुरोपिसदाशुचिः ॥ १७ ॥ सदाचाररतोनित्यंनि
त्यंसंगविवर्जितः ॥ अकुलीनोपिविद्वान्हिनदूष्योभोजनेकृतः ॥ १८ ॥ पद्मयोनिःसमुत्पन्नोब्रह्मलोकपितामहः ॥ तपसा
ब्राह्मणोजातस्तस्माज्जातेरकारणम् ॥ १९ ॥ कैवर्त्तगर्भसंभूतोव्यासोनाममहामुनिः ॥ तपसाब्राह्मणोजातस्तस्माज्जातेरका
रणम् ॥ २० ॥ भिल्लिकागर्भसंभूतोवाल्मीकिश्चमहामुनिः ॥ तपसाब्राह्मणोजातस्तस्माज्जातेरकारणम् ॥ २१ ॥ क्षत्रिया
गर्भसंभूतोविश्वामित्रोमहामुनिः ॥ तपसाब्राह्मणोजातस्तस्मा० ॥ २२ ॥ हरिणीगर्भसंभूतोऋष्यश्रृंगोमहामुनिः ॥ तप
साब्राह्मणोजातस्तस्मा० ॥ २३ ॥ मंडूकीगर्भसंभूतोमांडव्योऽयंमहामुनिः ॥ तपसाब्राह्मणोजातस्तस्मा० ॥ २४ ॥ कुंभ
योनिःसमुत्पन्नोनाम्नाऽगस्त्योमहामुनिः ॥ तपसाब्राह्मणोजातस्तस्मा० ॥ २५ ॥ उर्वशीगर्भसंभूतोवसिष्ठोहिमहामुनिः ॥
तपसाब्राह्मणोजातस्तस्मा० ॥ २६ ॥ हेमकलशसंभूतोद्रोणोनाममहामुनिः ॥ तपसाब्राह्मणोजातस्तस्माज्जातेरकारणम् ॥
॥ २७ ॥ विप्राणांक्षत्रियाणांचवैश्यानांचसुयोधन ॥ आचारःप्रथमोधर्मोह्यनाचारस्त्वधर्मतः ॥ २८ ॥ अन्येचैवतुयेशूद्राः
सत्यशौचपरायणाः ॥ तेषांगृहेषुभोक्तव्यंविदुरोपिबहुश्रुतः ॥ २९ ॥ यूयंशतंवयंपंचयावद्वैरंपरस्परम् ॥ परेषांतुविरोधेनरा
जन्पंचोत्तरंशतम् ॥ ३० ॥ दिनेदिनेपरिष्वज्यपतिमग्निंविशेत्पुनः ॥ पुण्यपापैर्नलिप्येतसासतीवन्हिशोधिनी ॥ ३१ ॥
परनिंदांनजानातिविष्णुभक्तिरतःसदा ॥ अमैथुनेनसंभूतानिष्पापाःपांडवाऽभवन् ॥ ३२ ॥ सत्यवंतंशुचिष्मंतंज्ञानवंतंदृढ
व्रतम् ॥ सर्वशास्त्रप्रवक्तारंविदुरंकोविलंघयेत् ॥ ३३ ॥ दुर्योधनउवाच ॥ मानेनरहितंराज्यंमानेनरहितंधनम् ॥ मानेनर

हितंमान्यंमानहीनंनजीवितम् ॥ ३४ ॥ वरंवासोवनेघोरेवरंभैक्ष्यंचयाचितम् ॥ वरंपरगृहेसेवामानहीनंनजीवितम् ॥
॥ ३५ ॥ श्रीकृष्णउवाच ॥ शृणुराजन्प्रयत्नेनयदर्थमागतंमया ॥ प्रेषितोधर्मपुत्रेणत्वत्समीपेनराधिप ॥ ३६ ॥ यदीच्छ
सिचिरंराज्यंममोक्तंवचनंकुरु ॥ तपस्तप्तंद्वादशाब्दंनष्टचर्यात्रयोदशे ॥ ३७ ॥ पंचग्रामार्थिनोराजन्पांडवाःसंतिसांप्रतम् ॥
एवंचेत्तुनसंधिःस्याद्भवितव्यंनलंघयेत् ॥ ३८ ॥ सत्यंहंतितपोहंतिपुण्यंहंतिपुराकृतम् ॥ धर्ममोक्षौतदाहंतिनास्तिक्रोधसमो
रिपुः ॥ ३९ ॥ हस्तिनापुरमध्येतुयूयंवैपंचपांडवाः ॥ अर्द्धार्द्धपृथिवीमेतांविभज्यपरिभुज्यताम् ॥ ४० ॥ गोत्रवधोनकर्त्त
व्योराजन्पंचोत्तरंशतम् ॥ भवंतःकिलशोभंतेभ्रातरोभुवनत्रये ॥ ४१ ॥ पुष्पैरपिनयोद्धव्यंकिंपुनर्निशितैःशरैः ॥ युद्धेविज
यसंदेहःप्रधानपुरुषक्षयः ॥ ४२ ॥ रामस्तुरावणश्चैवकंसस्तुनहुषस्तथा ॥ चत्वारोमूढकाश्चैवपंचमस्त्वंसुयोधन ॥ ४३ ॥
चित्रांगदेनत्वंनीतश्चित्रकेतुवनेनृप ॥ मोचितस्तेनपापेनतत्कथंविस्मृतंतव ॥ ४४ ॥ सुयोधनशृणुत्वंहिकथयामिहितंवचः ॥
कुरुवामाकुरुत्वंहिममदोषंनदीयताम् ॥ ४५ ॥ अर्द्धराज्यंप्रदातुंतेनेच्छाचपरिविद्यते ॥ अर्द्धार्द्धंदीयतांराज्यंततोप्यर्द्धमथा
पिवा ॥ ४६ ॥ धर्मस्येदंवचोराजन्भीमस्यवचनंशृणु ॥ राज्यंत्यक्त्वातुगच्छंतुवनंदुर्योधनादयः ॥ ४७ ॥ नोचेद्बंधुजनैः
सार्द्धंप्रेषयिष्येयमालयम् ॥ ससैन्यंसबलंचैवसत्यंसत्यंवचोमम ॥ ४८ ॥ सहदेवस्ययद्वाक्यंशृणुराजन्समाहितः ॥ धर्म
वाक्यंनचेत्कर्त्तामृत्युस्तेकौरवाधिप ॥ ४९ ॥ इत्येतन्मनसिध्यात्वाममोक्तंवचनंकुरु ॥ मद्वाक्यस्यतुकर्तानोदुःखायपरिकल्प
ते ॥ ५० ॥ तस्मात्सर्वप्रयत्नेनसंधिःकार्य्यस्त्वयानृप ॥ दुर्योधनउवाच ॥ यत्त्वयाभाषितंकृष्णप्रविष्टंनश्रुतौमम ॥ ५१ ॥
भीष्मद्रोणादयःशूराःकर्णशल्यादयस्तथा ॥ दुःशासनोमहावीरोलोहस्यशतभीमहा ॥ ५२ ॥ मद्रराजोऽथविख्यातोप्यन्ये



116

शूरामहाबलाः ॥ एतेहिभवताकृष्णनश्रुतायत्प्रभाषसे ॥ ५३ ॥ सर्वज्ञोऽपिजगन्नाथोजडतांकिंगतोऽधुना ॥ पांडवानांबलं
कृष्णद्रौपदीवस्त्रकर्षणे ॥ ५४ ॥ दृष्टंमयापुरासम्यगृवृथाकिंजल्पसेऽज्ञवत् ॥ श्रीकृष्णउवाच ॥ द्रौपदीधूययेत्केशान्शोणि
तेनचतेनृप ॥ ५५ ॥ दृश्यतेतत्रगांधारीमुक्तकेशाविलापिनी ॥ किरिटभंगंपश्यामिराज्यभंगंतथैवच ॥ ५६ ॥ भीष्मद्रोणा
दयोप्येतेसदाधर्मस्यसेवकाः ॥ आत्मानमपिदास्यंतिधर्मार्थनान्यथावचः ॥ ५७ ॥ कर्णादीनांबलंराजन्गोग्रहेणावलोकित
म् ॥ एकोधनंजयस्तत्रसर्वास्तूलइवाचरत् ॥ ५८ ॥ दयायुक्तेनपार्थेननहतास्तेयशोहतम् ॥ एतद्दृष्ट्वापुनर्वाक्यंकथंवदसि
मूर्खवत् ॥ ५९ ॥ समयेवस्त्रकर्षस्यभीमार्जुनपुरःसराः ॥ आकरिष्यन्भवन्नाशंधर्मोयदिनवारयेत् ॥ ६० ॥ साधुत्वाद्धर्मपु
त्रस्यजीवंतिभवदादयः ॥ नोचेत्सबांधवायूयंनाशंपूर्वंगताभवन् ॥ ६१ ॥ तस्मात्त्वंजीवरक्षार्थंधर्मेसत्यंहिविद्यते ॥ राज्य
भागंनचेद्दातादीयतांग्रामपंचकम् ॥ ६२ ॥ इंद्रप्रस्थंतिलप्रस्थंवारुणंदेवकाशिकाम् ॥ देहिमेचतुरोग्रामान्पंचमंहस्तिनापुर
म् ॥ ६३ ॥ दुर्योधनउवाच ॥ इंद्रप्रस्थंगुरोर्दत्तंतिलप्रस्थंकृपस्यच ॥ वाराणसीतुभीष्मस्यसूर्यपुत्रस्यवारुणम् ॥ ६४ ॥ ह
स्तिनापुरमध्यस्थोह्यहंतिष्ठामिकेशव ॥ नास्तिशून्यंयदुश्रेष्ठवसुधापंचखेटकम् ॥ ६५ ॥ किंपुनःश्रूयतांदेवनिश्चयंममसादर
म् ॥ सूच्यग्रेणसुतीव्रेणयावद्भिद्यतिमेदिनी ॥ ६६ ॥ विनायुद्धेनदास्यामिकिंपुनःखेटकंतथा ॥ एकाभार्याजनाःपंचपापिष्ठा
म्लेच्छधर्मिणः ॥ ६७ ॥ तेषांवार्तानकर्तव्याममाग्रेमधुसूदन ॥ श्रीकृष्णउवाच ॥ अंधस्यचसुतस्त्वंहिसमीपस्थाश्चतेज
डाः ॥ समीपमागतंमृत्युंनपश्यंतिमुमूर्षवः ॥ ६८ ॥ विनाशेहिसमुत्पन्नेबुद्धिनाशोभवेन्नृणाम् ॥ दैवेदृष्टेपुमानत्रमूर्खोभवतित
त्क्षणात् ॥ ६९ ॥ रामोहेममृगंनवेत्तिनहुषोयानेयुनक्तिद्विजान् विप्रादेवसवत्सधेनुहरणेजातामतिश्चार्जुने ॥ द्यूतेभ्रातृ

चतुष्टयंचमहिर्षींधर्मात्मजोदत्तवान् ॥ प्रायःसत्पुरुषोप्यनर्थसमयेबुद्ध्यापरित्यज्यते ॥७०॥ नभूतपूर्वंनचकेनदृष्टंहेम्नःकुरंगो
नकदापिवार्त्ता ॥ तथापितृष्णारघुनंदनस्यविनाशकालेविपरीतबुद्धिः ॥ पुंसिनैवास्तिदोषोयःयद्भाव्यंतद्भवेद्ध्रुवम् ॥ ७१ ॥
राज्ञित्वयिक्षितिभृतांविदुरेत्वमात्येसभ्येषुभीष्मगुरुकर्णकृपेषुसत्सु ॥ मय्यागतेतनुफलार्थिषुपांडवेषुसंधिर्नचेद्बलमहोभविता
दुरापम् ॥ ७२ ॥ दुर्योधनमहामूर्खस्वबंधूनांविनाशकः ॥ वृकोदरंगदापाणिंरणेक्रोधंयमोपमम् ॥ ७३ ॥ यदाद्रक्षसिदीना
त्मासर्वांभूमिंप्रदास्यसि ॥ अर्जुनंहिमहावीरंधनुस्तूणसमन्वितम् ॥ ७४ ॥ ग्रसंतंलीलयाबाणान्ध्वजाग्रेकपिकुंजरम् ॥ रु
द्ररूपंमहावीरंभ्रूभंगात्प्रलयप्रदम् ॥ ७५ ॥ युद्धेप्यालोक्यतौवीरौसर्वांभूमिंप्रदास्यसि ॥ कृष्णस्यनिष्ठुरंवाक्यंश्रुत्वाक्रुद्धास्तु
कौरवाः ॥ ७६ ॥ वध्यतांवध्यतांचायंचक्रुशुःकेशवंप्रति ॥ उत्थिताःखड्गहस्ताश्चकृष्णप्रहरणैषिणः ॥ ७७ ॥ एतस्मिन्नंतरे
कृष्णःप्रहस्यलीलयाप्रभुः ॥ जातंस्वकार्यमाज्ञायततोप्यंतर्दधेमुदा ॥ ७८ ॥ मंडपंपदघातेननिपात्यकौरवोपरि ॥ कस्यभ
ग्नंशिरःकस्यचोष्ठेनेत्रेचनासिका ॥ ७९ ॥ कस्यहस्तौचपादौचकेचित्प्राणांश्चतत्यजुः ॥ भीष्मद्रोणादयस्तत्रदुर्योधनमथाब्रु
वन् ॥ ८० ॥ कृष्णोक्तंहिवचःसत्यमंधपुत्रभवान्ध्रुवम् ॥ कृष्णंनवेदपुरतःकालरूपिणमागतम् ॥ ८१ ॥ पूजितोनत्वयामं
दमाध्व्यावाण्यानहर्षितः ॥ नस्तुतोभवतामूर्खसर्वलोकपितामहः ॥ ८२ ॥ सुरासुरगणैर्वंद्योगीतस्तुंबरुनारदैः ॥ प्रसादंय
स्यदेवस्यलक्ष्मीर्वांच्छतिसर्वदा ॥ ८३ ॥ तस्याग्रेहिभवान्कियान्पूर्णस्यपरमात्मनः ॥ भूमौभारायमाणानांनृपाणांनाशना
यच ॥ ८४ ॥ संपालनायसाधूनामवतीर्णोऽस्तिभूतले ॥ मूर्खकिंबहुनोक्तेनसत्यमेतद्ब्रवीमिते ॥ ८५ ॥ अकृतार्थेगतेकृष्णे
सर्वनाशोभविष्यति ॥ एषाराज्यभवालक्ष्मीःकस्यतातनरोचते ॥ ८६ ॥ यावद्भाग्योदयःपुत्रतावल्लक्ष्मीःस्थिरायते ॥ सर्वना

119

शेसमुत्पन्नेह्यर्द्धंत्यजतिपंडितः ॥ ८७ ॥ अर्द्धेनकुरुतेकार्यंसर्वनाशोहिदुस्त्यजः ॥ परोपिहितवान्बंधुर्बंधुरेवाहितःपरः ॥
॥ ८८ ॥ अहितोदेहजोव्याधिर्हितमारण्यमौषधम् ॥ भीष्मादीनांवचःश्रुत्वाविदुरोवाक्यमब्रवीत् ॥ ८९ ॥ विदुरउवाच॥
एषदुर्योधनोराजामध्यपिंगललोचनः ॥ नकेवलंकुलस्यांतंक्षत्रियांतंकरिष्यति ॥ ९० ॥ इतिश्रीमहाभारतेभारतसारेउद्यो
गपर्वणिकृष्णागमनिर्गमोनामपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ षट्पंचाशत्तमेध्यायेपुनःश्रीकृष्णमेलनम् ॥ पाण्डवानांकुरू
णांचयुद्धोद्योगश्चकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ ततःसकेशवोदेवोयत्रराजायुधिष्ठिरः ॥ तत्रगत्वातुतत्सर्वंजगादधर्मनं
दनम् ॥ २ ॥ असौदुर्योधनोराजानार्धंराज्यंददातिते ॥ पंचग्रामान्नोराजन्ददातिखेटकादिकम् ॥ ३ ॥ प्रार्थितश्चमया
नानाह्युक्त्वाधर्मान्सुयोधने ॥ देशोनास्तिमहाराजखेटकंक्षेत्रमेवच ॥ ४ ॥ असिधाराप्रमाणेनराज्यंकुरुनराधिप ॥ युद्धं
विनामहामूर्खःसूचीभेद्यांमहीमिमाम् ॥ ५ ॥ नददातिजडाःसर्वेपार्श्वस्थाधर्मनंदन ॥ इतिकृष्णवचःश्रुत्वाधर्मराजोमहाम
नाः ॥ ६ ॥ उद्यमंकृतवांस्तत्रयुद्धायकृतनिश्चयः ॥ दूताश्चप्रेषितादेशेसुहृदांचनिमंत्रणे ॥ ७ ॥ लिखित्वैवंहिपत्रंचकथंनश्रू
यतांनृप ॥ अस्माकंकौरवाणांचयुद्धंभाविनृपोत्तमाः ॥ ८ ॥ शीघ्रमायांतुसन्नद्धाविराटनगरंप्रति ॥ जनमेजयउवाच ॥ स्वा
मिन्वेदितुमिच्छामिकजातंयुद्धमद्भुतम् ॥९॥ कस्यभूमौस्थिताःसर्वेपितापुत्रास्तुयोधिनः ॥ गुरवःशिष्यमुख्याश्चतन्मेकथयसु
व्रत ॥ १० ॥ वैशंपायनउवाच ॥ एकदाऽर्जुनकृष्णौचदुर्योधनसमन्वितौ ॥ विलोकनार्थायगतौरणंकर्तुंवसुंधराम् ॥ ११ ॥
देशान्गच्छंतःपश्यंतोदृष्टंक्षेत्रंसुविस्तरम् ॥ क्रूरंकंठोरवृक्षंचक्रूरसत्वनिषेवितम् ॥ १२ ॥ तिष्ठंतिनिष्ठुराःसर्वेनिर्दयाधर्मवर्जि
ताः ॥ तत्रगत्वास्थितायावत्तावत्क्षेत्रस्यकर्षकौ ॥ १३ ॥ पितापुत्रौप्रविष्टौचलांगलाग्रविचालिनौ ॥ तावत्पुत्रस्तुसर्पेणक्षे

त्रमध्येविदंशितः ॥ १४ ॥ पतितंसुतमालोक्यपित्रालांगलखेटनम् ॥ कृतंतत्रतदग्रेणबहिर्निष्काश्यत्याजितः ॥ १५ ॥ तद्दृष्ट्वाजनकाठिण्यमग्रेचचलितास्त्रयः ॥ यावद्व्रजंतिमार्गेचतावद्दृष्ट्वावधूवरौ ॥ १६ ॥ सभक्षासजलासाचह्यायाताचत्वरान्विता ॥ कृष्णादिभिस्तुसापृष्टाकस्यस्त्रीकस्यबालिका ॥ १७ ॥ तयातेभ्यस्तथैवोक्तंभर्त्ताचममखेटनम् ॥ करोतिश्वशुरश्चैवतदर्थंभक्षमानय ॥ १८ ॥ तदाकृष्णेनकथितंभर्त्तातेसर्पदंशितः ॥ पित्रापंचत्वमापन्नःक्षेत्राच्चत्याजितोबहिः ॥ १९ ॥ इतितस्यवचःश्रुत्वानिजभर्तुश्चमांसकम् ॥ भक्षितंचतयातत्रदृष्ट्वाचविस्मिताभवन् ॥ २० ॥ पश्चाद्विचार्यतेसर्वंदृष्ट्वाचविस्मितास्तदा ॥ तस्मात्क्षेत्रात्त्रयस्तेतुपुनरागत्यचागताः ॥२१॥ निजस्थानेसमागत्ययुद्धोद्यममचीकरन् ॥ अतिप्रीतास्तुयेभूपाविराटनगरेचते ॥ २२ ॥ आहूताधर्मराजेनमिलितास्तत्रकेचनं ॥ विराटःसहपुत्रेणससैन्यःसपरिग्रहः ॥ २३ ॥ युयुधानोयुधामन्यूरुत्तमौजाश्चवीर्यवान् ॥ द्रुपदःसहपुत्रेणससैन्यःसपरिच्छदः ॥ २४ ॥ आजगाममुदायुक्तोविराटनगरंप्रति ॥ हिडिंबायाःसुतौवीरौबर्बरीकघटोत्कचौ ॥ २५ ॥ एतेचान्येमहावीराविराटनगरेस्थिताः ॥ अन्येचधर्मसुभटाःकुरुक्षेत्रेसमागताः ॥ २६ ॥ मिलितास्तत्रराजानःकुरुपांडवयोस्तथा ॥ धर्मनंदनमावेद्यकृष्णोपिद्वारकांप्रति ॥ २७ ॥ आगमिष्येकुरुक्षेत्रेसैन्यमादायसत्वरम् ॥ सर्वंकार्यंकरिष्यामिनिर्भयोभवधर्मज ॥ २८ ॥ त्वदीयंचमदीयंचकार्यंभिन्नंकदापिन ॥ सइत्थंपरिसंतोष्यविश्वात्माप्यगमद्गृहं ॥ २९ ॥ ततोयुधिष्ठिरोराजासर्वानिदमभाषत ॥ कस्यास्तिकीदृशंतेजःकीदृशश्चपराक्रमः ॥ ३० ॥ ततोभीमोऽब्रवीद्धर्मंत्वरयागर्जयन्दिशः ॥ सर्वेषांपश्यतांराजन्पार्थिवानांधृतात्मनाम् ॥३१॥ हनिष्येहंमहाराजकौरवाणांमहारणे ॥ दुःशासनस्यबाहूतौस्कंधादुत्पाटयाम्यहम् ॥ ३२ ॥ तत्रत्यंरुधिरंपीत्वाद्रौपद्याह्यनृणोभवम् ॥ हत्वादुर्योधनंयुद्धे

गदयापातयाम्यहम् ॥ ३३ ॥ सर्वेषांपश्यतांराज्ञांप्रतिज्ञेयमयाकृता ॥ तामेवपालयिष्यामिसत्यंविष्णोःसहायतः ॥ ३४ ॥
एवंवदतिभीमेवैपार्थोवचनमब्रवीत ॥ क्षत्रियायेमयासार्द्धंकरिष्यंतिमहाहवम् ॥ ३५ ॥ तानहंहिहनिष्यामिसत्यंविष्णुःस
हायकः ॥ विष्णुर्हिपरमंदैवंनृणांभवतिनान्यथा ॥ ३६ ॥ तयोर्वचनमाकर्ण्यसहदेवोऽब्रवीदिदम् ॥ यद्यनेनहिमूर्खेणधृतरा
ष्ट्रसुतेनवै ॥ ३७ ॥ नाहृतंविष्णुवचनंधर्मोक्तमपिनादृतम् ॥ अष्टादशदिनानांवैमध्येराजासुयोधनः ॥ ३८ ॥ मरिष्यतिन
संदेहोयुद्धारंभदिनाद्ध्रुवम् ॥ पांडवानांप्रतिज्ञांतांश्रुत्वायेचागताश्चराः ॥ ३९ ॥ दुर्योधनायकथितंतैर्गत्वाहस्तिनापुरम् ॥
दुर्योधनंप्रणम्याहुस्तत्रवृत्तांतमीदृशम् ॥ ४० ॥ भीमेनचार्जुनेनापिप्रतिज्ञात्वीदृशीकृता ॥ तांप्रतिज्ञांसमाकर्ण्यसहदेवोब्रवी
दिदम् ॥ ४१ ॥ अष्टादशदिनानांवैमध्येराजासुयोधनः ॥ मरिष्यतिनसंदेहोयुद्धारंभदिनात्ध्रुवम् ॥ ४२ ॥ चरोक्तंवच
नंश्रुत्वाभीतोराजासुयोधनः ॥ नकरिष्याम्यहंयुद्धमष्टादशदिनंपरैः ॥ ४३ ॥ मनस्येवंतुनिश्चित्यभीतोप्यासीदभीतवत् ॥
प्रीतिपूर्वंजगामाशुभीष्मस्यैवनिकेतनम् ॥ ४४ ॥ सप्रतिवचनंप्रोच्यपूजयित्वात्वनेकधा ॥ संतोष्यपरयाभक्त्याभीष्मंप्राह
सुयोधनः ॥ ४५ ॥ सुयोधनउवाच ॥ दासोऽहंतेहिपोष्योऽस्मिपालनीयोऽस्मिसर्वदा ॥ स्वपाल्यवस्तुनाशेनपुंसांदुःखंभवे
द्विभो ॥ ४६ ॥ इतितस्यवचःश्रुत्वाभीष्मोवचनमब्रवीत् ॥ भीष्मउवाच ॥ दुर्योधनमहावीरराजासित्वंमहीतले ॥ ४७ ॥
अस्माकंबालरूपत्वेप्यसिपूज्यश्चसर्वदा ॥ एतद्वाक्यंसमाकर्ण्यराजावचनमब्रवीत ॥ ४८ ॥ भीमार्जुनप्रतिज्ञांचसहदेववच
स्तथा ॥ श्रूयतामीदृशंतातममनाशस्यसूचकम् ॥ ४९ ॥ तस्मात्सर्वप्रयत्नेनपाल्यतांचपितामह ॥ सुयोधनस्यवचनमाक
र्ण्यजान्हवीसुतः ॥ ५० ॥ नरनारायणाभ्यांवैयुद्धंकार्य्यंमयाध्रुवम् ॥ मनस्येवंविचिंत्यासौभीष्मोवचनमब्रवीत् ॥ ५१ ॥

इतिश्रीमहाभारतेभारतसारेउद्योगपर्वणिदुर्योधनभीतिर्नामषट्पंचाशत्तमोऽध्यायः ॥५६॥ ॥ सप्तपंचाशत्तमेचकुरुपांडवयो
र्बलम् ॥ अष्टाधिकशताख्यंयत्प्राप्तंतदिहकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ अथत्रस्तंहिराजानंभीष्मोवचनमब्रवीत् ॥
भीष्मउवाच ॥ दिनानांदशकंराजन्तवरक्षांकरोम्यहम् ॥ २ ॥ मयिभीष्मेधनुर्हस्तेकालस्याप्यसमर्थता ॥ भविष्यतिमहा
राजसत्यंसत्यंवचोमम ॥ ३ ॥ समुत्थायततोराजाद्रोणंगत्वाब्रवीद्वचः ॥ गुरोद्रोणमहावीरशिष्यःपुत्रइवाभिधा ॥ ४ ॥
पालनीयोऽस्म्यहंतातनान्यनाथोहिभूतले ॥ भीमार्जुनप्रतिज्ञांवैसहदेववचश्चयत् ॥ ५ ॥ प्रोवाचसकलंतत्रभीष्मस्यवचनं
चयत् ॥ एतत्सर्वंतदाज्ञायद्रोणोवचनमब्रवीत् ॥ ६ ॥ द्रोणउवाच ॥ यद्येवंतर्हिराजेंद्रदिनानांहिचतुष्टयम् ॥ रक्षेहंत्वांतु
यत्नेनयमादपिनराधिप ॥ ७ ॥ तमामंत्र्यततोराजाजगामकर्णमंदिरम् ॥ तत्रगत्वाततोवाचकर्णंवाचाभिनंदयन् ॥ ८ ॥
पूर्ववृत्तांतमावेद्यरक्षणीयोऽस्मिसूर्यज ॥ एतद्वचनमाकर्ण्यकर्णोवचनमब्रवीत् ॥ ९ ॥ कर्णउवाच ॥ तदादिनद्वयंराजन्तव
रक्षांकरोम्यहम् ॥ ततोदुर्योधनोराजाशल्यंगत्वाउवाचह ॥ १० ॥ दुर्योधनउवाच ॥ शल्यत्वंहिमहावीरममरक्षांकुरुप्रभो ॥
पूर्ववृत्तांतमावेद्ययावदग्रेस्थितोनृपः ॥ ११ ॥ शल्यस्तंप्रत्युवाचेदंमनसाभयशंकितः ॥ दिनमेकंतुराजेंद्रतवरक्षांकरोमिवै ॥
॥ १२ ॥ ततोदुर्योधनोराजाएकस्यदिवसस्यच ॥ प्रतारणायनापश्यद्वीरंसोऽचिंतयत्तदा ॥ १३ ॥ अतःपरंहिकिंकार्यंर्यदि
नस्यैकस्यरक्षणे ॥ नापश्यच्चतथावीरंयंगत्वाप्रार्थयेद्दिनम् ॥ १४ ॥ एवंनानावितर्क्यासौपतित्वाहीनवीर्यकः ॥ नजगामहि
पापिष्ठःस्वयंमत्वादिनंस्थितः ॥ १५ ॥ ततश्चकौरवान्सर्वान्समादायस्वबांधवान् ॥ जगामचकुरुक्षेत्रंराजादुर्योधनःस्वयम्
॥ १६ ॥ धर्मराजःसबंधुर्वैसर्वसैन्यसमन्वितः ॥ जगामचकुरुक्षेत्रंयुद्धायकृतनिश्चयः ॥ १७ ॥ द्वारकायास्तदाकृष्णोप्याज

123

गामबलैर्वृतः ॥ बलभद्रेणसंयुक्तःसकलैर्यादवैर्वृतः ॥ १८ ॥ कौरवाःपांडवाश्चैवमिलिताःसुखमास्थिताः ॥ तदादुर्योधनो
राजाभीमश्चबलिनांवरः ॥ १९ ॥ कृष्णंयुद्धार्थमासाद्यप्रार्थयामासतुर्नृप ॥ कृष्णंसुप्तंसमाज्ञायमानीदुर्योधनस्तदा ॥ २० ॥
उपविष्टःशिरोभागेभीमःपादेस्थितोऽभवत् ॥ तदाकृष्णःसमुत्थायाप्यग्रेभीमंविलोक्यवै ॥ २१ ॥ जातोऽस्मितेसहायोऽ
यंनिश्चितंमेवचस्तदा ॥ इत्युक्त्वापृष्ठतोयावद्विलोकयतिचेश्वरः ॥ २२ ॥ तदादुर्योधनोदृष्टःकदाराजन्समागतम् ॥ भीमा
यवचनंदत्तंकिंकरोमिहिभूमिप ॥ २३ ॥ बलादिसकलंसैन्यंगृहाणत्वंमहामते ॥ इतितस्यवचःश्रुत्वाराजावचनमब्रवीत् ॥
॥ २४ ॥ दुर्योधनउवाच ॥ बलंगच्छतुभीमेवैमध्यभागेभवान्विभो ॥ इतितंप्रवदंतंहिकृष्णःप्रोवाचभ्रामयन् ॥ २५ ॥
श्रीकृष्णउवाच ॥ नाहंयुद्धंकरिष्यामिनायुधंसंधरामिवै ॥ एवंमत्वानृपश्रेष्ठयत्तेमनसिरोचते ॥ २६ ॥ तत्कार्यंहिप्रकर्त
व्यंकर्तव्यमेकतोभवेत् ॥ इतितद्विवचोभीमंभ्रामयन्दिव्यमुच्चरन् ॥ २७ ॥ च्छलच्छद्मप्रकर्त्तारःपूज्यपूजाव्यतिक्रमात ॥
तेषांपापेनलिप्यामिसंगृण्हामियदायुधम् ॥ २८ ॥ विश्वासघातकायैवयेजनाःकृतघातकाः ॥ तेषांपापेनलिप्यामिसंगृण्हा
मियदायुधम् ॥ २९ ॥ इतिनानाविधैर्वाक्यैःप्रतीताःकौरवास्तदा ॥ बलादिसकलंसैन्यंगृहीतंमंदबुद्धिना ॥ ३० ॥ इत्यु
क्त्वाभीमराजानौस्वंस्वंभागंचजग्मतुः॥बलभद्रेणसंमंत्र्ययात्रायांचतमादिशत्॥३१॥ नयुद्ध्यतिकदायुद्धंबलंसेनान्यमंतरा ॥
प्राप्तंकृष्णात्मकंयातंधर्मेणसैन्यसागरे ॥ ३२ ॥ सुदृढंचाविनाशिचदुर्लभंधर्ममंतरा ॥ यद्दाश्रित्यमहात्मानस्तरंतिभवसाग
रम् ॥ ३३ ॥ एवंभागेचसंजातेधर्मपुत्रोमहारथः ॥ अक्षौहिणिनांसप्तानांस्वामीतत्रबभूवह ॥३४॥ एकादशाक्षौहिणीनांस्वा
मीराजासुयोधनः ॥ स्वेस्वेभागेस्थिताःसर्वेयुद्धादौगर्जयंतिहि ॥ ३५ ॥ सिंहवच्छंखनादांश्चकुर्वंतिगर्जनांतथा ॥ नेदुर्दुंदु

भयस्तत्रसर्वसैन्यसमागमे ॥ ३६ ॥ इतिश्रीमहाभारतेभारतसारेउद्योगपर्वणिसैन्यसमागमोनामसप्तपंचाशत्तमोऽध्यायः ॥
॥ ५७ ॥ ॥ अष्टपंचाशत्तमेचशूरश्लाघाद्विसेनयोः ॥ वर्वरीकशरीरस्यबलिदानमिहोच्यते ॥ १ ॥ वैशंपायनउवाच ॥ दुर्यो
धनस्यसैन्येयेशूराःसंतिमहारथाः ॥ तान्शृणुष्वमहाभागकथयिष्येतवाग्रतः ॥ २ ॥ भीष्मोप्यतिरथःप्रोक्तोद्रोणोप्यतिर
थीस्मृतः ॥ तस्यपुत्रोप्यतिरथीकृपश्चातिरथीतथा ॥ ३ ॥ चत्वारःसदृशाःप्रोक्ताःकर्णश्चप्रबलस्तथा ॥ राजन्सर्वेबहुबलाब
लश्चैवमहारथः ॥ ४ ॥ शकुनिःसौबलश्चापिशिवश्चविक्रमस्तथा ॥ उलूकःसोमदत्तश्चविष्वक्सेनोमहाबलः ॥ ५ ॥ वैकर्त्त
नःकलिंगश्चबाल्हीकोवैमहारथः ॥ भगदत्तोविकर्णश्चदुःशासनजयद्रथौ ॥ ६ ॥ एतेचान्येमहावीराःकीर्तिताःकौरवेबले ॥
पांडवानांदलेशूरास्तान्शृणुष्वमहामते ॥ ७ ॥ अर्जुनःसात्यकिश्चैवविराटद्रुपदौतथा ॥ अभिमन्युर्भीमसेनोवर्वरीकघटोत्क
चौ ॥ ८ ॥ नकुलःसहदेवश्चतथाराजायुधिष्ठिरः ॥ एतेषुवीरमुख्येषुयेचैतेऽतिरथाःस्मृताः ॥ ९ ॥ अर्जुनःसहपुत्रैश्चभीम
सेनःसपुत्रकः ॥ सर्वेषामग्रणीर्देवोवासुदेवोविराजते ॥ १० ॥ तस्यप्रभावात्सर्वेतेहरिणातुल्यविक्रमाः ॥ भीष्मादीनांप्रभा
वेनसर्वेरुद्रपराक्रमाः ॥ ११ ॥ वैशंपायनउवाच ॥ कृष्णःशराणांत्रितयंदृष्ट्वाभीमात्मजस्यच ॥ वर्वरीकस्यहस्तेवैनाशमिच्छ
न्जहासह ॥ १२ ॥ भीमार्जुनमहावीरावर्वरीकस्यपौरुषम् ॥ पश्यंतुधनुषोरूपंबाणानांत्रितयंतथा ॥ १३ ॥ भग्नेष्वेतेषुबा-
णेषुकेनयुद्धंकरिष्यसि ॥ अर्जुनाद्यामहावीरावृथाकिंबाणधारकाः ॥ १४ ॥ वदंतीत्थंहिविष्णौसःप्रोवाचेदंवचोहसन् ॥ व
र्वरीकउवाच ॥ भग्नैकःसायकाद्विष्णोपश्यतांचनृपोत्तमः ॥ १५ ॥ द्वाभ्यांवैसाधयेकृत्यंस्थित्वाभग्नेबलेप्यहम् ॥ इतितस्य
वचःश्रुत्वाकृष्णःपप्रच्छभीमजम् ॥ १६ ॥ वर्वरीकमहाबाहोकथंकृत्यंकरिष्यसि ॥ वर्वरीकउवाच ॥ बाणेनैकेनयोद्धृणांमृ

त्युंसम्यग्विलक्षये ॥ १७ ॥ पश्चान्निष्काशयेज्जीवंतत्क्षणान्मधुसूदन ॥ १८ ॥ हसित्वानंतरंविष्णुःप्रोवाचछलयन्गिरा ॥
मन्मृत्युंचापिजानीहिततस्त्वामानयेद्दृढम् ॥ १९ ॥ इतिविष्णुवचःश्रुत्वामुमोचगगनेशरम् ॥ सप्तलोकान्गतोबाणोमृत्युंत
त्रनपश्यत ॥ २० ॥ चतुर्दिक्षुविलोक्याथपश्चात्पातालमाविशत् ॥ पातालंसप्तमंगत्वातत्रमृत्युमपश्यत ॥ २१ ॥ विष्णोश्च
पार्ष्णिसमासाद्यसिंदूरांकमुखेनवै ॥चिन्हिंकृत्वावर्वरीकसमीपमगमच्छरः ॥ २२ ॥ द्वितीयंतुपुनर्बाणंयावद्दक्षतिसादरं ॥
तावत्सविष्णुनादृष्टोवर्वरीकस्तदाहसन् ॥ २३ ॥ विष्णुःपार्श्वंसमालोक्यसिंदूरेणसुचिन्हितम् ॥ वर्वरीकंमहात्मानंज्ञात्वा
तूष्णींबभूवह ॥ २४ ॥ द्वितीयेदिवसेविष्णुःसमाभाष्यचपांडवान् ॥ उवाचभ्रामयन्नाशंकरिष्यन्भीमजस्यवा ॥ २५ ॥
श्रीकृष्णउवाच ॥ बलिनायुद्धभूमिर्हिपूजनीयाजयायवै ॥ नोवाचेद्रणभूमिर्हिभक्षयिष्यतिपांडवान् ॥ २६ ॥ पांडवाऊचुः ॥
अस्माकंहितदाप्यन्योहितोनास्तिधरातले ॥ गजाश्वनरजीवानांबलंकस्यभवेद्विभो ॥ २७ ॥ कथ्यतांचात्रतत्सर्वमस्मद्यु
द्धेजयोभवेत् ॥ श्रीकृष्णउवाच ॥ द्वात्रिंशल्लक्षणैर्युक्तोवीरोयोद्धाभवेच्चयः ॥ २८ ॥ यदाचास्तुबलित्वेवैनृणांत्याज्याजयि
ष्णुभिः ॥ पांडवाऊचुः ॥ बलेऽस्माकंबलित्वेवैकोयोग्योस्तिचतंवद ॥ २९ ॥ इतितेषांवचःश्रुत्वाजलैरापूर्यचक्षुभिः ॥ उ
वाचपांडवान्कृष्णोविदुषांभ्रांतिकारकः ॥ ३० ॥ श्रीकृष्णउवाच ॥ अहमत्रतथावीरावर्वरीकोस्तिमत्समः ॥ अर्जुनोप्यथ
वाचात्रहन्यतांनात्रसंशयः ॥ ३१ ॥ एकेनेष्टेहिसर्वत्रजीविष्यंतिहिनान्यथा ॥ वैरिणोहिमरिष्यंतियदित्राताबृहस्पतिः ॥
॥ ३२ ॥ इतितस्यवचःश्रुत्वाविष्णोःसंसाररूपिणः ॥ प्रहसन्वर्वरीकोऽसौप्राहसर्वांश्चपांडवान् ॥ ३३ ॥ वर्वरीकउवाच ॥
कृष्णार्जुनौविनासर्वेनिष्फलाश्चात्रसंयुगे ॥ भवद्भिर्हन्यतांतत्रमच्छिरोवाजयोस्तुवः ॥ ३४ ॥ राज्यंकुर्वंतुसर्वेवैमेभाग्यंकि

मतःपरम् ॥ इत्युक्त्वैकेनहस्तेनशिखाग्रेधृतवान्स्वयम् ॥ ३५ ॥ द्वितीयेनशिरच्छित्वासंप्रार्थ्यकृष्णमीदृशम् ॥ कृष्णकृष्णाप्र
मेयात्मन्भूभारोत्तारकःप्रभो ॥ ३६ ॥ यथायुद्धंभवेदत्रद्रष्टुकामोऽस्मितादृशम् ॥ त्वत्प्रसादेनसर्वंहियुद्धंदर्शयनान्यथा ॥
॥ ३७ ॥ मुक्तिंप्रापयविष्णोपादासदासंहित्वत्पदम् ॥ इतिभक्तस्यवाक्यानिसमाकर्ण्यहरिर्भृशम् ॥ ३८ ॥ उद्विग्नोभूत्त्वरा
जेंद्रएवमस्त्वितिचावदत् ॥ तस्यशीर्षसमागत्यपपातकृष्णपादयोः ॥ ३९ ॥ हस्ताभ्यांप्रतिगृह्याथस्थापयामासपर्वते ॥
अवलोकयवीरत्वंयथायुद्धंभविष्यति ॥ ४० ॥ एवंसंपाद्यकृष्णोक्तंयुद्धायकृतनिश्चयः ॥ विशोकइवराजेंद्रतदद्भुतमिवाभवत्
॥ ४१ ॥ हेमंतेप्रथमेमासिशुक्लपक्षेत्रयोदशी ॥ भौमवारेभरण्यांचसंगरोभूत्तदामहान् ॥ ४२ ॥ इतिश्रीमहाभारतेभारत
सारेउद्योगपर्वणिअष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ उद्योगपर्वसमाप्तम् ॥ अथभीष्मपर्वमाह ॥ एकोनषष्टितमेचफाल्गुन
स्यमहामतेः ॥ स्वजनानांदयाकामोधर्मरूपश्चकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ अतःपरंप्रवक्ष्यामिभीष्मपर्वमनुत्तमम् ॥
यस्यश्रवणमात्रेणदेहाध्यासःप्रमुच्यते ॥ २ ॥ प्रवृत्तंभारतंयुद्धंकुरुपांडवयोरिदम् ॥ युद्धकालेगुरून्दृष्ट्वाभ्रातृंश्चापिपिताम
हान् ॥ ३ ॥ विषीदन्नर्जुनोवीरोदयायुक्तोऽब्रवीदिदम् ॥ अर्जुनउवाच ॥ सेनयोरुभयोर्मध्येरथंस्थापयमेऽच्युत ॥ ४ ॥
यावदेतान्निरीक्ष्येऽहंयोद्धुकामानवस्थितान् ॥ कैर्मयासहयोद्धव्यमस्मिन्रणसमुद्यमे ॥ ५ ॥ योत्स्यमानानवेक्ष्येऽहंयएतेऽ
त्रसमागताः ॥ धार्तराष्ट्रस्यदुर्बुद्धेर्युद्धेप्रियचिकीर्षवः ॥ ६ ॥ संजयउवाच ॥ एवमुक्तोहृषीकेशोगुडाकेशेनभारत ॥ सेनयो
रुभयोर्मध्येस्थापयित्वारथोत्तमम् ॥ ७ ॥ भीष्मद्रोणप्रमुखतःसर्वेषांचमहीक्षिताम् ॥ उवाचपार्थपश्यैतान्समवेतान्कुरूनि
ति ॥ ८ ॥ तत्रापश्यत्स्थितान्पार्थःपितृनथपितामहान् ॥ आचार्यान्मातुलान्भ्रातृन्पुत्रान्पौत्रान्सखींस्तथा ॥ ९ ॥ श्व

शुरान्सुहृदश्चैवसेनयोरुभयोरपि ॥ तान्समीक्ष्यसकौंतेयःसर्वान्बंधूनवस्थितान् ॥ १० ॥ कृपयापरयाविष्टोविषीदन्निदमब्र
वीत् ॥ अर्जुनउवाच ॥ दृष्ट्वेमंस्वजनंकृष्णयुयुत्सुंसमुपस्थितम् ॥ ११ ॥ सीदंतिममगात्राणिमुखंचपरिशुष्यति ॥ वेपथुश्च
शरीरेमेरोमहर्षश्चजायते ॥ १२ ॥ गांडीवंस्रंसतेहस्तात्त्वक्चैवपरिदह्यते ॥ नचशक्नोम्यवस्थातुंभ्रमतीवचमेमनः ॥ १३ ॥
निमित्तानिचपश्यामिविपरीतानिकेशव ॥ नचश्रेयोनुपश्यामिहत्वास्वजनमाहवे ॥ १४ ॥ नकांक्षेविजयंकृष्णनचराज्यंसु
खानिच ॥ किंनोराज्येनगोविंदकिंभोगैर्जीवितेनवा ॥ १५ ॥ येषामर्थेकांक्षितंनोराज्यंभोगाःसुखानिच ॥ तइमेवस्थितायु
द्धेप्राणांस्त्यक्त्वाधनानिच ॥ १६ ॥ आचार्याःपितरःपुत्रास्तथैवचपितामहाः ॥ मातुलाःश्वशुराःपौत्राःशालाःसंबंधिनस्तथा
॥ १७ ॥ एतान्नहंतुमिच्छामिघ्नतोपिमधुसूदन ॥ अपित्रैलोक्यराज्यस्यहेतोःकिंनुमहीकृते ॥ १८ ॥ निहत्यधार्तराष्ट्रान्नःका
प्रीतिःस्याज्जनार्दन ॥ पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ १९ ॥ तस्मान्नार्हावयंहंतुंधार्तराष्ट्रान्स्वबांधवान् ॥ स्व
जनंहिकथंहत्वासुखिनःस्याममाधव ॥ २० ॥ यद्यप्येतेनपश्यंतिलोभोपहतचेतसः ॥ कुलक्षयकृतंदोषंमित्रद्रोहेचपातकम्
॥ २१ ॥ कथंनज्ञेयमस्माभिःपापादस्मान्निवर्तितुम् ॥ कुलक्षयकृतंदोषंप्रपश्यद्भिर्जनार्दन ॥ २२ ॥ कुलक्षयेप्रणश्यंतिकुल
धर्माःसनातनाः ॥ धर्मेनष्टेकुलंकृत्स्नमधर्मोभिभवत्युत ॥ २३ ॥ अधर्माभिभवात्कृष्णप्रदुष्यंतिकुलस्त्रियः ॥ स्त्रीषुदुष्टासु
वार्ष्णेयजायतेवर्णसंकरः ॥ २४ ॥ संकरोनरकायैवकुलघ्नानांकुलस्यच ॥ पतंतिपितरोह्येषांलुप्तपिंडोदकक्रियाः ॥ २५ ॥
दोषैरेतैःकुलघ्नानांवर्णसंकरकारकैः ॥ उत्साद्यंतेजातिधर्माःकुलधर्माःसनातनाः ॥ २६ ॥ उत्सन्नःकुलधर्माणांमनुष्याणांजना
र्दन ॥ नरकेनियतंवासोभवतीत्यनुशुश्रुम ॥ २७ ॥ अहोबतमहत्पापंकर्तुंव्यवसितावयम् ॥ यद्राज्यसुखलोभेनहंतुंस्वज

नमुद्यताः ॥ २८ ॥ यदिमामप्रतीकारमशस्त्रंशस्त्रपाणयः ॥ धार्तराष्ट्रारणेहन्युस्तन्मेक्षेमतरंभवेत् ॥ २९ ॥ संजयउवाच ॥ ए
वमुक्त्वार्जुनःसंख्येरथोपस्थउपाविशत् ॥ विसृज्यसशरंचापंशोकसंविग्नमानसः ॥ ३० ॥ इतिश्रीमहाभारतेभारतसारेभी
ष्मपर्वणिश्रीकृष्णार्जुनसंवादेअर्जुनविषादोनामएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ षष्टितमेनृणांधर्मःकथंस्यान्निरयाद्गतिः ॥
प्रतिज्ञाभीष्मदेवस्यश्रीकृष्णकृपयोच्यते ॥ १ ॥ संजयउवाच ॥ तंतथाकृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ॥ विषीदंतमिदंवाक्य
मुवाचमधुसूदनः ॥ २ ॥ श्रीकृष्णउवाच ॥ कुतस्त्वाकश्मलमिदंविषमेसमुपस्थितम् ॥ अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन
॥ ३ ॥ क्लैब्यंमास्मगमःपार्थनैतत्त्वय्युपपद्यते ॥ क्षुद्रंहृदयदौर्बल्यंत्यक्त्वोत्तिष्ठपरंतप ॥ ४ ॥ अर्जुनउवाच ॥ कथंभीष्मम
हंसंख्येद्रोणंचमधुसूदन ॥ इषुभिःप्रतियोत्स्यामिपूजार्हावरिसूदन ॥ ५ ॥ गुरूनहत्वाहिमहानुभावान्श्रेयोभोक्तुंभैक्ष्यम
पीहलोके ॥ हत्वार्थकामांस्तुगुरूनिहैवभुंजीयभोगानरुधिरप्रदिग्धान् ॥ ६ ॥ गुरून्पितामहान्पुत्रान्सुहृत्संबंधिबांधवान् ॥
हत्वाभोगान्हिभुंजामिरुधिराक्तान्कथंहरे ॥ ७ ॥ लक्ष्मीभोगायलोभाययुद्धांतेस्वजनैःसह ॥ यदिवाथजयोनस्यात्पातकं
हिशिरःस्थितम् ॥ ८ ॥ सदयस्त्वांहिपृच्छामियथाश्रेयोभवेन्मम ॥ धर्मकष्टेसमुत्पन्नेनिर्णयंवदकेशव ॥ ९ ॥ संजयउवा
च ॥ एवमुक्त्वाहृषीकेशंगुडाकेशःपरंतप ॥ नयोत्स्यामीतिगोविंदमुक्त्वातूष्णींबभूवह ॥ १० ॥ तमुवाचहृषीकेशःप्रहस
न्निवभारत ॥ सेनयोरुभयोर्मध्येविषीदंतमिदंवचः ॥ ११ ॥ श्रीकृष्णउवाच ॥ अशोच्यानन्वशोचस्त्वंप्रज्ञावादांश्चभाषसे॥
गतासूनगतासूंश्चनानुशोचंतिपंडिताः ॥ १२ ॥ स्वधर्ममपिचावेक्ष्यनविकंपितुमर्हसि ॥ धर्म्याद्धियुद्धाच्छ्रेयोन्यत्क्षत्रियस्यन
विद्यते ॥ १३ ॥ यदृच्छयाचोपपन्नंस्वर्गद्वारमपावृतम् ॥ सुखिनःक्षत्रियाःपार्थलभंतेयुद्धमीदृशम् ॥ १४ ॥ अथचेत्वमिमंध

र्यसंग्रामंनकरिष्यसि ॥ ततःस्वधर्मंकीर्तिंचहित्वापापमवाप्स्यसि ॥ १५ ॥ अकीर्तिंचापिभूतानिकथयिष्यंतितेऽव्ययाम् ॥
संभावितस्यचाकीर्तिर्मरणादतिरिच्यते ॥ १६ ॥ दययाश्चरणेत्यागंमन्यंतेबहवोजनाः ॥ येषांचत्वंबहुमतोभूत्वायास्य
सिलाघवम् ॥ १७ ॥ अवाच्यवादांश्चबहूनवदिष्यंतितवाहिताः ॥ निंदंतस्तवसामर्थ्यंततोदुःखतरंनुकिम् ॥ १८ ॥ हतो
वाप्राप्स्यसिस्वर्गंजित्वावाभोक्ष्यसेमहीम् ॥ तस्मादुत्तिष्ठकौंतेययुद्धंकुरुसमाहितः ॥ १९ ॥ सुखदुःखेसमेकृत्वालाभालाभौ
जयाजयौ ॥ ततोयुद्धाययुज्यस्वनैवंपापमवाप्स्यसि ॥ २० ॥ एषातेभिहितासांख्येबुद्धिर्योगेत्विमांशृणु ॥ बुद्ध्यायुक्तोयया
पार्थकर्मबंधंप्रहास्यसि ॥ २१ ॥ एषातेहिमयादत्ताबुद्धिस्तांत्वंसमाचर ॥ मयाकृतंमयाभुक्तंमावदस्वकदाचन ॥ २२ ॥ य
त्करोषियदश्नासियज्जुहोषिददासियत् ॥ यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणम् ॥ २३ ॥ कर्मण्येवाधिकारस्तेमाफलेषुक
दाचन ॥ माकर्मफलहेतुस्त्वंमातेसंगोस्त्वकर्मणि ॥ २४ ॥ योगस्थःकुरुकर्माणिसंगंत्यक्त्वाधनंजय ॥ सिध्यसिध्योःसमोभू
त्वासमत्वंयोगउच्यते ॥ २५ ॥ कर्मजंबुद्धियुक्ताहिफलंत्युक्त्वामनीषिणः ॥ फलबंधविनिर्मुक्ताःपदंगच्छंत्यनामयम् ॥ २६॥
दुःखेषुदुःखितोमाभूःसुखेमाभूःसहर्षितः ॥ सुखंदुःखंसमंकृत्वाकुरुकर्मनलिप्यसे ॥ २७ ॥ इतिविष्णुवचःश्रुत्वाह्यर्जुनःपरवी
रहा ॥ प्रेरितोवासुदेवेनविरक्तोयुद्धमाचरत् ॥ २८ ॥ दिनानांचाष्टकंराजन्भीष्मोयुद्धचद्रणांगणे ॥ पांडवानांबलंभूरिलील
याविनिपातितम् ॥ २९ ॥ भीष्मेणबलिनाकृष्णोविस्मयंसमपद्यत ॥ नवमेदिवसेप्राप्तेभीष्मःकृष्णमुवाचह ॥ ३० ॥ भी
ष्मउवाच ॥ कृष्णकृष्णमहावीरकालरूपनमोस्तुते ॥ तवाग्रेदासदासस्यभीष्मरंकस्यकाकथा ॥ ३१ ॥ निमेषार्धतयाविश्वं
सृजस्यवसिहंसिच ॥ तथापिवक्ष्येदेवेंद्रबालवत्पितरित्वयि ॥ ३२ ॥ अद्यार्जुनमहंजेष्येत्वत्समीपेऽस्त्रविद्यया ॥ इत्युक्त्वा

भारत | बाणवर्षेणववर्षचार्जुनंप्रति ॥ ३३ ॥ नारायणनरंरक्षमद्वाणाच्छादितंभृशम् ॥ एवमावेद्यगांगेयोपार्थंविव्याधपंचभिः ॥३४॥ | सार.
॥६६॥ | नाराचैर्वक्षसिचितंतद्वाणानच्छिनतत्त्रिधा ॥ पुनर्लाघवमासाद्यभालदेशेत्रिभिःशरैः ॥ ३५ ॥ विव्याधगर्जयन्भीष्मःपार्थं
वैकर्णमूलयोः ॥ द्वाभ्यांवैगृध्रपुंखाभ्यांबाणाभ्यांसोहनत्भृशम् ॥ ३६ ॥ एवंभीष्महतःपार्थोरथाद्भूमौपपातह ॥ नाराचानां | अ०६०
भी०पर्व ६ | सहस्रेणगर्जंतंप्राहरत्कपिम् ॥ ३७ ॥ तत्प्रहारहतःसोथध्वजस्याग्रात्पपाततह ॥ भीष्मोपरिसमागत्यकपींद्रोवाक्यमब्रवी
त ॥ ३८ ॥ अथभीष्ममहावीरवृद्धोपिसंयुगेबलिः ॥ दुःशासनशरंसोढामयाविचलतासखे ॥ ३९ ॥ अतःपरंमहावीरकथं
मांभिद्यसेशरैः ॥ इत्युक्त्वातरलःसोभूत्तडित्वत्कपिकुंजरः ॥ ४० ॥ ततोविचलितंवेगाद्विव्याधानंतपत्रिभिः ॥ सर्वगात्रेषु
संभिन्नःसंभ्रांतःकपिकुंजरः ॥ ४१ ॥ देशेदेशेभ्रमन्वीरःप्रापपर्वतनायकम् ॥ तमुत्पाट्यचरुद्रांशःकपिराजोरुषाज्वलन् ॥
॥ ४२ ॥ यावदागत्यभीष्मंवैहंतिवाणधरंवरम् ॥ तावत्तेनशरैर्घोरैर्हतश्चसगिरिःकपिः ॥ ४३ ॥ सागरस्यचवेलायांबाणघा
तात्पपातह ॥ पुनरुत्थायतरसागिरिमादायवानरः ॥ ४४ ॥ यावदायातितावत्सचकारकर्मदुष्करम् ॥ कृष्णंप्रोवाचसर्वेशं
भीष्मःकालांतकोपमः ॥ ४५ ॥ रक्षात्मानंहिसर्वेशघातयिष्येशरैर्दृढम् ॥ इत्युक्त्वालक्षनाराचैःकृष्णंविव्याधवक्षसि ॥४६॥
भालदेशंचतेनैवकर्णयोरष्टभिःशरैः ॥ यावद्विद्धस्तदाकृष्णःकालात्माक्रुद्धईश्वरः ॥ ४७ ॥ भालदेशंचसंप्राप्यचक्षुषीविवृते
नृप ॥ अधरोष्ठंचसंदश्यकृष्णोदद्भिरुषाहनत ॥ ४८ ॥ स्मृत्यागतंचचक्रंचयावद्धृत्वासृजत्यसौ ॥ तावद्भीष्मोपरिभृशंपपा | ॥६६॥
तपुष्पवृष्टयः ॥ ४९ ॥ कृष्णंप्रोवाचगांगेयोजितंनाथमयासदा ॥ यत्त्वयाकारिविश्वात्मन्प्रतिज्ञाविस्मृताकथम् ॥ ५० ॥
आयुधंनधरिष्येहमितिमेनिश्चितंवचः ॥ तद्वचःक्वगतंविष्णोमुंचछिंधेतचायुधम् ॥ ५१ ॥ त्वद्भक्त्याप्राप्तवीर्योहंतोषयेत्वा

130

नसंशयः ॥ इत्युक्त्वापंचभिर्बाणैरथंहत्वाबभंजह ॥ ५२ ॥ भीष्मःकृष्णंसमासाद्यपादयोःपतातिस्मयत् ॥ तवैवकृपयाविष्णोयत्कार्यंहिकृतंमया ॥ ५३ ॥ तेनैवकर्मणानाथप्रसन्नोभवमाधव ॥ एवंकृष्णश्चभीष्मश्चयावद्वदतिप्रीतितः ॥ ५४ ॥ हनूमानर्जुनौतावत्प्राप्तौचास्तंगतेरवौ ॥ ५५ ॥ इतिश्रीमहाभारतेभारतसारेभीष्मपर्वणिषष्टितमोऽध्यायः ॥ ६० ॥ ॥ एकषष्टितमेऽध्यायेशूराणांश्लाघिनांतया ॥ धनंजयेनभीष्मस्ययुद्धेपतनमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ दिनानांनवकंभीष्मोयुयुधेलीलयानृप ॥ तस्यांरात्र्यांगताःसर्वेपांडवाभीष्मसंनिधौ ॥ २ ॥ सेवार्थंप्रत्यहंयावत्तावत्कृष्णेनसंयुताः ॥ परस्परंहिसंमंत्र्यभीष्ममृत्युर्विचिंतितः ॥ ३ ॥ कृष्णमागत्यमालोक्यभीष्मोभक्तिपुरःसरम् ॥ पपातदंडवद्भूमौननामचपुनःपुनः ॥ ४ ॥ कृष्णेनवर्णितोवीरस्त्वत्समोनास्तिभूतले ॥ भक्तिंकृत्वानुसंतोष्यभीष्मंप्राहयुधिष्ठिरः ॥ ५ ॥ युधिष्ठिरउवाच ॥ पितामहमहाबाहोमहाबलपराक्रम ॥ इच्छामृत्युश्चभगवान्त्वत्समोनास्तिभूतले ॥ ६ ॥ हतंत्वयाबलंसर्वंयुष्माकंचपितामह ॥ वयंत्वच्छरणास्तातकथंजेष्यामकौरवान् ॥ ७ ॥ बालकान्भवतांनाथपितृहीनान्पितामह ॥ पितात्राताभवानेवनान्योऽस्तिरक्षकोमम ॥ ८ ॥ अहमेतान्हनिष्यामिइतितेनिश्चितंमनः ॥ तद्यावेदयमेस्वामिन्रणंत्यक्त्वाहिगम्यते ॥ ९ ॥ बालकास्तवधर्मात्मन्वयंचकौरवास्तथा ॥ प्रबलाःकौरवाभूरिबलिनांचसमाश्रयाः ॥ १० ॥ प्राप्तराज्याधुनादेवविद्यंतेतातपश्यताम् ॥ भवद्भिरपिसेव्यंतेतेभ्योनैवाधिकाभुवि ॥ ११ ॥ वयंहिनिर्बलाःस्वल्पानास्तिवीरसमाश्रयः ॥ राज्यभ्रष्टावयंदेवभवद्भिर्हन्यतेभृशम् ॥ १२ ॥ तातखड्गमुपादायछिंधिशीर्षाणिनःप्रभो ॥ नोचेत्तातजयोपायंशंसकृष्णमतंविदम् ॥ १३ ॥ अस्मद्ध्योनैवहीनोऽस्तित्रिषुलोकेषुपालकः ॥ तस्माद्धिगमनंयोग्यंमरणंवाविशेषतः ॥ १४ ॥ कृष्णधर्ममतेज्ञात्वाभीष्मःप्रोवाचधर्म

जम् ॥ भीष्मउवाच ॥ धर्मराजमहाबाहोत्वत्समोनास्तिभूतले ॥ १५ ॥ ब्रह्मादिवंद्यचरणःकृष्णोऽस्तियस्यपालकः ॥ इ
तितंनिश्चितंविद्धिहीनत्वात्त्वंचमावद ॥ १६ ॥ तस्मात्त्वंकृष्णनाथोऽसिपालयिष्यतिनिश्चितम् ॥ राज्यंत्वयिसमावेश्यदुष्टा
न्हत्वैवकेवलम् ॥ १७ ॥ धर्मंहिजगवांत्राताजयमेवास्तिनापरः॥ कृष्णेभक्त्यावदेत्किंचित्तच्छ्राव्यंधर्मनंदन ॥ १८ ॥ भव
तामधुनासत्यंदिनान्यष्टादशेबलम् ॥ मयिभीष्मेधनुर्हस्तेजयोनास्तिकदाचन ॥ १९ ॥ भवतांवचनादेनंरणंत्यक्तुंनपारये ॥
लोकानिंदांकरिष्यंतिरणत्यागेनमामकीम् ॥ २० ॥ अथदुर्योधनंत्यक्त्वायदित्वांचाश्रयेधुना ॥ तर्हिदेवावदिष्यंतिभयाच्छर
णमागतः ॥ २१ ॥ शास्त्रतोपिनिषेधोऽस्तिपक्षत्यागेहिक्षात्रिणाम् ॥ येनचांगीकृतंयच्चपालयंतिनरोत्तमाः ॥ २२ ॥ अद्या
पितल्लक्ष्महरःकालकूटंदुरासदम् ॥ धर्मेविनष्टेपापानांराज्यंदातुंनरोचते ॥ २३ ॥ तस्मात्सर्वात्मनाराजन्पतनंममरोचते ॥
नान्यथाहंगतिंपश्येजयायतवधर्मज ॥ २४ ॥ धर्ममेपतनोपायंशृणुष्वैकाग्रमानसः ॥ भयेस्तिभवतांताताशिखंडीपुंस्त्ववर्जि
तः ॥ २५ ॥ तंदृष्ट्वाविमुखोप्यासंनषंढंहिविलोकये ॥ धर्मउवाच ॥ कोराजास्तिशिखंडीवबलेपुंस्त्वविवर्जितः ॥ २६ ॥
यस्यकायापापरूपाभवतानाविलोक्यते ॥ भीष्मउवाच ॥ काशिराजसुताःपार्थसुंदराःसुभगास्त्रयः ॥ २७ ॥ स्वयंवरेमया
जित्वाभूपान्राजविशारदान् ॥ चित्रविचित्रवीर्याभ्यांह्यानीताभ्रातृहेतवे ॥ २८ ॥ बालयाकथितंमार्गेप्यनुशाल्वोमयावृतः ॥
सामुक्तातुमयाबालासंगताह्यनुशाल्वकम् ॥ २९ ॥ तेननांगीकृतासातुपुनर्मामाययौतुसा ॥ मयानिष्काशितासातुगतागंगा
तटेशुभे ॥ ३० ॥ वसिष्ठेनतदादृष्टारुदतीसाश्रुलोचना ॥ वसिष्ठउवाच ॥ कथंरुदसिहेबालेवनेऽस्मिन्कथमागता ॥३१॥
नसौख्यंचदिवारात्रौदीर्घश्वासान्हिमुंचसि ॥ किंदुःखमभवद्बालेऋषीणांसहपृच्छताम् ॥ केनत्वंपीडिताबालेकेनतेमानखंड

133

ना ॥ ३२ ॥ अबलोवाच ॥ काशिराजसुतास्वामिन्वयंचभगिनीत्रयम् ॥ गांगेयेनमहावीरेणाहंतेनपराजिता ॥ ३३ ॥
वयंकन्याःसुशीलाश्चगृहीत्वातुबलोत्कटे ॥ स्वयंवरेचभीष्मेणसर्वान्निर्जित्यभूमिपान् ॥ ३४ ॥ एकाचदत्ताचित्रायविचि
त्रायापरार्पिता ॥ अहंत्यक्तातुतेनैवयतोदैन्यंमयावृतम् ॥ ३५ ॥ सर्वसौख्यंतयालब्धंराज्यंपतिसमीहितम् ॥ पूर्वकर्मविपा
केनफलंप्राप्तंचदारुणम् ॥ ३६ ॥ पतिहीनाह्यहंविप्रकृताशंतनुसुनुना ॥ तेनदुःखेनविप्रेंद्रकाननेरुदनंकृतम् ॥ ३७ ॥ पति
हीनाचयानारीनभवेत्तुसुखावहा ॥ अकृतार्थंकृतंजन्ममयाख्यातंद्विजोत्तम ॥ ३८ ॥ वसिष्ठउवाच ॥ स्थिराभवमहाराज्ञी
दुःखंत्यक्त्वासुशोभने ॥ तर्हित्वंव्रजहेबालेजामदग्न्यंमहाबलम् ॥ ३९ ॥ जमदग्निसुतोरामःकृष्णःपरममंडितः ॥ पश्चाद्रामं
चसागत्वातदादुःखंनिवेदयत् ॥ ४० ॥ रोदमानामहाघोरंहाहाःकारंप्रमुंचति ॥ परशुरामउवाच ॥ किमर्थंरोदसेपुत्रीदुःखं
त्यक्त्वास्थिराभव ॥ ४१ ॥ तुष्टोऽहंचमहाराज्ञीवरंदत्त्वासुशोभनम् ॥ अंबोवाच ॥ गांगेयोऽपिमहावीरोदुर्जयोदेवदानवैः ॥
मांस्त्रीत्वेसगृहीत्वातुगृहभंगंसचाकरोत् ॥ ४२ ॥ त्वत्प्रसादेनभोरामगांगेयोमेपतिर्भवेत् ॥ अथवामरणयोग्यंगांगेयस्यापा
रिग्रहात् ॥ ४३ ॥ ऋषिरुवाच ॥ गम्यतांचस्वयंतत्रहस्तिनापुरमध्यतः ॥ विवाहश्चत्वयाकार्य्योनोचेतभीष्मंनिपातये ॥
॥ ४४ ॥ गतासासहसाबालाविप्रेणचवरेपुरे ॥ मयादृष्टःसुरश्रेष्ठोजमदग्निसुतःप्रभुः ॥ ४५ ॥ मयाचार्घ्यांजलिर्दत्त्वाह्यास
नंचनियोजितम् ॥ किमर्थंचद्विजश्रेष्ठकुतआगमनंकृतम् ॥ ४६ ॥ परशुरामउवाच ॥ गांगेयत्वंमहाप्राज्ञश्रृणुवाक्यंमयाहि
तम् ॥ श्रेष्ठांबिकानामबालाविवाहात्त्वंगृहाणभो ॥ ४७ ॥ चित्रगुप्तेत्वयादत्ताविचित्रेचमहानृप ॥ अथवाममसंग्रामंदेहि
त्वंशंतनोःसुत ॥ ४८ ॥ सुभगासुंदरीनारीरूपयुक्तायशस्विनी ॥ त्वयासहमहद्युद्धंकरोमिद्विजसत्तम ॥ ४९ ॥ तयावनेऽहं

विज्ञप्तोभीष्मोमांगृह्णातुह्यिति ॥ नोचेद्युद्धंकुरुत्वंहिमयासार्द्धकृतीभव ॥ ५० ॥ महाशस्त्रंमहारौद्रंसुरासुरभयंकरम् ॥ प्र
भातेविमलेतावदुदितेऽर्केनभःस्थले ॥ ५१ ॥ पश्चाद्युद्धंमयासार्द्धकृतंतेनैवदारुणम्॥ संहारास्त्रंमहारौद्रंज्वलंतंपावकप्रभम् ॥
॥ ५२ ॥ कंपिताश्चसुराःसर्वेकंपिताःसर्वपन्नगाः ॥ आगताश्चसुराःसर्वेजामदग्न्यसमीपतः ॥ ५३ ॥ आकाशेयोगिभिःसर्वै
ऋषिभिर्नारदादिभिः ॥ आनीतस्त्रिदशैःसर्वैर्जमदग्निर्महामुनिः ॥ ५४ ॥ तवपुत्रोमृतःशीघ्रंगांगेयस्यशरैर्हतः ॥ जमदग्नि
रुवाच ॥ अहोपुत्रमहाप्राज्ञशृणुवाक्यंमयाहितम् ॥ ५५ ॥ संग्रामश्चनकर्त्तव्योयदिश्रेष्यसिमद्वचः ॥ शापंदद्मिमहारौद्रंमृ
त्युशोकभयप्रदम् ॥ ५६ ॥ क्षणमेकेनसंग्रामेभार्गवोनिर्जितोमया ॥ परशुरामउवाच ॥ शृणुगांगेयमद्वाक्यंसावधानोऽधुना
भव ॥ ५७ ॥ हस्तेसंगृह्यसलिलंकुशमुष्टिपरिप्लुतम् ॥ यस्मिन्कालेत्वयायुद्धंकुरुक्षेत्रेमहाहवे ॥ ५८ ॥ पार्थस्यचरथेभूत्वा
ह्यंबिकासाचषंढिका ॥ नमुंचसिमहाबाणंकालेप्राप्तेभयंकरे ॥ ५९ ॥ जामदग्न्येनरामेणप्राप्तोऽहंमृत्युमावहम् ॥ तस्मिन्
कालेभवेन्मृत्युःपार्थबाणैर्नसंशयः ॥ ६० ॥ काशिराजसुताचेयंद्रुपदस्यचमंदिरे ॥ शिखंडिनंसमासाद्यतत्रमृत्युर्भविष्यति
॥ ६१ ॥ ततोऽहंतवसंत्रस्तोविपरीतमुपस्थितम् ॥ त्रोटितोहिमहादर्भःपृष्टच्छेदेनसंस्थितः ॥ ६२ ॥ विपरीतंभवेत्त्वयावतावि
द्धोबाणैःसुदारुणम् ॥ गुरुणादत्तशापंचवधार्थेमांधनंजय ॥ ६३ ॥ फाल्गुनात्तुतदामृत्युःकृष्णपक्षेचसप्तमी ॥ शीघ्रंगच्छमहा
वीरमपमृत्युप्रदायकः ॥ ६४ ॥ ततोवनांतरेगत्वाशापंदत्त्वासुदारुणम् ॥ उमावनेमहाप्राज्ञरुद्रस्यदर्शनंगता ॥ ६५ ॥ उ
मोवाच ॥ वरंवरयपुत्रित्वंकाशिराजसुतोत्तमे ॥ तन्मेत्वंचकुरुक्षेत्रेवरस्यसिद्धिमाप्स्यसि ॥ ६६ ॥ येनकेनाप्युपायेननाशये
जान्हवीसुतम् ॥ परजन्मनितन्मृत्युःशिखंडीदर्शनेनच ॥ ६७॥ फाल्गुनस्यरथेभूत्वाकुरुक्षेत्रेमहार्णवे ॥ द्रुपदस्यगृहेभूत्वाशि

खंडीचमहाबलः ॥ ६८ ॥ द्रुपदस्यमहासैन्येशिखंडीचतदाऽभवत् ॥ अंतिकायमहाराज्ञीममृत्युप्रदायिनी ॥ ६९ ॥ द्विजरा
जस्यशापाद्वैममृत्योश्चसूचकः ॥ ईदृशःसोऽस्तिनृपतिःशिखंडीद्रुपदात्मजः ॥ ७० ॥ युधिष्ठिरउवाच ॥ स्वामिन्ममास्ति
संदेहश्छेत्तुमर्हसिमानद ॥ द्रुपदस्यचपुत्रीवैशिखंडीत्वंकथंगता ॥ ७१ ॥ भीष्मउवाच ॥ राजासीतद्रुपदोनामदेशेपांचाल
केतदा ॥ तस्यसर्वाभवन्कन्यानैकोपितनयोऽभवत् ॥ ७२ ॥ कालेनकियताराजन्पुनस्तस्यसुताऽभवत् ॥ पश्चाद्विज्ञायते
नैवद्रुपदेनमहात्मना ॥ ७३ ॥ पुत्रपुत्रेतिशब्दस्तुसर्वत्रप्रकटीकृतः ॥ परराजभयात्तेनपुत्रेतिपरिकीर्त्तितः ॥ ७४ ॥ कालेन
कियताराजन्युत्रापुत्रीबभूवह ॥ शूरसेनेतिनामस्तुशूरोविक्रमवांस्तदा ॥ ७५ ॥ तत्रवंगाधिपेनैवतस्मैदत्ताचकन्यका ॥
तयासर्वस्तुवृत्तांतःपितुरग्रेनिवेदितः ॥ ७६ ॥ तस्याःपितावंगराजामनस्येवंविचारयत् ॥ जामातरंहिप्राघूर्णंकरोमीतिसमा
ह्वयम् ॥ जामात्राचिंतितंराजन्कथंयास्यामिकरोमिकिम् ॥ ७७ ॥ इतस्ततःसमालोक्यजामाताजातसंभ्रमः ॥ एकाकीहय
मारुह्यजगामगहनंवनम् ॥ तत्रैकंवटवृक्षंहिविलोक्यावतरत्तदा ॥ ७८ ॥ यक्षराज्ञाचदृष्टोऽसौविह्वलोऽसिकथंभवान् ॥
तदातेनचवृत्तांतस्तदग्रेचनिवेदितः ॥ ७९ ॥ तदायक्षेनतुष्टेनपुरुषत्वंसमर्पितम् ॥ दिनत्रयावधिंकृत्वातदाऽसौहृष्टमानसः ॥
॥ ८० ॥ पुनरश्वंसमारुह्यश्वशुरगृहमागतः ॥ दिनत्रयेणतस्यैकःपुत्रश्चसमजायत ॥ ८१ ॥ दिनत्रयगतादूर्द्ध्वंयक्षराजःस
मागतः ॥ कथितंयक्षराजेनपौरुषंमेसमर्पय ॥ ८२ ॥ पश्चाद्द्रुपदपुत्रेणदत्तवान्पौरुषंपुनः ॥ ८३ ॥ यक्षराज्ञातयोर्मध्येजातंयुद्धं
तुदारुणम् ॥ तदायक्षेनदेवेनशप्तोद्रुपदपुत्रकः ॥ ८४ ॥ षंढोभवदुराचारममवैकृतवान्छलम् ॥ कृतघ्नोसिमहामंदशिखंडित्वं
भवेत्तव ॥ ८५ ॥ तदाप्रभृतिराजाऽसौशिखंडीपुंस्त्ववर्जितः ॥ नरनारायणावैतौप्रतीतौपुरतोरथे ॥ ८६ ॥ संस्थाप्यजग्म

तुःपश्चाद्धिमुखेमयिचार्जुनः ॥ बाणैर्नानाविधैःशय्यांकरोतुधर्मनंदन ॥ ८७ ॥ इतिमेनिश्चितावाचोह्यनुष्ठेयानराधिप ॥ इ
तितस्यवचःश्रुत्वासंतुष्टाःपांडवाभृशम् ॥ प्रणम्यशिरसाभीष्मंजग्मुर्यत्रावमोचनम् ॥ ८८ ॥ तावत्सूर्योदयोजातःकृष्णः
प्राहशिखंडिनम् ॥ शिखंडिस्त्वंसमागच्छमदग्रेतिष्ठनिर्भयः ॥ ८९ ॥ गच्छामोहिवयंयुद्धेकार्यंभाविनचान्यथा ॥ एवमुक्त्वा
त्रयस्तत्रभीष्मंजग्मुर्भयान्विताः ॥ ९० ॥ तेनोक्तंसाधितंसर्वंविजयायहिकेवलम् ॥ एवंतुपातितोभीष्मःसंध्यायांदशमेदिने
॥ ९१ ॥ शरशय्यांगतेभीष्मेशिरोधःप्रविलंबितम् ॥ बाणाभ्यामर्जुनेनैवशिरस्त्राणंकृतंतदा ॥ ९२ ॥ एवंशय्यागतेभीष्मेय
मदूताःसमागताः ॥ तेदृष्ट्वाभीष्मदेवेनगृहीत्वाधनुरुत्थितः ॥ ९३ ॥ तदापलायितंतैस्तुत्राहित्राहीतिजल्पकैः ॥ अष्टमोयंव
सुर्वीरोगांगेयोहिमहाबलः ॥ ९४ ॥ कृष्णपक्षेतुसप्तम्यामर्जुनेननिपातितः ॥ भीष्मंहिपतितंदृष्ट्वारुरोदकुरुनंदनः ॥ ९५ ॥
इतिश्रीमहाभारतेभारतसारेभीष्मपर्वणिएकषष्टितमोऽध्यायः ॥६१॥ इतिभीष्मपर्वसमाप्तम् ॥ ॥ अथद्रोणपर्वोच्यते ॥ ॥
द्विषष्टितमअध्यायेचक्रव्यूहकथातथा ॥ अभिमन्योरधर्मेणविनाशश्चात्रकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ ततोदुर्योधनो
राजाद्रोणाचार्यस्यतत्रवै ॥ अभिषेकंचकाराथरणेप्येकादशेदिने ॥ २ ॥ प्रथमेऽन्हिततोद्रोणोजघानसुमहारथान् ॥ सुभटा
न्मिलितांस्तत्रविराटप्रमुखांस्तथा ॥ ३ ॥ द्वितीयेऽन्हिततोराजन्नुत्तरप्रमुखान्रणे ॥ भीमेनाभिहताःकेचित्कौरवाःसुभटारणे
॥ ४ ॥ एकदारात्रिसमयेद्रोणंप्राहसुयोधनः ॥ भोगुरोवीरधर्मात्मन्कौरवाणांचपालक ॥ ५ ॥ युद्ध्यमानेत्वयिसतिजयोनै ॥६१॥
वभवेन्मम ॥ तन्मेवाभाग्ययोगेनकर्त्तव्यंकिमतःपरम् ॥ ६ ॥ इतितस्यवचःश्रुत्वाद्रोणोवचनमब्रवीत ॥ द्रोणउवाच ॥ दु
र्योधनमहावीरशूरसत्वपरायण ॥ ७ ॥ प्रातःकालेमहाराजचक्रव्यूहंकरोम्यहम् ॥ तत्राहंपांडवान्जित्वादास्येतेनृपतेयशः

137

॥ ८ ॥ यदिचेदर्जुनोनस्यान्महाबलपराक्रमः ॥ विश्रुतस्त्रिषुलोकेषुदुर्जयस्त्रिदशैरपि ॥ ९ ॥ अर्जुनेविद्यमानेतुनजयेत्कोपि
पांडवान् ॥ चक्रव्यूहस्ययुद्धंतुजानीतोर्जुनकेशवौ ॥ १० ॥ यदिप्रतापितःसोसौयुद्धादन्यत्रचार्जुनः ॥ राज्ञांतुसप्तकंपार्थप्रा
र्थयित्वायदागतम् ॥ ११ ॥ युद्धायतौमहावीरौनिश्चितंतद्गमिष्यतः ॥ १२ ॥ द्रोणोदुर्योधनंसम्यगादिदेशाथसोनृपः ॥ प्र
श्रयावनतस्तत्रजगामरथसप्तकान् ॥ १३ ॥ आदिदेशाथवचनंयुद्धायार्जुनमन्यतः ॥ प्रार्थ्यतांसंगरेतौहिभवद्भिर्दूरगामिभिः
॥ १४ ॥ ततःप्रभातसमयेसमागत्यचसप्तकः ॥ युद्धायार्जुनमाहूयततोदूरंगताश्चते ॥ १५ ॥ कृष्णस्तत्रार्जुनंप्राहगच्छामो
यत्रसप्तकाः ॥ इदंहितंहिचास्माकंयद्द्रोणाद्भिन्नतांगताः ॥ १६ ॥ नोचेद्द्रोणःसहायस्तेह्यस्माकंघातकारकः ॥ समीचीनमिदं
जातंगच्छघातयसप्तकान् ॥ १७ ॥ इतिकृष्णस्यवचनंसमाकर्ण्यकपिध्वजः ॥ श्रीकृष्णसंयुतस्तत्रयत्रतेसप्तकाययुः ॥१८॥
एतस्मिन्नंतरेराजन्विराटदुहितासती ॥ उत्तरानयनार्थंवैगतावक्रूरसात्यकी ॥ १९ ॥ विराटभवनात्ताभ्यांनीयमानापतिंप्र
ति ॥ सुंदरीपतिनातत्रैकासौख्यंसमक्रीडयत् ॥ २० ॥ कामसौख्यंतथाप्राप्तंविष्णुगतःसुतोऽभवत् ॥ रणाद्दूरंगतेपार्थेकौर
वाहर्षनिर्भराः ॥ २१ ॥ द्रोणाचार्यस्तदातत्रचक्रव्यूहंव्यरच्यत ॥ दुःप्रवेशंमहाघोरंदुर्जयंचमहारथैः ॥ २२ ॥ द्रोणविप्र
स्तदातत्रपांडवानाव्हयत्स्मयन् ॥ ततोयुधिष्ठिरोराजास्वसैन्यपरिवारितः ॥ २३ ॥ आजगाममहावीरश्चक्रव्यूहंसुदारुण
म् ॥ तंदृष्ट्वाचिंतयायुक्तोभीमंप्राहयुधिष्ठिरः ॥ २४ ॥ युधिष्ठिरउवाच ॥ भीमसेनमहाबाहोचक्रव्यूहंकरोमिकिम् ॥ नैवा
स्ययुद्धंजानामिजानीतोर्जुनकेशवौ ॥ भवताद्यमयातत्रगंतव्यंनात्रसंशयः ॥ २५ ॥ नोचेदधर्मःक्षत्रस्यनायातियदिचार्जुनः ॥ २६ ॥
ब्रुवत्येवंचवैधर्मेभीमंमत्वातिमूढकम् ॥ अर्जुनस्यात्मजोवीरोह्यभिमन्युस्तमब्रवीत् ॥ २७ ॥ अभिमन्युरुवाच ॥ गर्भसंस्थे

नचमयाश्रुतंकृष्णमुखात्पुरा ॥ चक्रव्यूहस्ययुद्धंतुप्रवेशोनतुनिर्गमः ॥ २८ ॥ अतःप्रवेशंजानामिनिर्गमोनश्रुतोमया ॥ ततः
प्रहर्षितोराजाह्यभिमन्युमुवाचह ॥ २९ ॥ वयमेतेमहावीरबालत्वेवृद्धतांगताः ॥ पृष्ठलग्नागमिष्यामोनिर्गमंसाधितुंतव ॥
॥ ३० ॥ धर्मादीन्पृष्ठतःकृत्वाचक्रव्यूहंबिभेदह ॥ पांडवानांमहावैरीसिंधुराजोजयद्रथः ॥ ३१ ॥ चक्रव्यूहस्ययुद्धेतुअ
भिमन्युर्महाबलः ॥ निःसृतोनिर्भयोवीरःकुंतींप्रणमितुंगतः ॥ ३२ ॥ अभिमन्युरुवाच ॥ अनुज्ञांदेहिमेमातर्योद्धुंयामिमहा
रणे ॥ तदाकुंत्यातुरक्षायांबद्धोवैतुंतुदोरकः ॥ ३३ ॥ यावत्तिष्ठतितेपाणौतावत्तेकुशलंसुत ॥ पश्चात्तुनिःसृतोमार्गेजयाशामा
नसेधृता ॥ ३४ ॥ तदाकृष्णेनवीरेणदृष्टोहस्तेचदोरकः ॥ किमिदंकथयत्वंमेकिमनेनभविष्यति ॥ ३५ ॥ तेनोक्तंतुतदाकृ
ष्णेकुंत्यारक्षाकृतामम ॥ शिरःकंपायितंतेनकिमिदंवीररक्षणम् ॥ ३६ ॥ रक्षतेशूरतानित्यंरक्षतेस्वपराक्रमः ॥ इतितस्यवचः
श्रुत्वासंच्छिद्यदोरकंगतः ॥ ३७ ॥ मार्गेसमागतातत्रउत्तराचविराटजा ॥ कोऽयंवीरःसमायातितंदृष्ट्वाकथितंतया ॥ ३८ ॥
लोकैरुक्तंप्रयात्येषस्तवभर्त्ताविराटजे ॥ उत्तरोवाच ॥ अहोकृष्णअहोकृष्णव्यलीकंमेकृतंमया ॥ ३९ ॥ इदृग्विधेनरूपेण
सगच्छतिकथंवद ॥ तेनापिसातदादृष्टासुरूपाचविराटजा ॥ ४० ॥ तेनेदंकथितंलोकामार्गेकेयंचदृश्यते ॥ तदालोकैरभिहितं
स्वप्रियांकिंनपश्यसि ॥ ४१ ॥ तदानिश्वास्यतेनोक्तंओकृष्णकिंकृतंमयि ॥ ममाग्रेकथितंकृष्णविषकन्याकुरूपिणी ॥ ४२ ॥
एवमुक्त्वातुतेनैवततोऽपश्यत्परस्परम् ॥ तदृष्ट्वासोत्तरादेवीसगर्भासाभवत्तदा ॥ ४३ ॥ दृष्टिपुत्रंसमुत्पाद्यसोभिमन्युर्गतोर
णे ॥ तस्यांपरीक्षित्संजातोविष्णुरातःसउच्यते ॥ ४४ ॥ विष्णुनारक्षितोगर्भेस्मृतस्तस्मात्परीक्षितः ॥ विष्णुभक्तिरतोनि
त्यंसत्यधर्मपरायणः ॥ ४५ ॥ इतिपुत्रंसमुत्पाद्यनिःसृतोद्रोणसंगरे ॥ अभिमन्युर्महावीरोगर्जयन्प्रबलोरणे ॥ ४६ ॥ ना

139

नाशस्त्रगणैःशत्रून्हत्वाग्रेप्रचचालह ॥ पुनःशत्रून्हिसंभिद्य चक्रव्यूहंबिभेदह ॥ ४७ ॥ सोऽपिवीरोमहासैन्यैर्वृतस्तंयुयुधे
मुखे ॥ द्रोणवर्मादयःसर्वेदृष्ट्वातंहिजयद्रथम् ॥ ४८ ॥ भीतास्तेतपसःसिद्धिंज्ञात्वास्यरुद्रतःस्फुटम् ॥ तेनपूर्वंतपस्तप्तंपराभू
तेनपांडवैः ॥ ४९ ॥ ईश्वरस्तपसातुष्टस्तदातस्मैवरंददौ ॥ ततोऽसौप्रणिपत्याहजेष्यामिपांडवान्रणे ॥ ५० ॥ इतितस्य
वचःश्रुत्वाशंकरःप्रत्युवाचह ॥ अर्जुनेनविनासर्वांञ्जेष्यसिपांडवान्रणे ॥ ५१ ॥ पातयिष्यंतियेभूमौशिरस्तवजयद्रथ ॥
प्रथमंतस्यशीर्षंवैपातिष्यतिनसंशयः ॥ ५२ ॥ शंकरस्यवराद्भीताभीमाद्यानययुःपुरः ॥ अभिमन्युस्तदावीरएकाकीप्रविवेशह
॥ ५३ ॥ पातयन्सकलान्योधान्सुभटाश्वमहाबलान् ॥ वाजिनोवाजिपांश्चैवगजान्यंतॄन्सहस्रधा ॥ ५४ ॥ चक्रव्यूह
प्रविष्टोऽसौनिर्मथ्नातियदाबलात् ॥ जयद्रथमुखास्तेवैरथिनस्तंहिबालकम् ॥ ५५ ॥ दिङ्मूढंविव्हलंतस्मिन्नभ्यवर्षन्ननेक
धा ॥ इतितान्भिद्यतेवीरान्शस्त्रैर्नानाविधैरपि ॥ ५६ ॥ बिभेदमन्युनायुक्तःसव्यसाचीसुतोबली ॥ शस्त्राभिघातकंमूढाज
यद्रथपुरःसराः ॥ ५७ ॥ चक्रुःपलायनंसर्वेएकेनाभिहताबलात् ॥ भिन्नेषुतेषुसर्वेषुयावन्ननिर्गतेततः ॥ ५८ ॥ पश्चादाग
त्यखड्गेनशिरश्चिच्छेदपापधीः ॥ जयद्रथोहिदुष्टात्माह्यभिमन्योश्छलात्तदा ॥ ५९ ॥ छिन्नेपिमस्तकेवीरःशस्त्रास्त्रैस्तमनेक
धा ॥ विव्याधनपपाताऽसौवीरधैर्यसमन्वितः ॥ ६० ॥ एकीभूतास्तदासर्वेतस्यपातायविव्यधुः ॥ दूरतोविविधैर्बाणैःपात
यामासुरर्भकम् ॥ ६१ ॥ तस्मिन्निपतितेभूमौकौरवाहर्षनिर्भराः ॥ रुदंतिपांडवाःसर्वेहाहाःकारपराश्चते ॥ ६२ ॥ अक्षत्रै
स्तुहतोबालःपापिष्ठैरजितात्मभिः ॥ मातुलोयस्यगोविंदःपितायस्यधनंजयः ॥ ६३ ॥ अभिमन्युर्वधंप्राप्तःकालोहिदुरतिक्र
मः ॥ अधर्मत्वात्तदासूर्योययौचास्ताचलंप्रति ॥ ६४ ॥ इतिश्रीमहाभारतेभारतसारेद्रोणपर्वणिअभिमन्युवधोनामद्विषष्टि

तमोऽध्यायः ॥ ६२ ॥ ॥ त्रिषष्टितमअध्यायेप्रतिज्ञाफाल्गुनस्यच ॥ जयद्रथस्यपंचत्वमधर्मादेवकथ्यते ॥ १ ॥ जन्मेजयउ
वाच ॥ अभिमन्यौवधंप्राप्तेकिमकार्षीद्धनंजयः ॥ तदाचक्ष्वद्विजश्रेष्ठशोकेनोद्विग्नमानसः ॥ २ ॥ वैशंपायनउवाच ॥ अर्जु
नोऽपियदाराजन्जित्वासंसप्तकान्रणे ॥ आययुर्देवदत्तंचघोषयञ्जयमावहत् ॥ ३ ॥ आगच्छतियदातत्रददर्शविस्मिता
ञ्जनान् ॥ तदाजगादराजानंधर्मंविस्मयसंयुतम् ॥ ४ ॥ दुःखार्तंहिसमालोक्यपार्थोवचनमब्रवीत् ॥ अर्जुनउवाच ॥ म
यिजीवतिधर्मात्मन्कथंशोचसिनिष्फलम् ॥ ५ ॥ वासुदेवप्रसादेनज्येष्येऽहंकौरवान्रणे ॥ संदेहोनैवकर्तव्यःकिमत्रशोकक
र्षिताः ॥ ६ ॥ तत्रस्थायेजनाःसर्वेफाल्गुनार्थंसदुःखिताः ॥ पार्थेप्येवंवदत्यत्रपांडवान्शोककर्षितान् ॥ ७ ॥ जगदुस्तेऽर्जु
नंसर्वेमापृच्छशोककारणम् ॥ अभिमन्युवधेपार्थकारणंचजयद्रथः ॥ ८ ॥ तच्छ्रुत्वाचार्जुनःक्रुद्धःप्रतिज्ञामकरोत्तदा ॥ शीत
भीताश्चयेविप्रारणभीताश्चक्षत्रियाः ॥ ९ ॥ तेनपापेनलिप्स्यामियन्नहन्यांजयद्रथम् ॥ अज्ञानीचनरःकामीकामयेच्चरजस्व
लाम् ॥ कूटसाक्षीकृतघ्नश्चयेचविश्वासघातकाः ॥ १० ॥ तेषांपापेनलिप्स्यामियन्नहन्यांजयद्रथम् ॥ जयद्रथंहनिष्यामिचा
स्तादर्वाक्रवेरहम् ॥ ११ ॥ नोचेदग्निंप्रवेक्ष्यामिनिश्चितंहिवचोमम ॥ अर्जुनस्यप्रतिज्ञांहिश्रुत्वाद्रोणंसुयोधनः ॥ १२ ॥
प्राहहर्षसमाविष्टःप्रहसन्पापधीस्तदा ॥ दुर्योधनउवाच ॥ अर्जुनेनप्रतिज्ञातंजयद्रथवधंप्रति ॥ १३ ॥ गुरोद्रोणमहावीरर
क्षत्वंहिजयद्रथम् ॥ तस्मिन्रक्षतितेतातपार्थनाशोभविष्यति ॥ १४ ॥ तस्मिन्नष्टेहितत्सैन्यंपांडवानांगमिष्यति ॥ युद्धंवि
नाजयोयुद्धेह्यस्माकंलीलयाविभो ॥ १५ ॥ राज्ञोवाक्यंसमाकर्ण्यद्रोणस्तंहिररक्षह ॥ जयथद्रंसमाहूयद्रोणोवचनमब्रवीत्
॥ १६ ॥ मद्रराजमहाबाहोतवरक्षांकरोम्यहम् ॥ गोपयात्मानमत्रैवरणभूमौयथेच्छया ॥ १७ ॥ रविरस्ताचलंयावत्तयास्य

तेतावदेवहि ॥ रक्षामिनात्रसंदेहोयुद्धंकृत्वाहितेनवै ॥ १८ ॥ किंबहूक्तेनमेवाद्ययदिकृष्णछलंनचेत् ॥ दुर्ज्ञेयंहिछलंतस्य
ब्रह्मादीनांतुकिंमम ॥ १९ ॥ इत्युक्तेहिगुरौतत्रकुंजरंप्रेक्ष्यसंभ्रमात् ॥ मत्तस्थूलंसमासाद्यतत्पृष्ठेद्वारसंनिभे ॥ २० ॥ विवे
शजीवरक्षार्थंमद्रराजोभयातुरः ॥ द्रोणोऽपिचाऽर्जुनंकृष्णंयुद्धार्थंहिसमानयत् ॥ २१ ॥ कृष्णःशोकसमायुक्तमर्जुनंप्राहज
ल्पताम् ॥ द्रोणःसमाव्हयत्पश्चात्युद्धायपार्थमेवहि ॥ २२ ॥ इतितस्यवचःश्रुत्वापार्थोद्रोणंजगामह ॥ तावतद्रोणोमहावी
रोनरव्यूहमथाकरोत् ॥ २३ ॥ दुर्भेद्यंहिमहावीरैर्महाबलपराक्रमैः ॥ नरव्यूहमुखस्थोऽसौयुयुधेबाणकोविदः ॥ २४ ॥ अ
र्जुनोऽपिमहावीरोबाणसंघैरनेकधा ॥ बिभेदहिनरव्यूहंतोषयन्द्रोणमाहवे ॥२५॥ द्रोणंहियुध्यतातेनपार्थेनामिततेजसा॥ ग
जाश्वादिरथास्तत्रपातितानेकपत्तयः ॥ २६॥ वैशंपायनउवाच ॥ एतस्मिन्समयेराजन्भगदत्तस्यपौरुषम् ॥ भीमेनयुध्यता
तस्यतच्छृणुष्वमहामते ॥ २७ ॥ कुंजरेचसमारूढोभगदत्तःप्रतापवान् ॥ अभिमानीमहावीरोयुद्धायभीममाव्हयत् ॥
॥ २८ ॥ जगामारुह्यभीमोऽपिजगामक्रोधसंयुतः ॥ उभावपिमहावीरौयुयुधातेपरस्परम् ॥ २९ ॥ भगदत्तेनवीरेणभीमसे
नस्यकुंजरः ॥ गदयाताडितोमूर्ध्निरणाद्भूमौपपातह ॥ ३० ॥ भीमोऽपिगदयागुर्व्याजघानतस्यकुंजरम् ॥ मृतंचाप्यमृतंज्ञा
त्वाकुंजरःपुनराहतः ॥ ३१ ॥ पुनराहन्यमानोऽपिनपपातकरीक्षितौ ॥ भगदत्तेनवीरेणजंघाभ्यामाधृतःकरी ॥ ३२ ॥ मृते
नकरिणातत्रभगदत्तोमहाबलः ॥ युयुधेभीमसेनेनतद्वाक्यंनाकरोत्करी ॥ ३३ ॥ निर्द्धनस्यप्रभोर्वाक्यंनकरोतिहिसेवकः ॥
नकरोतितथाहस्तीदरिद्रस्येवयोषितः ॥ ३४ ॥ सकोपेनचभीमोऽपिकरेधृत्वामतंगजम् ॥ भगदत्तेनसंयुक्तंपोथयामासभूत
ले ॥ ३५ ॥ रेणुत्वंप्राप्तवांस्तत्रभगदत्तस्तथाकरी ॥ कोपाविष्टःफाल्गुनोऽपिचक्रेद्रोणेनसंयुतम् ॥ ३६ ॥ पार्थस्ययुध्यतः

कृष्णेप्युपायंकृतवांस्तदा ॥ दिनशेषंसमालोक्यघटिकैकंसमाचरत् ॥ ३७ ॥ सूर्यमाछादयामासचक्रेणहिक्षपाकृता ॥ संध्या
कालंसमालोक्यवीरौतौविरतौनृप ॥३८॥ जयद्रथवधार्थंहिपार्थोदुर्योधनस्यहि॥ बलमाविश्यवेगेनपश्यतिस्मजयद्रथम् ॥३९॥
नापश्यत्तंतदापार्थोद्रोणःशिष्यमुवाचह ॥ द्रोणउवाच ॥ अर्जुनत्वंमहावीरसत्यवाक्सत्यसंगरः ॥ ४० ॥ किंधावसिवृथा
मंदरवेरस्तंनपश्यसि ॥ वृथालोकोभवेन्नूनंवचोभंगान्नसंशयः ॥४१॥ तस्मात्सर्वप्रयत्नेनवचोरक्ष्यंसदाबुधैः ॥ गुरुवाक्यंसमा
कर्ण्यनिवृत्तस्तुधनंजयः ॥ ४२ ॥ स्वसैन्यंहिसमाविश्यकाष्ठानांराशिमातनोत् ॥ वन्हिमुक्त्वातुतत्रैवयावद्विशतिचार्जुनः ॥
॥ ४३ ॥ तावद्धिपांडवाःसर्वेदुःखार्तान्यपतन्भुवि ॥ तावत्कृष्णःसमासाद्यपार्थंप्रोवाचपश्यताम् ॥ ४४ ॥ सर्वेषांकौरवाणां
हिछलयन्नीदृशंवचः ॥ श्रीकृष्णउवाच ॥ पार्थपार्थमहाबुद्धेनापराधोऽस्तितावकः ॥ ४५ ॥ उत्पन्नेहिसतांनाशेबुद्धिस्त्य
क्त्वाहिगच्छति ॥ द्रोणेवृद्धवतिवीरेशेगुरौविप्रेभवादृशः ॥ ४६ ॥ कोमूर्खोहिप्रतिज्ञांवैकरोतिजयकांक्षया ॥ विलंबोनैवकर्त्त
व्योजातकार्यस्यसाधने ॥ ४७ ॥ एहिबंधोसमाश्लेषंदेहिमेवन्हिमाविश ॥ अनुरूपंकदामित्रंनप्राप्स्येहंभवादृशम् ॥ ४८ ॥
इत्युक्त्वाश्रामयन्सर्वान्कौरवान्द्रष्टुमागतान् ॥ कृष्णोप्यावेदयत्कर्णेसर्वंपार्थंहिसस्वजे ॥ ४९ ॥ कुरुप्रदक्षिणावन्हिमात्म
क्षेमायसत्वरम् ॥ इत्यावेदितमंत्रोऽसौपार्थःसंतुष्टमानसः ॥ ५० ॥ त्रिःपरिक्रमतेयावदाविर्भूतोजयद्रथः ॥ पार्थःसंप्रकटीभू
तमालोक्यवध्यतांगतम् ॥ ५१ ॥ कृष्णंपश्यतियावत्सतावच्चक्रंसमावृणोत् ॥ विष्णुनासंवृतेचक्रेसूर्यमालोक्यसत्वरम् ॥ ॥७२॥
॥ ५२ ॥ जयद्रथशिरोऽवृश्चदर्द्धचंद्रेणसोऽर्जुनः ॥ छिन्नंशिरःसमुत्पत्यगतंयत्रचतत्पिता ॥५३॥ संध्याजलांजलिंकुर्वन्चक्षु
षीचनिमीलयन् ॥ जयद्रथशिरस्तत्रपतितंतत्करेतदा ॥ ५४ ॥ तत्पित्राविस्मितेनैतत्प्रक्षिप्तंधरणीतले ॥ पितुरेवशिरस्तेनसा

142

कंभूमौपपातह ॥ ५५ ॥ एवंवैकृष्णपार्थाभ्यांमद्रराजोनिपातितः ॥ पांडवाहर्षितास्तत्रकौरवाःशोकनिर्भराः ॥ ५६ ॥
इतिश्रीमहाभारतेभारतसारेद्रोणपर्वणिजयद्रथवधोनामत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ चतुःषष्टितमेध्यायेकुरुसैन्यविमर्द
नम् ॥ घटोत्कचेनवीरेणवधस्तस्यापिकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ एतस्मिन्समयेकृष्णोघटोत्कचमुवाचह ॥ कृष्णउ
वाच ॥ घटोत्कचमहावीरकन्यावत्किंस्थितोगृहे ॥ २ ॥ युद्धंकर्त्तुंनजानासियेनत्वंनात्रयुद्ध्यसे ॥ इतितस्यवचःश्रुत्वाप्रोवा
चगर्जयन्हरिम् ॥ ३ ॥ घटोत्कचउवाच ॥ कृष्णकृष्णाप्रमेयात्मन्दासदासोऽस्मितावकः ॥ निशायांमेबलंनाथनदिवायु
द्ध्यतेमया ॥ ४ ॥ हिडिंबायाःसुतश्चाहंराक्षसत्वाज्जनार्दन ॥ तवाज्ञयाहिविश्वात्मन्क्षणेनैकेनकौरवान् ॥ ५ ॥ हनिष्येपर्व
ताघातैरदृष्टःसन्निवेशय ॥ इतितस्यवचःश्रुत्वाकृष्णःप्रोवाचभीमजम् ॥ ६ ॥ कुरुयुद्धंमहावीरकौरवांस्त्वंहिनाशय ॥ रात्रा
वेवनदोषस्तेराक्षसत्वान्ममाज्ञया ॥ ७ ॥ इतिकृष्णवचोमूर्ध्निकृत्वाभीमस्तुतोबली ॥ खमुत्पपातसंतन्वन्मायांकौरवमोहि
नीम् ॥ ८ ॥ जगर्ज्जजलदास्तत्रचांधकारोमहानभूत् ॥ कौरवाणांदलेकश्चित्किंचापिनददर्शह ॥ ९ ॥ पाषाणाःपर्वताकारा
ववृषुर्निबिडाभृशम् ॥ कौरवाःपतिताःसर्वेहस्त्यश्वरथपत्तयः ॥ १० ॥ केचिच्चूर्णीकृतास्तत्रभग्नशीर्षाश्चकेचन ॥ नासापादक
रादीनांभंगोहिसुमहानभूत् ॥ ११ ॥ भीतास्तेसैनिकाराजन्पाषाणैर्भंगमापिताः ॥ कर्णसुयोधनौजग्मुस्त्राहित्राहीतिचावदत
॥ १२ ॥ अदृश्यरूपःखेकोऽपिजघानैवंहिकौरवान् ॥ वीरायेकौरवायेवैह्याकाशंबाणजालकैः ॥ १३ ॥ पूरयामासुर्विफल
स्तेषांजातःपराक्रमः ॥ स्वानांविह्वलतांदृष्ट्वाकर्णंप्राहसुयोधनः ॥ १४ ॥ दुर्योधनउवाच ॥ कर्णवीरमहाबाहोकोहंतिमाम
कंबलम् ॥ नजानेऽहंकथंहन्मिदृष्टिगोचरतांविना ॥ १५ ॥ कर्णउवाच ॥ राजन्घटोत्कचोवीरोहंतिवैतावकंबलम् ॥ अदृ

श्योराक्षसींमायांविस्तार्ययुद्ध्यतेभृशम् ॥ १६ ॥ दुर्योधनउवाच ॥ घटोत्कचंनपश्यामियेनैवंव्याकुलीकृताः ॥ हिडिंबातन
यादस्माद्रक्षकर्णहतावयम् ॥ १७ ॥ कर्णउवाच ॥ सूर्याल्लब्धामयाराजन्शक्तिःसापंचघातिनी ॥ पूर्वंनीताचसंप्रार्थ्यकुंत्या
मात्राबलाद्विसा ॥ १८ ॥ परीक्षार्थेवयल्लब्धंचैतत्सूर्यात्ज्वलन्मया ॥ उपघातेयदाकुंत्यानीतावैपंचसायकाः ॥ १९ ॥ अ
र्जुनायगृहीतामेममपार्श्वेनसंतिवै ॥ पश्चाद्विद्विजरूपेणशक्रेणप्रार्थ्यमत्तनोः ॥ २० ॥ नीतंहिकवचंमत्तःसाधुत्वंवीक्ष्यमाम
कम् ॥ प्रसन्नोऽभूत्तदाचेंद्रोऽप्येकवीरस्यघातिनीम् ॥ २१ ॥ शक्तिंमह्यंददौराजन्साप्यास्तेममसन्निधौ ॥ अर्जुनस्यवधार्था
यधृतासाकेवलंमया ॥ २२ ॥ दुर्योधनउवाच ॥ यदाहंजीवितंलप्स्येहनिष्यामोधनंजयम् ॥ शक्तिंमुंचमहावीरनोचेत्सर्वे
हतावयम् ॥ २३ ॥ तावत्कर्णेनसाशक्तिर्मुक्ताज्वालातिभीषणा ॥ अग्रतोधूमसंश्रेणीपृष्ठतोप्यग्निरुल्बणः ॥ २४ ॥ विद्युल्ले
खेवसाशक्तिर्भीमात्मजमथासदत् ॥ घटोत्कचोमहावीरोमुखंत्यक्त्वानभस्थले ॥ २५ ॥ स्थित्वानानाविधैर्जघ्नेपाषाणैःशक्ति
मद्भुताम् ॥ पाषाणाभिर्हतासातुपरिवृत्याभितोमुखम् ॥ २६ ॥ आजगामतदावीरःपर्वतैराहनद्रुषा ॥ पर्वतांस्तांश्चसंचूर्ण्य
घटोत्कचमवापह ॥ २७ ॥ तांतुप्राप्तांसमाज्ञायशक्तिंनाशायचात्मनः ॥ तदानानाविधैरस्त्रैराहनज्जीवितेच्छया ॥ २८ ॥
इतस्ततोभ्रमन्शीघ्रंतयाशक्त्यानुघातितः ॥ हृदिसस्मारगोविंदंनारायणमभीतिदम् ॥ २९ ॥ शक्त्याविद्धोऽपतद्भूमौदेहंकृ
त्वातिविस्तरम् ॥ चूर्णयामाससततंपातितंकौरवंबलम् ॥ ३० ॥ तस्मिन्निपतितेभूमौमहोग्रेगतजीविते ॥ वक्षसिस्फोटमाप
न्नाःकेचिन्नष्टामहाहवे ॥ ३१ ॥ केचित्पलायनंचक्रुःकेचिद्धाहेतिचुक्रुशुः ॥ पांडवाःकौरवाःसर्वेहर्षशोकयुताअभवन् ॥ ३२ ॥
हयानांदशलक्षंतुयोधानामयुतंशतम् ॥ रथानांलक्षमेकंतुपातितंभीमसूनुना ॥ ३३ ॥ इतिश्रीमहाभारतेभारतसारेद्रोणपर्व

णिघटोत्कचवधोनामचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ पंचषष्टितमेध्यायेभीष्मंभीमपराक्रमम् ॥ द्रौपदीवस्त्रकर्षस्यपंचत्वमि
हकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ ततःप्रभातसमयेचतुर्थेऽन्हिसमाययौ ॥ द्रोणस्तुसुभटैःसार्द्धंयुद्धायकृतनिश्चयः ॥
॥ २ ॥ युद्धंप्रवर्ततेतत्रद्रोणपार्थविनिर्मितम् ॥ अर्जुनंपरिविव्याधसैन्यंजघ्नेगुरुस्तदा ॥ ३ ॥ पार्थोलाघवमाश्रित्यद्रोणंह
त्वाहनद्बलम् ॥ जीयमानांस्ततोयुद्धेभीमोजघ्नेमहाबलान् ॥ ४ ॥ गदयाताडिताःकेचित्केचिन्मुष्टिभिराहताः ॥ पातिताश्च
रणाघातैरुत्पाद्यपोथिताभुवि ॥ ५ ॥ वृकोदरस्यक्रुद्धस्यरूपंशतगुणंभवत् ॥ भीमंदृष्ट्वामहाक्रुद्धंराजपुत्रामहाबलाः ॥ ६ ॥
नानाप्रहरणैर्जघ्नुर्हस्त्यश्वरथसंस्थिताः ॥ ७ ॥ तेषांसमूहमालक्ष्ययुद्धयंतंचमहाबलः ॥ भीमःसर्वात्मनातंतुनानाहेतिभि
राहनत् ॥ ८ ॥ तस्मिन्युद्धेतुभीमेनधृतराष्ट्रसुतास्तदा ॥ ९ ॥ पातिताःपरमक्रोधाद्दुःशासनमवापसः ॥ युयुधातेमहावी
रौभीमदुःशासनावुभौ ॥ १० ॥ क्रमाज्जघ्नेहिभीमस्तंगदयाऽसौवृकोदरम् ॥ गदाघातंहिभीमस्यगदयाजगृहेबली ॥ ११ ॥
दुःशासनगदाघातंभीमोदेहेदधारह ॥ भीमसेनगदाघातंदेहेदुःशासनोऽदधत् ॥ १२ ॥ तदाभीमेनक्रुद्धेनगदयाताडितागदा
दा ॥ दुःशासनस्यवीरस्यरेणुत्वंप्रापतत्क्षणात ॥ १३ ॥ दुःशासनंभग्नगदंदृष्ट्वाभीमोऽक्षिपद्गदाम् ॥ स्वकीयंबाहुनाबाहुमा
स्फोट्यव्यनदद्बली ॥ १४ ॥ दुःशासनःसमास्फोट्यसिंहवद्व्यनदद्बली ॥ बाहुयुद्धेनमिलितौभीमदुःशासनावुभौ ॥ १५ ॥
प्रहारैरतिगर्जंतौघातयंतौपरस्परम् ॥ मुष्टिभिश्चरणाघातैर्गुडपैर्दद्भिरेवच ॥ १६ ॥ आरक्तलोचनौजातौभृकुटीभिर्भयंकरौ ॥
निश्वासोश्वासितौवीरौपरस्परजयैषिणौ ॥ १७ ॥ एवंयुद्धमभूद्घोरंसर्वलोकभयंकरम् ॥ तयोस्तत्रमहावीरोभीमोदुःशासनं
तदा ॥ १८ ॥ भूतलेपातयामासछलमाश्रित्यलाघवात् ॥ हृदयेतस्यपादंवैदत्वाप्युच्चैर्जगर्जसः ॥ १९ ॥ बाहुनाबाहुमा

स्फोव्यसस्मारस्वपरंनभः ॥ भीमोवीररसोन्मत्तःकौरवान्प्रत्यभाषत ॥ २० ॥ रेभटाःकौरवाःसर्वेद्रोणकर्णसुयोधनाः ॥ रक्ष
त्वेनंमयाग्रस्तंयदिवीरास्तुभूतले ॥ २१ ॥ इत्युक्त्वातांस्तदाभीमःपांडवान्प्रत्यभाषत ॥ भोभोपार्थमहावीरकृष्णत्वमपि
वीर्यवान् ॥ २२ ॥ आर्त्तप्राणपरायेवैश्शृण्वंतुममभाषितम् ॥ दुःशासनंमोचयंतुयेवीराश्चसमागताः । २३ ॥ एतद्वाक्यंस
माकर्ण्यपार्थःक्रुद्धोऽब्रवीदिदम् ॥ अर्जुनउवाच ॥ रेरेवृकोदरत्वंहिवृथागर्जसिमूढवत् ॥ २४ ॥ पादादधोमुखंधृत्वागृध्रवत्रा
शकांक्षया ॥ स्थिरीभूयसहस्रैकंबाणंगांडीवसंभवम् ॥ २५ ॥ एवंपार्थोऽवदंस्तत्रबाणंधनुषिसंदधे ॥ कर्षधनुःसकृष्णेनमू
ढतिष्ठेतिवारितः ॥ २६ ॥ तत्करात्करघातेनधनुर्बाणौनिपातितौ ॥ तंनिषिद्धयतदाकृष्णोभीमंप्रोवाचसंस्तुवन् ॥ २७ ॥
श्रीकृष्णउवाच ॥ भोभोभीममहावीरत्वत्समोनास्तिभूतले ॥ युद्धेगर्जतिद्रोणोऽस्मिन्कथंगर्जस्यभीतवत् ॥ २८ ॥ हत्वे
हत्वरयापापंद्रौपदीवस्त्रकर्षकम् ॥ त्वयाऽकारियथापूर्वंप्रतिज्ञांतांहिपालय ॥ २९ ॥ कृष्णवाक्यंसमाकर्ण्यभीमोवचनमब्रवी
त् ॥ भीमउवाच ॥ भोपापाधमदुष्टात्मन्द्रौपदीवस्त्रकर्षक ॥ ३० ॥ ब्रूहिदुःशासनत्वंहियेनहस्तेनद्रौपदी ॥ कर्षिताचसभां
नीतातंहस्तंमेप्रदर्शय ॥ ३१ ॥ दुःशासनउवाच ॥ अयंकरःकराग्रेणद्रौपदीवस्त्रकर्षणः ॥ गोसहस्रप्रदाताचक्षत्रियांतकरः
करः ॥ ३२ ॥ यत्रयत्रहताःशूराःशत्रुभिःपरिवेष्टिताः ॥ अक्षयांल्लभतेलोकान्यदिक्लैब्यंनभाषते ॥ ३३ ॥ वैशंपायनउवा
च ॥ एवंहिवदतस्तस्यतदादुःशासनस्यच ॥ भीमेनोत्पादितोबाहुर्द्रौपदीवस्त्रकर्षणः ॥ ३४ ॥ दुःशासनेनवीरेणपतितेनत
लेभृशम् ॥ भीमस्तुताडितोनाभौसरोषंवाममुष्टिना ॥ ३५ ॥ तद्घातात्विव्हलःसोऽभूत्स्थितोमीलितलोचनः ॥ पुनरुन्मी
यनेत्रेवैवाममुत्पाटयत्करम् ॥ ३६ ॥ पुनस्तेनैववीरेणपादेनदक्षिणेनसः ॥ निहतोहृदयेगाढंपातितोधरणीतले ॥ ३७ ॥ भी

146

मसेनोमहावीरोप्युत्तस्थौपुनरेवसः ॥ हस्ताभ्यांपादयुगलंधृत्वासौचजगर्जह ॥ ३८ ॥ नानाप्रवदतस्तस्यशीर्षमुत्पाटयत्त
नोः ॥ तत्रत्यंरुधिरंपीत्वासंतुष्टोऽप्यवदत्श्वसन् ॥ ३९ ॥ अद्यमेदिवसोधन्यश्चाद्यसिद्धोमनोरथः ॥ ४० ॥ इतिश्रीमहा
भारतेभारतसारेद्रोणपर्वणिदुःशासनवधोनामपंचषष्टितमोऽध्यायः ॥ ६५ ॥ षट्षष्टितमअध्यायेद्रोणाचार्यस्यगौरवम् ॥
धर्मस्यबलनाशंचद्रोणादर्शनमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ भीमेननिहतंवीरंदुःशासनमरिंदमम् ॥ दृष्टंद्रोणंसमागत्य
राजावचनमब्रवीत् ॥ २ ॥ राजोवाच ॥ मदीयाःपांडवैर्वीराहन्यंतेपश्यतस्तव ॥ नैकोपिहित्वयानाथपांडवोनिहितःकथम्
॥ ३ ॥ इतितस्यवचःश्रुत्वाद्रोणःक्रोधसमाकुलः ॥ पांडवानांबलंसर्वममर्दपार्थसंनिधौ ॥ ४ ॥ पार्थोऽपितद्बलंसर्वममर्दक्रो
धमूर्छितः ॥ दिव्यैर्नानाप्रहरणैर्युयुधातेपरस्परम् ॥ ५ ॥ तदाद्रोणेनपार्थस्यकंठच्छेदायचाशुगः ॥ मंत्रपूर्वंप्रयुक्तस्तुपार्थोबा
णेनचाच्छिनत् ॥ ६ ॥ मध्यतश्छेदमापन्नोप्याजगामावृतस्तदा ॥ तदग्रंचार्द्धचंद्रेणपुनराहत्यवेगतः ॥ ७ ॥ मध्येचिच्छे
दपार्थस्तुपुनस्तच्चसमाययौ ॥ तदातेनैवपार्थेनबाणाग्रेणतदग्रकम् ॥ ८ ॥ निहत्यपातितंदूरंजयशब्दस्तदाभवत् ॥ एवंद्रोण
स्यपार्थस्यघोरंयुद्धमभून्नृप ॥ ९ ॥ विष्णुर्वेत्तिनकोप्यऽन्योद्रोणस्यमृत्युकारणम् ॥ पार्थस्वमातुरंदृष्ट्वातच्चकारजनार्दनः॥१०॥
तदाकृष्णेनवेगेनघातितोगजसत्तमः ॥ अश्वत्थामेतिनामाऽसौभीमेनविनिपातितः ॥ ११ ॥ कृष्णेनसैन्यमध्येतुशब्दोऽयं
प्रकटीकृतः ॥ अश्वत्थामाहतश्चेतिरणतूर्यमघोषयत् ॥ १२ ॥ द्रोणउवाच ॥ यदायुधिष्ठिरोब्रूयात्तदामन्येहतंसुतम् ॥ इति
तस्यवचःश्रुत्वाकृष्णःप्रोवाचधर्मजम् ॥ १३ ॥ श्रीकृष्णउवाच ॥ धर्मत्वमपितद्वाक्यंवदसंशयवर्जितः ॥ नवदिष्यसिचे
द्राजन्सर्वान्द्रोणोहनिष्यति ॥ १४ ॥ धर्मेणोक्तंतदादेशादश्वत्थामाहताहतः ॥ तदायुधिष्ठिरोराजासत्यानृतमभाषत ॥

॥ १५ ॥ ततोद्रोणेनवीरेणयुधिष्ठिरमुखाद्वचः ॥ आकर्णितंतदाहस्ताद्धनुर्मुक्तंचतत्क्षणात् ॥ १६ ॥ अश्वत्थामाहतोनूनंन
रोवाकुंजरोऽथवा ॥ धर्मराजमुखादेतच्छ्रुतंक्लीबंवचःपुनः ॥ १७ ॥ तदातंभर्त्सयन्धर्मंद्रोणोवचनमब्रवीत् ॥ द्रोणउवाच ॥
सत्यव्रतमिदंराजन्यत्त्वयासमुपासितम् ॥ १८ ॥ गुरोर्विप्रस्यवृद्धस्यनाशायैवचकेवलम् ॥ माविश्वसंतुविद्वांसःकुयोनिर्यत्र
विद्यते ॥ १९ ॥ दुष्टाहिजननीयस्यतत्रास्तियत्रभाषिते ॥ जननीयानिकर्माणिकरोतिमदविव्हला ॥ २० ॥ तानिकर्माणि
राजेंद्रसुतःसम्यक्प्रकाशयेत् ॥ कानीनःप्रपितायस्यपितायस्यचगोलकः ॥ २१ ॥ स्वयंकुंडाश्वविज्ञेयास्तत्रकिमस्तिनवेदय
त् ॥ रेधर्मकलिमध्येतुभूतलंदंभसंयुतम् ॥ २२ ॥ अधर्मसहितालोकाभांतिभासाहिभूयसाम् ॥ ज्ञात्वासत्येनमन्नाशंयत
स्त्वंकृतवान्नृप ॥ २३ ॥ अतस्त्वमपिराजेंद्रविकलोभवधर्मज ॥ इतिनानाविधान्दोषान्वदंतंद्रोणमाहवे ॥ २४ ॥ कृष्णा
देशात्तुपार्थोवैजघ्नेनानाविधैःशरैः ॥ हन्यमानांतनुंज्ञात्वाद्रोणोयोगेश्वरेश्वरः ॥ २५ ॥ ऊर्द्ध्वस्फोटेनराजेंद्रप्राणांस्तत्याजमूर्ध
नि ॥ तदाद्रोणेलयंप्राप्तेधृष्टद्युम्नोमहाबलः ॥ २६ ॥ वधायनिर्मितोधात्राखड्गहस्तउपाययौ ॥ द्रोणस्यचशिरश्छित्वाजगाम
चयथागतम् ॥ २७ ॥ मुखाऽग्रेचतुरोवेदाःकराग्रेसशरंधनुः ॥ उभयोर्द्रोणसामर्थ्यंशापादपिशरादपि ॥ २८ ॥ इतिनाना
विधंजल्पन्राजादुर्योधनोयदा ॥ रविरस्तंगतस्तत्रह्यश्वत्थामाचुकोपह ॥ २९ ॥ नारायणास्त्रंरौद्रंहिपांडवानांक्षयायवै ॥ दुः
सहंदारुणंक्रुद्धंपितुःप्रीतस्यनाशनात् ॥ ३० ॥ अश्वत्थाम्नायदाचास्त्रंक्षिप्तंकृष्णोवदत्तदा ॥ पार्थपार्थमहाबाहोसंधनारायणं
शरम् ॥ ३१ ॥ उभयंतूणदेशेत्वमानयस्वेतिसादरम् ॥ पार्थःकृष्णवचःश्रुत्वायथोक्तंचसमाचरत् ॥ ३२ ॥ अर्जुनास्त्रेणनि
र्विद्धोह्यश्वत्थामाऽपलायत ॥ तदस्त्राद्दुःखितोराजन्वंशधारःपरीक्षितः ॥ ३३ ॥ उत्तराजठरेगत्वाहरिणालघुरूपिणा ॥ ३४ ॥

149

इतिश्रीमहाभारतेभारतसारेद्रोणवधानंतरमश्वत्थामापलायनंनामषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ इतिद्रोणपर्वसमा
प्तम् ॥ ॥ अथकर्णपर्वआह ॥ ॥ सप्तषष्टितमेऽध्यायेगोसहस्रस्यपुत्रयोः ॥ युद्धेयुद्धेमहाश्लाघासूर्यपुत्रस्यकथ्यते ॥ १ ॥
वैशंपायनउवाच ॥ अथाभिषेकंकर्णस्यचक्रेदुर्योधनोनृपः ॥ नानाशस्त्रास्त्रकुशलंशल्यंकृत्वासुसारथिम् ॥ २ ॥ कर्णोरथंस
मारुह्यरणंसंप्राप्यगर्जयन् ॥ कर्णमागतमालोक्यकृष्णःपार्थमुवाचह ॥ ३ ॥ नानारथसमायुक्तंनानाशस्त्रोपशोभितम् ॥
महाकायंमहाशूरंपश्यकर्णंरथेस्थितम् ॥ ४ ॥ शल्यउवाच ॥ पश्यकर्णरथंपुण्यंश्रीकृष्णेनोपशोभितम् ॥ कपींद्रश्चध्वजाग्रे
हिशत्रोरतिभयंकरः ॥ ५ ॥ अनिवार्यस्त्वसौपार्थःसत्यंसत्यंवचोमम ॥ कर्णउवाच ॥ ध्वजाग्रेहनुमान्साक्षाद्राजतेशंकरा
त्मजः ॥ ६ ॥ रथाग्रेहिस्थितःकृष्णःसाक्षान्नारायणात्मकः ॥ नररूपीस्वयंपार्थोविष्णुरेवनसंशयः ॥ ७ ॥ एवंसत्यनिवा
र्योऽसौपार्थोनैवास्तिविस्मयः ॥ एवंसत्यनिधिंपार्थंगमिष्येतंसुसंगरम् ॥ ८ ॥ अर्जुनंप्रतिराजेंद्रचालयस्वरथंमम ॥ रणभू
मिंहिकर्णस्यरथोनीतोमहात्मना ॥ ९ ॥ कर्णःस्यंदनमालोक्यपुरःप्राप्तंयुयुत्सया ॥ प्रहितंशरजालंचपार्थेनैवधनुष्मता ॥
॥ १० ॥ अर्जुनप्रहितान्बाणान्कर्णश्चिच्छेदसायकैः ॥ बाणौघैरर्दयामाससकृष्णंपार्थमावहत् ॥ ११ ॥ शरैर्नानाविधैःक
र्णःकृष्णपार्थकपींद्रकान् ॥ हत्वाजघ्नेहिततसैन्यंतन्मुक्तान्च्छेदयन्शरान् ॥ १२ ॥ इतिलाघवमापन्नंकर्णंदृष्ट्वात्यमर्षितः ॥
पार्थस्तुरणभूम्यांवैनिष्काश्योऽयंरथोमम ॥१३॥ इतिकृत्वामतिंजघ्नेरथंकर्णस्यवेगतः॥तद्बाणाभिहतंसाश्वंरथिंसारथिसंयुतम्
॥ १४ ॥ पताकायुगसंयुक्तमभग्नंसर्वतोदृढम् ॥ एवंबाणहतस्तत्ररथोऽगच्छन्नियोजनम् ॥ १५ ॥ ततोवेगात्समागत्यकर्णो
नानाविधैःशरैः ॥ श्रीकृष्णसहितंतत्रजघ्नेपार्थस्यस्यंदनम् ॥ १६॥ सकपिंवाजिसंयुक्तंसोपस्कारंमहाभरम् ॥ एवंकर्णहत

स्तत्ररथोगच्छत्पदत्रयम् ॥ १७ ॥ आकाशस्थैस्तदादेवैः कर्णस्योपरितत्क्षणात् ॥ मुक्तांसुपुष्पवृष्टिंतांविस्मितश्चार्जुनोऽब्रवी
त् ॥ १८ ॥ अर्जुनउवाच ॥ मयाहतः कर्णरथोगतोदेवत्रियोजनम् ॥ मद्रथस्तेनकर्णेननीतस्तत्रपदत्रयम् ॥१९॥ देवैः किम
र्थंपुष्पाणांवृष्टिः कर्णेकृताप्रभो ॥ कृष्णउवाच ॥ अनेनपार्थकर्णेनमहत्कर्मकृतंत्विदम् ॥ २० ॥ पश्यत्वंमन्मुखंपार्थविषादंमा
वृथाकुरु ॥ इत्युक्त्वावदनंतत्रकेशवेनप्रसारितम् ॥ २१ ॥ तत्रैवदद्दशेपार्थः सकलंसचराचरम् ॥ सप्तद्वीपयुतंविश्वमष्टपर्वत
संयुतम् ॥ २२ ॥ सप्तसागरसंयुक्तोवनस्पतिसमाकुलम् ॥ ततोपश्यज्जयस्तत्रपाहिनाथेतिचावदत् ॥ २३ ॥ इतितंविस्म
यापन्नंपार्थंदृष्ट्वाब्रवीद्धरिः ॥ असौकर्णस्त्वयापार्थजेतुंवीरनशक्यते ॥ २४ ॥ अनेनसहसंग्रामंदृढीभूत्वाकुरुष्वह ॥ ततोर्जु
नोदृढीभूयसंग्रामंकृतवांस्तदा ॥ २५ ॥ संख्ययारहितैर्बाणैः कर्णस्यच्छादितोरथः ॥ पार्थबाणसमूहोवैसूच्यभेद्योबभूवह ॥
॥ २६ ॥ वन्ह्यस्त्रेणसमंत्रेणकर्णः क्रोधसमाकुलम् ॥ पार्थबाणसमूहंतंजज्वालसिंहवन्नदन् ॥ २७ ॥ वन्हिस्तुप्रसृतः सैन्येपां
डवानांसशब्दकः ॥ रथाश्ववाह्यउष्ट्रीभिर्वीराणांवस्त्रकेशकाः ॥ २८ ॥ चामराणिपताकाश्चछत्राणिचतुनेमयः ॥ जज्वलुश्चप्र
तेयुः कवचानियुध्यतांमृधे ॥ दह्यमानास्तदावीरास्तत्यजुस्ताननेकशः ॥ २९ ॥ कर्णस्यदहनास्त्रंहिदृष्ट्वापार्थोमहाबलः ॥
मुमोचवरुणास्त्रंहिप्रसृतेकौरवेबले ॥ ३० ॥ वन्हिरस्तंगतस्तावद्वारिपूरैः सहस्रधा ॥ आकृष्टाः परतोजग्मुर्हस्त्यश्वरथपत्तयः
॥ ३१ ॥ इतिवारिशराघातेजलेमग्नंस्वसैनिकम् ॥ दृष्ट्वासोऽत्यजद्वायव्यंपर्जन्यास्त्रंविभंजयत ॥ ३२ ॥ प्रशस्तेपांडवेसैन्ये
हस्त्यश्वरथपत्तयः ॥ उड्डीयगगनंजग्मुस्तूलवत्तेनराधिप ॥ ३३ ॥ वायव्यास्त्रविभिन्नायेखमापूर्हिमतंगजाः ॥ तेतत्रदद्दशुः
सम्यक्सजलाजलदाइव ॥ ३४ ॥ पार्थस्तदस्त्रमालोक्यवायुनापीडितंबलम् ॥ मुमोचपर्वतास्त्रंसरौद्रवायुश्चसर्वशः ॥ ३५ ॥

पर्वतैर्व्यापितंसैन्यंकौरवाणांचपीडितम् ॥ विलोक्यविकलःकर्णश्चास्त्रमैंद्रमुपाददे ॥ ३६ ॥ पर्वतानांहिछेदायमुमोचपांडवेब
ले ॥ तत्पातात्पर्वताःसर्वेतत्क्षणाद्विलयंगताः ॥ ३७ ॥ तदस्त्रंपंचभिर्बाणैर्दशधाकृतवाञ्जयः ॥ पुनःपार्थेनकर्णस्यनाराचे
नबलीयसा ॥ ३८ ॥ छत्रंछिन्नंसमुकुटंपताकासाचतत्क्षणात् ॥ कर्णोपिसमहावीरश्छत्रच्छेदायसत्वरम् ॥ ३९ ॥ अर्द्धचं
द्रंमुमोचाथपार्थोद्वाभ्यांत्रिधाच्छिनत ॥ तावदादौहतःपार्थोहृदयेपंचभिःशरैः ॥ ४० ॥ तद्भेदान्मूर्च्छतांप्राप्यतत्क्षणादुत्थि
तोबली ॥ कर्णंविव्याधनाराचैर्वक्षस्येवंधनंजयः ॥ ४१ ॥ चतुर्भिर्भल्लनाराचैरश्वानजघ्नेसराघवः ॥ रथंबभंजचैकेनपुनरेके
नसारथिम् ॥ ४२ ॥ कर्णंतुघातयित्वावैहृदयेऽव्यनदद्बली ॥ पुनरेकेनबाणेनचिच्छेदगर्जयन्धनुः ॥ ४३ ॥ ज्याघोषेणतदा
पार्थोगणांतरमकल्पयत ॥ सूर्येंद्रसुतयोरेवंयुद्धमासीद्भयातुरम् ॥ ४४ ॥ श्रीकृष्णचोदिताभूमिःकर्णस्यरथचक्रकम् ॥ जगृहे
चतदाराजन्मुमोचैवंप्रयत्नतः ॥ ४५ ॥ रथेग्रस्तेतदाकर्णःपार्थंप्रोवाचमानतः ॥ कर्णउवाच ॥ पार्थपार्थमहाबाहोक्षणमेकं
स्थिरोभव ॥ ४६ ॥ यावद्भूमिगतंचक्रमुद्धरामिमहीतलात् ॥ निवार्यचार्जुनंतत्रचक्रमुद्धरणेरतः ॥ ४७ ॥ तावत्कृष्णश्चपार्थं
चप्रोवाचछलयन्वचः ॥ श्रीकृष्णउवाच ॥ यावद्भूमिगतंचक्रंतावद्दृष्टिरधोमुखी ॥ ४८ ॥ तावत्प्रहरकौंतेयजयरंध्रप्रहारि
णन् ॥ इतिकृष्णवचःश्रुत्वापार्थोजघ्नेशतैःशरैः ॥ ४९ ॥ कर्णंत्वधोमुखंशूरमुद्धरंतंरथांगकम् ॥ कृष्णदेशादयंपार्थोहंतिमां
नाशकांक्षया ॥ ५० ॥ एवंज्ञात्वातदाकर्णःकृष्णंवचनमब्रवीत् ॥ कर्णउवाच ॥ भोभोकृष्णमहाबाहोनाहंमृत्योर्बिभेम्यहम्
॥ ५१ ॥ जितेचलभतेलक्ष्मीर्मृतेचापिसुरांगनाः ॥ क्षणविध्वंसिनीकायेकाचिंतामरणेरणे ॥ ५२ ॥ एवंचाधर्मतोयुद्धंदृष्ट्वा
क्रोधपरिप्लुतः ॥ कश्चित्सर्पोद्विपात्कर्णंसंप्राप्येदंवचोवदत् ॥ ५३ ॥ इतिश्रीमहाभारतेभारतसारेकर्णपर्वणिकर्णार्जुनयुद्धंना

मसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ अष्टषष्टितमेऽध्यायेनागराजसहायता ॥ कर्णस्यगरुडात्तिश्चपातःकर्णस्यकथ्यते ॥ १ ॥
वैशंपायनउवाच ॥ पूर्वंकर्णसखासर्पोदुर्योधनगृहेधृतः ॥ मुक्तःकर्णेनशापाद्वैससर्पोवाक्यमब्रवीत् ॥ २ ॥ पुंडरीकउवाच ॥
भोभोकर्णमहाबाहोत्वत्समोनास्तिभूतले ॥ यस्त्वयायुज्यतेबाणोयच्छेद्योमंत्रसंयुतः ॥ ३ ॥ तस्मिन्बाणेतुमांन्यस्यप्रेषया
स्वार्जुनंप्रति ॥ इतितस्यवचःश्रुत्वाकर्णस्तच्चसमाचरत् ॥ ४ ॥ तद्युक्तःप्रेरितोबाणःपार्थाश्वैस्ताडितोपिसः ॥ कृष्णार्जुनत
नूर्भित्वानानामर्मसुविव्यथे ॥ ५ ॥ विचेष्टितौसमाज्ञायधर्मःस्वस्थःसमाहरत् ॥ दुःखितोविव्हलोमोहात्रुरुदेमूढमूढवत् ॥
॥ ६ ॥ एतस्मिन्समयेराजन्नारदोऽप्यागमद्रणम् ॥ धर्मप्राहहसन्राजन्किमर्थंरोदसेवृथा ॥ ७ ॥ नरनारायणावेतौनमृ
त्युर्विद्यतेतयोः ॥ पक्षिराजंस्मरत्वंहिवाहनंकेशवस्यच ॥ ८ ॥ इत्युक्तेऋषिणावाक्येसस्मारगरुडंचसः ॥ धर्मसंस्मरणात्पू
र्वंसुपर्णोप्यागमत्श्वसन् ॥ ९ ॥ तत्पक्षवायुनासैन्येकुरुपांडवयोस्तदा ॥ जग्मतुर्गगनंराजन्क्रंदमानौपुनःपुनः ॥ १० ॥
केचित्त्वधोमुखाराजन्हस्त्यश्वरथपत्तयः ॥ भ्रमंतोविकलाःसर्वेतृणानिप्रलयेयथा ॥ ११ ॥ तार्क्ष्यस्तत्रसमागत्ययत्रतौकेशवा
र्जुनौ ॥ स्थितावेवंतदासर्वेसर्पाजग्मुर्बिलेबिले ॥ १२ ॥ संजघानसुपर्णोवैगच्छतस्ताननेकशः ॥ सर्पबंधाद्विनिर्मुक्तौह्युत्थि
तौकेशवार्जुनौ ॥ १३ ॥ सुपर्णस्तंविभुंकृष्णंत्रिःपरिक्रम्यपादयोः ॥ ननामशिरसाराजन्निदंवचनमब्रवीत् ॥ १४ ॥ गरुडउ
वाच ॥ कृष्णकृष्णाप्रमेयात्मन्शाधिमांकरवामिकिम् ॥ कौरवाणांबलंसर्वंभक्षयिष्येतवाज्ञया ॥ १५ ॥ अथवापक्षघातेन
समुद्रेपातयेविभो ॥ इतितस्यवचःश्रुत्वाविभुस्तंनेत्रसंज्ञया ॥ १६ ॥ वारयामासवाक्यंस्वंपालयन्ज्ञापयन्जने ॥ नाहंयु
द्धंकरिष्येत्रकुरुपांडवसंयुगे ॥ १७ ॥ मदंगत्वंसुपर्णोसितस्माद्गच्छममाज्ञया ॥ इत्याज्ञांशिरसाकृत्वापुनस्ताक्ष्र्योजगामह ॥

153

॥ १८ ॥ कृष्णपार्थौरथेस्थित्वायावद्युद्धायनिर्गतौ ॥ तावत्कर्णेनवीरेणभूमेश्चक्रंसमुद्धृतं ॥ १९ ॥ सोपितंरथमारुह्ययुद्धाय
चसमुद्यतम् ॥ पार्थप्रोवाचराजेंद्रंशृण्वतांसर्वभूभुजां ॥२०॥ कर्णउवाच ॥ अहोपार्थमहाबाहोकृष्णएवबलंतव ॥ यदाभवं
तौपतितौनागविद्धौहिभूतले ॥ २१ ॥ नतदाप्राहतंवीरमयाऽधर्मभयाद्ध्रुवम् ॥ रथचक्रयदाभूम्याग्रस्तंवीरक्षणंत्वया ॥
॥ २२ ॥ नस्थितंहितदापार्थकीदृशंपौरुषंतव ॥ इतितस्यवचःश्रुत्वातूष्णींभूत्वाशरान्दृढान् ॥ २३ ॥ मुमोचक्रोधलज्जाभि
र्व्याप्तोविष्णुंविलोकयन् ॥ कर्णस्तुप्रहसन्वीरोप्यर्द्धचंद्रंमहाशरम् ॥ २४ ॥ कंठच्छेदायपार्थस्यमुमुचेपश्यतोहरेः ॥ छिन्नः
पार्थशरैर्मध्यात्पार्थकंठंजगामसः ॥ २५ ॥ तदाकृष्णोखिलज्ञानोपायंचकृतवान्विभुः ॥ बाणप्राप्यंशरंवीक्ष्यकर्णस्यचफलं
यदा ॥ २६ ॥ तदासौपादघातेनधरण्यामनयद्रथम् ॥ तालमात्रंत्वरायुक्तःकृष्णःस्वानांचपालकः ॥ २७ ॥ पार्थस्यमुकुटं
छित्वाकर्णबाणोजगामह ॥ इत्येवंयुध्यतस्तस्यकर्णस्यरथचक्रकम् ॥२८॥ धरण्यागिलितंराजन्पुनरेवयथापुरा ॥ कृष्णा
देशादयंपार्थोनाराचैर्नाशकैर्दृढम् ॥ २९ ॥ जघ्नेकर्णपुनस्तद्वच्चक्रोद्धरणहेतवे ॥ अधोमुखंस्थितंभूमौतिष्ठार्जुनक्षणंत्विति ॥
॥ ३० ॥ वदंतंविह्वलंराजन्नर्जुनंसूर्यनंदनम् ॥ यावत्तुतिष्ठतेपार्थस्तदाकर्णोपिगर्जयन् ॥ ३१ ॥ भूमिस्थोयुयुधेवीरोबाणा
न्मुंचन्ननेकधा ॥ पार्थबाणैर्दृढैर्घोरैरर्दितोमर्मसुभृशम् ॥ ३२ ॥ विह्वलोऽपिमहावीरोमुमुचेबाणजालकम् ॥ एवंनानाविधै
रस्त्रैःपातितःसूर्यनंदनः ॥ ३३ ॥ धरण्यागिलितंचक्रंजनन्याचहृताःशराः ॥ शक्रेणकवचंनीतंवृद्धब्राह्मणरूपिणा ॥ ३४ ॥
गुरुणाजामदग्न्येनसशप्तःसूर्यनंदनः ॥ कृष्णेनचकृतंच्छद्मभूभारोत्तारणायवै ॥ ३५ ॥ अर्जुनोपिमहावीरःप्रतिस्पर्धीरणांग
णे ॥ षडेतेनाशकाराजन्कर्णःकिंकुरुतेतदा ॥ ३६ गोसहस्रसुतेनाऽसौगोसहस्रसुतोहतः ॥ निचितंगोविहीनेनगौश्चहस्ता

द्विनिर्गतः ॥ ६७ ॥ इतिश्रीमहाभारतेभारतसारेकर्णपर्वणिकर्णवधोनामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ एकोनसप्ततितमेदा
तृत्वंसूर्यजस्यच ॥ वराप्तिःकृष्णहस्तेनदेहदग्धत्वमुच्यते ॥१ ॥ वैशंपायनउवाच ॥ अहंकारगतःपार्थोदृष्ट्वाकर्णंनिपातितम्॥
सूर्यपुत्रोमहावीरोमयैकेननिपातितः ॥ २ ॥ इतितस्यवचःश्रुत्वाह्यज्ञानस्यजनस्यच ॥ कृष्णःप्रोवाचपार्थंतंप्रहसन्कंपयन्
शिरः ॥ ३ ॥ श्रीकृष्णउवाच ॥ भोसखेमूर्खवद्बुद्धिरित्थंकिंवर्त्ततेधुना ॥ मयायंनिहतःसंख्येकर्णोऽयंसूर्यनंदनः ॥ ४ ॥
इतिबुद्धिंप्रकुर्वाणस्त्वत्तोनास्तिक्षितौजडः ॥ ततोभिमानस्तेमंदसूर्यपुत्रोमयाहतः ॥ ५ ॥ शृणुपार्थप्रवक्ष्यामिकर्णनाशकरां
स्तव ॥ त्वयामयाचकुंत्याचधरित्र्यावासवेनच ॥ ६ ॥ जामदग्न्येनरामेणषड्भिःकर्णोनिपातितः ॥ अथावयोरिदंजन्मद्वितीं
यंचास्यसाधने ॥ ७ ॥ सहस्रकवचोवीरःपूर्वजन्मनिपांडव ॥ धर्मतोनिहतस्तत्रतपस्तप्त्वाह्यनेकधा ॥ ८ ॥ जन्मन्यस्मिन्
वयंवीरह्यावाभ्यांकष्टतोहतः ॥ आत्मनश्चपरस्यैवदोषस्यचगुणस्यच ॥ ९ ॥ अंतरंयोनजानातिसपार्थपुरुषाधमः ॥ तयोः
प्रवदतोरेवंकर्णंप्रापसुयोधनः ॥ १० ॥ उवाचवचनंशोचन्हाहतोऽस्मीतिमानद ॥ किंसुप्तोऽसिमहाबाहोयुद्धयस्वोत्तिष्ठसाद
रम् ॥ ११ ॥ किंभग्नोऽसिमहावीरममपालनकर्मणि ॥ परित्यक्तंत्वयावीरपांडवोमांहनिष्यति ॥ १२ ॥ तस्मादुत्तिष्ठबंधोत्वं
त्वदीयंमांहिपालय ॥ १३ ॥ वेदहीनायथाविप्रामदहीनायथागजाः ॥ तोयहीनायथानद्यःकर्णहीनंतथाबलम् ॥ १४ ॥
पतिहीनायथानारीशशिहीनाचशर्वरी ॥ दहेत्सौरिविहीनंचकर्णहीनंतथाबलम् ॥ १५ ॥ निःशब्दवीर्यंहतकर्णवीरंप्रशांतदर्पंधृत
राष्ट्रसैन्यम् ॥ तच्छोभतेसूर्यसुतेनहीनंवृंदंगृहाणामिवचंद्रहीनम् ॥१६॥ पथ्यहीनोयथारोगीवर्णहीनंयथाकुलम् ॥ श्वासहीनो
यथादेहःकर्णहीनंयथाबलम् ॥१७॥ कर्णनानाविधैर्वाक्यैर्विलप्यैवंसुयोधनः ॥ स्वस्थानमगमद्राजन्युद्धंसंस्थितिकारणात्॥

॥ १८ ॥ एकाकीसयदाकर्णःपतितोस्तिरणेश्वसन् ॥ तदापार्थप्रतिवधःप्रोवाचेदंहरिर्हसन् ॥ १९ ॥ पार्थत्वंशिष्यतांप्रा
प्यसमागच्छमयासह ॥ कर्णपरीक्ष्यधर्मत्वेप्यस्मैदास्येवरानहम् ॥ २० ॥ महान्भक्तोमहावीरःसत्यशौचपरायणः ॥ जितें
द्रियोरणेशूरोमत्प्रियोस्तिसदाशुचिः ॥ २१ ॥ इत्युक्त्वाभूद्धरिस्तत्रवृद्धब्राह्मणरूपधृक् ॥ शिष्येनैकेनसंयुक्तःकर्णप्रापपदा
स्खलन् ॥ २२ ॥ ब्राह्मणउवाच ॥ कर्णकर्णमहावीरसदादातासिभूतले ॥ प्राप्यविष्णोःप्रसादंत्वंवरंप्रापयथेप्सितम् ॥
॥ २३ ॥ आध्याधिनाशरीरेणमनसानिर्द्धनेनच ॥ याचकोऽहंत्वयिप्राप्तस्त्वंजीवशरदांशतम् ॥ २४ ॥ कल्याणमस्तुकमला
सदास्तुदीर्घायुरस्तुबलमस्तुतेजः ॥ सदायशोस्तुचारोग्यतास्तुवंशेसदैवहरिभक्तिरस्तु ॥ २५ ॥ लक्ष्मीर्यास्यतिगोविंदंधरणी
चयुधिष्ठिरे ॥ याचकाक्कगमिष्यंतित्वयिकर्णेदिवंगते ॥ २६ ॥ विवाहयोग्याकन्यामेधनंनास्तिहिकिंचन ॥ आगतोऽहंसमी
पेतेयाचेत्वांबहुकांचनम् ॥ २७ ॥ वरंपक्षिवनेवासोवरंपर्वतमस्तके ॥ अपुत्रिणविरंमातामाजन्मयाचकेकुले ॥ २८ ॥ तृणा
ल्लघुतरंतूलंतूलादपिहियाचकः ॥ वायुनाकिंननीतोऽस्मिमामपिप्रार्थयिष्यति ॥ २९ ॥ गात्रभंगस्वरोदीनःप्रस्वेदस्तुगलग्र
हः ॥ मरणेयानिचिन्हानितानिचिन्हानियाचके ॥ ३० ॥ दग्धःपंचशरःपिनाकपतिनातेनाप्ययुक्तंकृतं दग्धंखाडवमर्जुनेन
बलिनादिव्यैर्द्रुमैर्मंडितैः ॥ दग्धारावणपालिताहनुमतादिव्याचलंकापुरी ॥ दारिद्र्यंजनतापदंचजगतःकेनापिदग्धंनहि ॥
॥ ३१ ॥ इतितस्यवचःश्रुत्वाकर्णःप्रोवाचतंद्विजम् ॥ इमामवस्थांप्राप्तोहंस्थितोऽस्मिधरणीतले ॥ ३२ ॥ अधुनाचात्रवित्तं
मेसमीपेनास्तिकिंचन ॥ ममभार्यासमीपेतुगंतुंस्वामिन्कृपांकुरु ॥ ३३ ॥ अभिज्ञानंहिदास्यामिसातुभ्यंदास्यतेधनम् ॥
इतितस्यवचःश्रुत्वाविप्रोवचनमब्रवीत् ॥ ३४ ॥ विप्रउवाच ॥ कालेवर्षतिमेघोहिवृक्षाःकालेफलंतिहि ॥ भूमिर्हिफलतेका

लेगावःकालेदुहंतिच ॥ ३५ ॥ सर्वंफलतिकालेहिकर्णःफलतिसर्वदा ॥ इतिख्यातिंसमाश्रुत्यह्यागतस्तवसंनिधौ ॥ ३६ ॥
सर्वदासर्वदातासिसर्वदासमयस्त्वयि ॥ अस्माकंकर्मदौर्बल्यातकर्णोपिजडतांगतः ॥ ३७ ॥ कर्णउवाच ॥ ममभारसुवर्णस्य
दंताबद्धास्तुहीरकैः ॥ पातयित्वातुतान्सर्वान्गृहाणत्वंद्विजोत्तम ॥ ३८ ॥ विप्रउवाच ॥ वृद्धोऽहंनैवशक्तोऽस्मिदंतान्पात
यितुंचते ॥ कर्णउवाच ॥ पाषाणंदेहिमेनाथयेनोत्पाट्यददामिते ॥ ३९ ॥ विप्रउवाच ॥ पाषाणमपिदातुंतेनशक्तोऽस्मिक
दाचन ॥ वैशंपायनउवाच ॥ तादृशोपितदाकर्णोगतःपाषाणसंनिधौ ॥ ४० ॥ गृहीत्वातत्रपाषाणंनानाभिन्नकरेणवै ॥ या
वद्ददातिदंतान्वैपातयित्वार्कनंदनः ॥ ४१ ॥ हरिःस्वरूपमास्थायकरेधृत्वाप्युवाचह ॥ भोभोकर्णमहावीरत्वत्समोनास्तिभू
तले ॥ ४२ ॥ यत्त्वयाचरितंकर्मतेनतुष्टोऽस्मिसांप्रतम् ॥ वरंब्रूहिमहाप्राज्ञयत्तेमनसिरोचते ॥ ४३ ॥ कर्णउवाच ॥ वि
प्रार्थेहिधनंक्षीणंस्वदारागतयौवनम् ॥ स्वामिकार्येगताप्राणान्देहिमेमधुसूदन ॥ ४४ ॥ पात्रेदानंमतिःकृष्णेमरणंजान्हवी
तटे ॥ स्थानेवासःकुलेजन्मदेहिमेमधुसूदन ॥ ४५ ॥ आसनंसुतसंकीर्णंविप्रसंकीर्णमंदिरम् ॥ हृदयंशास्त्रसंकीर्णंदेहिमेमधु
सूदन ॥ ४६ ॥ तिलकंविप्रहस्तेनमातृहस्तेनभोजनम् ॥ पिंडंचपुत्रहस्तेनदेहि० ॥ ४७ ॥ दुर्भिक्षेचान्नदातृत्वंहेमदत्तंसु
भिक्षके ॥ आतुरेऽभयदातृत्वंदेहिमे० ॥ ४८ ॥ माममतिःपरदारेषुपरद्रव्येषुमामतिः ॥ परापवादिनीजिव्हामाभूदेवंकदाच
न ॥ ४९ ॥ सत्यंशौचंदयादानंभक्तिरेकाजनार्दने ॥ दमनंदक्षताचैवदेहि० ॥ ५० ॥ व्याधिनारहितोदेहोह्याधिनारहितं ॥७९॥
मनः ॥ स्थिराश्रीर्नित्यभक्तिश्चदेहिमे० ॥ ५१ ॥ दानेनपाणिर्नतुकंकणेनज्ञानेनशुद्धिर्नतुस्नानकेन ॥ मानेनतृप्तिर्नतुभोजने
नभक्त्यातुमुक्तिर्नतुमुंडनेन ॥ ५२ ॥ ईप्सितंसर्वधान्यंचवस्त्रंचहेमकर्षणम् ॥ दानंभोजनशक्तिंचदेहिमेमधुसूदन ॥ ५३ ॥

यदितुष्टोऽसिमेदेवह्यदग्धेदह्यतांमम ॥ इत्येवंप्रार्थितंयज्ञविष्णुस्तंप्रददौमुदा ॥ ५४ ॥ तमामंत्र्यहरिर्यावच्चलितःपार्थसंयु
तः ॥ तावत्कर्णस्तुसंस्पृश्यशिरसाविष्णुपादकौ ॥ ५५ ॥ प्राणांस्तत्याज्यतत्रैवतदातेनप्रशंसितः ॥ कर्णदाहस्थलार्थायभ्रा
मितौकृष्णफाल्गुनौ ॥ ५६ ॥ भूमिःसर्वत्रनिर्दग्धाह्यदग्धानैवदृश्यते ॥ एकस्मिन्नुवैस्थलंगत्वाभूमिंपप्रच्छकेशवः ॥ ५७ ॥
पृथ्वित्वंब्रूहिमेसत्यंकोऽपिदग्धस्तवोपरि ॥ ५८ ॥ भूमिरुवाच ॥ अत्रभीष्मशतंदग्धंद्रोणस्यैवशतंशतम् ॥ दुर्योधनसहस्र
स्यकर्णसंख्यानविद्यते ॥ ५९ ॥ तदाकृष्णेनकर्णोऽसौवामहस्तेप्रज्वालितः ॥ दक्षिणोबलिराज्ञेयःपूर्वंदत्तस्तुहस्तकः ॥
॥ ६० ॥ इतिश्रीमहाभारतेभारतसारेकर्णपर्वणिकर्णवधोनामएकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ इतिकर्णपर्वसमा
प्तम् ॥ ॥ अथशल्यपर्वआह ॥ ॥ सप्ततितमअध्यायेनृपशल्यस्यपंचता ॥ कृपस्यद्रोणपुत्रस्यपलायनमिहोच्यते ॥ १ ॥
वैशंपायनउवाच ॥ हतेभीष्मेतथाद्रोणेकर्णेचनिधनंगते ॥ आशाबलवतीराजन्शल्योजेष्यतिपांडवान् ॥ २ ॥ दुर्योधनस्त
दाचक्रेशल्यस्याप्यभिषेचनम् ॥ प्रातःकालेतदाराजन्शल्योरथमवस्थितः ॥ ३ ॥ अश्वत्थामकृपाभ्यांचदृष्ट्वाशल्यंरथेस्थित
म् ॥ पार्थश्रांतंसमालोक्यपांडवानवदद्धरिः ॥ ४ ॥ धर्मभीमादयःसर्वेगच्छंत्वेनंतुसंगरे ॥ इतिकृष्णवचःश्रुत्वाधर्मराजमु
खानराः ॥ ५ ॥ ययुःशल्यंहियुद्धाययुद्धकर्मविशारदम् ॥ निर्जघ्नुर्निशितैर्बाणैर्भल्लैर्नानाविधैस्तथा ॥ ६ ॥ खड्गैर्गदाभिर्मुशलैः
शल्यंमद्रेश्वरंतथा ॥ धर्मराजेनशल्योऽपिपातितोधरणीतले ॥ ७ ॥ मध्यान्हेमध्यदेशस्यराजाशल्योदिवंगतः ॥ शल्यंमृतं
समालोक्यमानीदुर्योधनस्तदा ॥ विलप्यबहुशस्तत्रमंदिरंनिजमाश्रितः ॥ ८ ॥ अश्वत्थामाकृपस्तत्ररणमध्यात्पलायितौ
॥ ९ ॥ इतिश्रीमहाभारतेभारतसारेशल्यपर्वणिशल्यवधोनामसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ॥ ॥

॥ अथगांधारीदुर्योधनयोःसंवादः ॥ एकसप्ततितमेऽध्यायेदुर्योधनविलापनम् ॥ गांधार्यास्तस्यसंवादेदुःखहेतुत्वमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ ततोदुर्योधनोराजारवौचास्तंगतेसति ॥ धृतराष्ट्रंप्रतिययौननामशिरसाचतम् ॥ २ ॥ ॥ दुर्योधनउवाच ॥ भोतातमेहितंब्रूहिजीवनाशोनवैयथा ॥ पांडवैःसहयोद्धव्यंप्रातःकालेमयाविभो ॥ ३ ॥ इतितस्यवचोदीनंश्रुत्वाचकौरवाधिपः ॥ रुदंतंप्रत्युवाचेदंनजानेपृच्छमातरम् ॥ ४ ॥ ततोदुर्योधनोराजामातरंपर्यपृच्छत ॥ दुर्योधनउवाच ॥ भोभोमातःसदाशुद्धेपातिव्रत्यपरेशुभे ॥ ५ ॥ सतीमुख्याधुनानित्यंसुतंमांत्वंहिपालय ॥ पांडवैःसहयोद्धव्यंप्रातःकालेमयारणे ॥ ६ ॥ मातस्त्वयातथाकार्य्यंयथानाशोनमेभवेत् ॥ अज्ञानंहिशठंमूर्खंदरिद्रंपितृनाशकम् ॥ ७ ॥ पापिष्ठंहिंसकंनित्यंसुतंमाताधिरक्षति ॥ इतितस्यवचःश्रुत्वामातातंप्रत्युवाचह ॥ ८ ॥ गांधार्युवाच ॥ भोवत्सशृणुमेवाक्यंगच्छत्वंहियुधिष्ठिरम् ॥ तत्पादौशिरसानत्वापाहिपाहीतितंवद ॥ ९ ॥ तावत्कालंहितत्पादौनमुंच्यौशिरसाधृतौ ॥ त्वांमोचयतिधर्मात्मातथावाच्योयुधिष्ठिरः ॥ १० ॥ तदुक्तंक्रियतांवाक्यंनान्यथाकर्त्तुमर्हसि ॥ नस्थेयंचरितंतत्रभवतागोप्यरूपिणा ॥ ११ ॥ इतितस्यावचःश्रुत्वाधर्मंदुर्योधनोययौ ॥ पादयोर्हिपतित्वातुतंप्रोवाचसुयोधनः ॥ १२ ॥ दुर्योधनउवाच ॥ भोधर्मधर्मबुद्धेत्वंपाहिमांशरणागतम् ॥ महादीनंखलंमूर्खंसाधवःपांतिवत्सलाः ॥ १३ ॥ इतितस्यवचःश्रुत्वावैक्लव्यंधर्मनंदनः ॥ सुयोधनंप्रत्युवाचबंधोतातेतिसांत्वयन् ॥ १४ ॥ धर्मउवाच ॥ सुयोधनमहावीरमानीशूरःसदामतः ॥ बंधूनांपरिभर्त्तासिसाधूनांत्वंचपालकः ॥ १५ ॥ स्वगृहंगच्छराजेंद्रएकाकीकथमागतः ॥ एकाकिनाहिराज्ञाचरणभूमौनवर्त्तते ॥ १६ ॥ भवतांहिमहाराजकिमागमनकारणम् ॥ अजातशत्रोर्वाक्यंतच्छ्रुत्वादुर्योधनोब्रवीत् ॥ १७ ॥ दुर्योधनउवाच ॥ त्वंमाताचपिताबंधुः

स्वामीवाहितकारकः ॥ शत्रुमित्रसमोनित्यंत्वत्समोनास्तिभूतले ॥ १८ ॥ प्रातःकालेमयानाथकर्त्तव्यंयुद्धमुत्तमम् ॥ दिनेप्य
ष्टादशेराजन्ममनाशस्तुजायते ॥ १९ ॥ सहदेववचोयेनमिथ्यातुनभवेत्कदा ॥ तस्माद्भयंममात्यंतंभयत्राताभवप्रभो ॥ २० ॥
यथामेशरणंनस्यात्तथावाच्यंममप्रभो ॥ मन्मात्राप्रेषितंत्वंमांपालयस्वदयानिधे ॥ २१ ॥ इतितस्यवचःश्रुत्वाधर्मोभ्रात्रहतें
द्रियः ॥ इतस्ततोदिशःपश्यन्नुवाचसाश्रुलोचनः ॥ २२ ॥ धर्मउवाच ॥ मदुक्तंवचनंतातकरिष्यसियदाविभो ॥ तदात्वंन
ग्नतांप्राप्यबालवच्चापिसेवकः ॥ २३ ॥ मातुरग्रेसमातिष्ठशंकांमाकुरुसुव्रत ॥ सर्वांगदर्शयत्वंहिमातुरग्रेसुयोधन ॥ २४ ॥
तयाविलोकितंयच्छरीरंवज्रसमंभवेत् ॥ गच्छगच्छनृपश्रेष्ठमदुक्तंवचनंकुरु ॥ २५ ॥ विलंबोनैवकर्त्तव्योजातकार्यस्यसाध
ने ॥ इतिसंपादितेवाक्येननाशस्तेकदाचन ॥ २६ ॥ इतितस्यवचःश्रुत्वात्रिःपरिक्रम्यधर्मजम् ॥ चलितोहर्षसंयुक्तःशिरो
प्याच्छाद्यवाससा ॥ २७ ॥ मार्गेसंमिलितोज्ञात्वाविश्वात्माहरिरीश्वरः ॥ अनुमुक्तवतंमत्वाकृष्णोदुर्योधनंप्रति ॥ २८ ॥
अब्रवीत्तातमानीतिसंबोध्यसुखदंवचः ॥ अज्ञानंजनयंस्तस्यहितेतरमतोहसन् ॥ २९ ॥ श्रीकृष्णउवाच ॥ दुर्योधनमहा
वीरकिंत्वयाधर्मसंनिधौ ॥ गत्वाकिंहिहितंपृष्टंतेनोक्तंहिहितंचकिम् ॥ ३० ॥ इदानींविकलोजातोरणेवीरविलोकनात् ॥ अ
श्वत्थामाहतस्त्वेवमसत्यमावदन्यदा ॥ ३१ ॥ तदाद्रोणेनगुरुणावृद्धविप्रेणशापितः ॥ यत्त्वयाखलुदुष्टात्मन्सत्यव्रतमुपासित
म् ॥ ३२ ॥ केवलंगुरुविप्रस्यवृद्धस्यचवधायतु ॥ तस्मात्पापमतेत्वंहिविकलोभवधर्मज ॥ ३३ ॥ इत्येवंशप्तएवाऽसौतद्दिना
द्वदतेऽनृतम् ॥ इतित्वंकिंनजानासिकिमर्थंत्वंसमाश्रितः ॥ ३४ ॥ तथापितद्वचोमह्यंकथयस्वातिकुत्सितम् ॥ भविष्यतिम
हाराजनोचितंत्वंकदापिते ॥ ३५ ॥ इतिनानाविधैर्वाक्यैर्भ्रामयन्तन्मनोहरिः ॥ शिरःप्रकंपयामासदंतैरापीड्यचांगुलीः ॥

॥ ३६ ॥ नोवाचकिमपितत्रहरिःपांडवपालकः ॥ इतितंचविधिंदृष्ट्वाराजादुर्योधनोऽब्रवीत् ॥ ३७ ॥ दुर्योधनउवाच ॥ भो
भोकृष्णमहाबाहोधर्मोक्तंवचनंमम ॥ मानसेहिनलग्नंमेतदाहंह्याचरेकथम् ॥ ३८ ॥ तद्वाक्यंहित्वत्पुरतोवक्तुंनैवास्म्यहंक्ष
मः ॥ बंधुत्वादतिचाप्तत्वादाभाष्येकृष्णतेपुरः ॥ ३९ ॥ त्वयानवाच्यंकस्याग्रेममधर्मस्यदुःखकम् ॥ इत्युक्त्वामूर्खवद्वाक्यं
धर्मोक्तंहितदाहितत् ॥ ४० ॥ इतस्ततःसमालोक्यकृष्णकर्णेन्यवेदयत् ॥ तच्छ्रुत्वाभ्रांतवचनंकृष्णस्तंप्रहसन्जगौ ॥ ४१ ॥
श्रीकृष्णउवाच ॥ मावदत्वंमहाबाहोशनैर्वाश्रोष्यतेपरः ॥ नकर्तव्यंत्वयाराजन्मातुरग्रेत्विदंकदा ॥ ४२ ॥ वैशंपायनउवा
च ॥ कृष्णःसुयोधनंत्वेवंभ्रामयन्वाक्यजल्पकैः ॥ ४३ ॥ रामरामेतिसंजल्पन्दंतैरापीड्यकेशवः ॥ जिव्हाग्रंतर्जनींस्पृष्टंहा
हाःकारमथाकरोत् ॥ ४४ ॥ धर्मसंभर्त्सयामासकृष्णःपांडवपालकः ॥ इतितस्यवचःश्रुत्वाकृष्णंदुर्योधनोऽब्रवीत् ॥ ४५ ॥
दुर्योधनउवाच ॥ अतःपरंमहाबाहोकर्त्तव्यंशंससाधने ॥ कृतेयस्मिन्नहितंमेस्यात्त्वत्समोहितदोनवै ॥ ४६ ॥ मयानैवगतं
धर्मपृच्छार्थंहिहितस्यच ॥ मात्राहंप्रेषितोऽतोऽगांनापराधोऽस्तिमामकः ॥४७॥ गांधारीप्रेरणंश्रुत्वापुत्रस्यधर्मजंप्रति॥ पा
तिव्रत्यभयात्कृष्णःप्रोवाचेदंसुयोधनम् ॥ ४८ ॥ श्रीकृष्णउवाच ॥ अतःपरंमहाराजमातुर्वाक्यादिदंत्वया ॥ कर्त्तव्यंधर्म
वाक्यंवैनग्नत्वंनभवेद्यथा ॥ ४९ ॥ मालाकारगृहंगच्छपुष्पानांगुह्यगोपनम् ॥ परिधायततोगच्छमातुरग्रेप्यशंकितः ॥ ५० ॥
मदुक्तंवचनंराजन्नवाच्यंमातुरग्रतः ॥ इत्येवंसाधितेकार्येमातृधर्मोनदुःखितौ ॥ ५१ ॥ त्वंचापिकृतकृत्योऽसिबाधयेत्थंनचा
न्यथा ॥ इतिभारावतारायकृतदेहस्यवाक्यतः ॥ ५२ ॥ तथासंपाद्यपुष्पादिमातुरग्रेगतस्तदा ॥ ततस्तांप्रत्युवाचेदंपुरस्ते
प्यागतोऽस्म्यहम् ॥ ५३ ॥ इतितस्यवचःश्रुत्वामातावचनमब्रवीत् ॥ मातोवाच॥धर्मवाक्यंसमासाद्यह्यागतोसिनचान्यथा॥

161

॥ ५४ ॥ गांधार्यवचनंश्रुत्वापुत्रस्तांप्रत्यभाषत ॥ अवदन्कृष्णचरितंलज्जमानोऽतिशंकितः ॥ ५५ ॥ मातःसंपादितंसर्वं
धर्मोक्तंवचनंमया ॥ तद्वाक्यंहिसमाकर्ण्यपटग्रंथिंमुमोचसा ॥ ५६ ॥ भर्तुःपादौचसंस्मृत्यनेत्रेप्युन्मील्यकष्टतः ॥ तदंगंप
श्यतेयावत्गांधारीपुत्रवत्सला ॥ ५७ ॥ तावद्विलक्षणंदृष्टंधर्मवाक्याच्चकिंचन ॥ पुनरावृत्यनेत्रेसाजगौदुर्योधनंसुतम् ॥ ५८ ॥
भोपुत्रमतिहीनोऽसिकिंमार्गेमिलितंतव ॥ कृष्णोनानाविधैर्वाक्यैर्भ्रामयंस्तावकींमतिम् ॥ ५९ ॥ दुर्योधनउवाच ॥ सत्यमु
क्तंत्वयामातःकृष्णस्तुमिलितोमम ॥ गांधार्युवाच ॥ मांवदत्वंमहामूर्खगुह्यमाच्छादितंकथम् ॥ ६० ॥ पुष्पैःकृष्णवचादिष्टै
र्मरणायैवकेवलम् ॥ पुत्रउवाच ॥ अद्यापिकिंविनष्टंमेपुष्पाच्छादनवर्जितम् ॥ ६१ ॥ पश्यांगंजननिमेत्वंपुनर्नेत्रेचबद्ध्यता
म् ॥ गांधार्युवाच ॥ अतःपरंमहामूर्खनिष्फलंदर्शनंमम ॥ शरीरंतेहिसंप्राप्तायत्रदृष्टिर्मदीयिका ॥ ६२ ॥ दृष्टिस्तदेकभागेवे
भंगोनैवकदानच ॥ कटितोभंगमासाद्यनाशंप्राप्स्यसिकेवलम् ॥ ६३ ॥ इतिश्रीमहाभारतेभारतसारेशल्यपर्वणिमातापुत्र
संवादोनामएकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ इतिशल्यपर्व समाप्तम् ॥ ॥ अथगदापर्वआह ॥ ॥ द्विसप्ततितमे
ध्यायेगांधार्य्याश्चहरिंप्रति ॥ शापोदुर्योधनस्यैवयुद्धंभीमस्यकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ गांधारीदुःखिताप्येवमुक्त्वा
पुत्रंगतप्रभम् ॥ प्रोवाचसहसंकृष्णंपातिव्रत्यबलात्सती ॥ २ ॥ गांधार्युवाच ॥ कृष्णमेपुत्रकाःसर्वेयुगपन्नाशितास्त्वया ॥
निमित्तांतरमासाद्यतेतुकुलक्षयोभवेत् ॥ ३ ॥ तयोक्तंशापमाश्रुत्यपातिव्रत्यात्सदाप्रभुः ॥ ओमित्युक्त्वाभवत्तूष्णींमातरंचे
तिसंवदन् ॥ ४ ॥ वैशंपायनउवाच ॥ निशायांहिव्यतीतायामुदितेसवितर्यथ ॥ दुर्योधनोभयत्रस्तोरथमारुह्यसत्वरम् ॥
॥ ५ ॥ कृष्णद्रोणसुताभ्यांसनिर्जगामपृथूदकम् ॥ गंभीरंजलपूर्णंहिरथादुत्तीर्यचाविशत् ॥ ६ ॥ जलस्तंभमयींविद्यांसाध

यामासतत्त्वतः ॥ ममनृत्युभयंतत्रजजापचसुयोधनः ॥ ७ ॥ अथतेपांडवाःसर्वेज्ञात्वादुर्योधनंनृप ॥ पृथूदकंगतंविद्वांसा
घितुंजीवितंतदा ॥ ८ ॥ तदाकृष्णेनवीरेणप्रेरिताःपांडवाद्रुतम् ॥ गमनायगतंगोप्यंसुयोधनमरिंदमम् ॥ ९ ॥ सर्वेभीमादयः
केचिद्गंगायत्रपृथूदकम् ॥ बहिस्थौहिकृपद्रोणसुतौवीक्ष्यसुबुद्धयः ॥ १० ॥ पृथूदकस्थमध्यस्थंविविशुस्तेसुयोधनम् ॥ तदा
भीमोब्रवीद्वाक्यंभर्त्सयन्तमनेकधा ॥ ११ ॥ भीमउवाच ॥ रेरेशृगालसंत्रस्तःप्रविष्टोऽसिजलंकथम् ॥ घातयित्वागुरुंद्रोणं
भीष्मंचैवपितामहम् ॥ १२ ॥ कर्णंचैवमहावीरंभ्रातृन्दुःशासनादिकान् ॥ राज्यंकर्तुंहितेतृष्णाकथमद्यापिवर्त्तते ॥ १३ ॥
त्वंहिक्षत्रकुलेजातःसोमवंशेमहत्कुले ॥ कथंलज्जयसेमंदरणंत्यक्त्वाजलंगतः ॥ १४ ॥ क्षत्रियाणामयंधर्मोयाचितोदीयतेर
णः ॥ यशएवधनंतेषांनैवराज्यादिवांच्छया ॥ १५ ॥ निःसरत्वंमहामंदकुरूणांकुलभूषण ॥ ततोदुर्योधनोराजाहूयमानोज
लाशयात् ॥ १६ ॥ क्रुद्धोमंत्रजपंत्यक्त्वानिःससारमहाबलः ॥ आजगामरणंशीघ्रंसिंहवद्घ्नन्दन्बली ॥ १७ ॥ तदाकृष्णेन
धर्मेणसंस्तुतःकुरुनंदनः ॥ अमावास्यादिनेप्राप्तर्वज्रदेहोमहाबलः ॥ १८ ॥ दीर्घबाहुर्गदापाणिःप्रहृष्टोभीममब्रवीत ॥ १९ ॥
दुर्योधनउवाच ॥ भीमसेनमहाबाहोजरासंधस्त्वयाहतः ॥ भगदत्तोहतःशूरोव्यसुःकुंजरवाहकः ॥ हिडिंबस्तुमहावीरोना
नाशूरविमर्दनः ॥ २० ॥ कीचकोमेघनादश्चबांधवामेरणेहताः ॥ दुःशासनोमहावीरःशतभीमविमर्दनः ॥ २१ ॥ इदानींप
श्यमेबाह्वोर्बलमन्यैर्दुरासदम् ॥ गदाघातंमयामुक्तंसहस्वक्षणमेकतः ॥ २२ ॥ सिंहनादंचकाराथबाहुमास्फोट्यबाहुना ॥ ॥८२॥
भीमोऽपिसिंहवद्राजन्बाहुमास्फोट्यगर्जयन् ॥ २३ ॥ गदेचाक्षेपतौवीरौयुयुधातेपरस्परम् ॥ गदयोर्वैमहच्छब्दोबभूवगर्ज
यन्दिशः ॥ २४ ॥ उभौवज्रमयौदेहौगदाघातात्सुदारुणात् ॥ पावकस्यकणाराजन्उच्छलंतिसहस्रधा ॥ २५ ॥ पृथ्वीन

163

तोन्नतंयातितयोःपादप्रहारतः ॥ एकघातात्प्रहारौद्वौचक्रातेह्यतिलाघवात् ॥ २६ ॥ दुर्योधनोरणेक्रुद्धःप्रलयेकालसन्निभः ॥
भ्रामयित्वागदांघोरांजघ्नेभीमस्यवक्षसि ॥ २७ ॥ तद्घाताद्भीमसेनस्तुह्युत्तानःपतितोभुवि ॥ यावद्दारुहतोवृक्षोभीमस्यचसु
योधनः ॥ २८ ॥ सत्वरंतावदुत्तस्थौभीमःसंज्ञामवापसः ॥ स्वगदांभ्रामयित्वातुराज्ञोवक्षःसमाहनत् ॥ २९ ॥ तद्घाता
त्प्रतिघातेनगदाभीमकराद्गता ॥ आलोकितानचप्राप्ताभीमोऽन्यांजगृहेगदाम् ॥ ३० ॥ राज्ञादुर्योधनेनापिसापितंताडिताग
दा ॥ रेणुत्वंप्रापितासातुपुनरन्यांसमाददे ॥ ३१ ॥ सापिचूर्णत्वमापन्नाराज्ञासंताडितासती ॥ एवंगदाशतंभिन्नंराज्ञादुर्योध
नेनवै ॥ ३२ ॥ भीमस्यचमहाराजतदद्भुतमिवाभवत् ॥ ३३ ॥ इतिश्रीमहाभारतेभारतसारेगदापर्वणिभीमदुर्योधनयुद्धेद्वि
सप्ततितमोऽध्यायः ॥ ७२ ॥ त्रिसप्ततितमेध्यायेबलभद्रागमस्तथा ॥ भीतेभ्यःपाण्डवेभ्यश्चतस्यमानाप्तिरुच्यते ॥ १ ॥
वैशंपायनउवाच ॥ तदादुर्योधनोराजाजेष्याम्यद्यवृकोदरम् ॥ सिंहवद्यनदद्राजागदाघातैःसुदारुणैः ॥ २ ॥ भीमंसपीडया
मासगर्जंतंगर्जयन्दिशः ॥ भीमोऽपिगदयागुर्व्याभालदेशेनृपंतदा ॥ ३ ॥ जघ्नेदुर्योधनोराजानचकंपेजगर्जच ॥ एवंपरस्प
रंयुद्धंसंजातंरोमहर्षणम् ॥ ४ ॥ वेगतोहननाच्छब्दंगदाशब्दोऽन्यमाविशत् ॥ गदयोरुभयोःशब्दएकत्वंप्रापवेगतः ॥ ५ ॥
एवंयुद्धाच्चपूर्वंद्युर्नारदोऽगात्प्रभासकम् ॥ बलमागतमाज्ञायतस्मैचाकथयत्कथाम् ॥ ६ ॥ नारदउवाच ॥ भोभोराममहावी
रभिक्षुवद्भ्रमसेकथम् ॥ एहिशीघ्रंरणंपश्यभीमदुर्योधनार्दितम् ॥ ७ ॥ इतितस्यवचःश्रुत्वाबलोनारदमब्रवीत् ॥ द्रोणोभी
ष्मस्तथाकर्णोऽप्यन्येचैवमहाबलाः ॥ ८ ॥ तांस्त्यक्त्वाभीमसेनेनकथंराज्ञाचसंयुगम् ॥ नारदउवाच ॥ तेसर्वेविलयंनीताह
रिणाकालरूपिणा ॥ ९ ॥ एकोदुर्योधनोराजाहंतव्योऽस्तिवृकोदरात् ॥ हन्यमानंप्रभुंयुद्धेशत्रुभिःपरिवेष्टितम् ॥ १० ॥

नरक्षयतेवीरस्तमाहुर्ब्रह्मघातकम् ॥ इतितस्यवचःश्रुत्वाप्यगमत्क्रोधतोबलः ॥ ११ ॥ कुरुक्षेत्रंमहावेगंयुद्धभूमिंसमागतः ॥
समायांतंबलंदृष्ट्वापांडवाविस्मयान्विताः ॥ १२ ॥ अर्घ्यंदत्त्वाचसंस्तुत्यसक्रोधंयादवेश्वरः ॥ कृष्णादेशात्तदाधर्मोबलदेवमु
वाचह ॥ १३ ॥ धर्मउवाच ॥ यदुवंशप्रसूतानामस्माकंयदुनंदन ॥ स्नेहपाशोनिवर्त्तेतनचसर्वात्मनाक्वचित् ॥ १४ ॥ दुर्यो
धनस्यभीमस्ययुद्धकालेहलायुध ॥ एतदेवसमीचीनंयद्भवानागतस्त्विह ॥ १५ ॥ इतितस्यवचःश्रुत्वाबलोधर्ममुवाचह ॥ ना
रदादहमाश्रुत्यभीमदुर्योधनावुभौ ॥ १६ ॥ चक्रातेयुद्धमित्येततद्द्रष्टुंधर्मसमागतः ॥ वैशंपायनउवाच ॥ इत्येवमागतस्तत्र
स्थितःकृष्णसमीपतः ॥ १७ ॥ बलस्तंप्रहसन्प्राहकृष्णंकालात्मकंक्षितौ ॥ बलदेवउवाच ॥ कृष्णत्वंहिक्षितेर्भारमपोहयि
तुमुद्यतः ॥ १८ ॥ इतिवाचोऋषीणांयास्ताःसत्याहिकृतास्त्वया ॥ कथमल्पेनकालेनक्षयंनीताश्चकौरवाः ॥ १९ ॥ बलंयु
गसहस्रेणदेवैरपिसदुःसहम् ॥ २० ॥ इतिश्रीमहाभारतेभारतसारेगदापर्वणिबलभद्रागमनोनामत्रिसप्ततितमोऽध्यायः ॥
॥ ७३ ॥ चतुःसप्ततितमेध्यायेपातोदुर्योधनस्यच ॥ बलदेवस्यनिर्याणंद्वारकांप्रतिकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ बल
देवंवदंतंतंकृष्णोनोवाचसंस्मयन् ॥ स्मयमानंहरिंदृष्ट्वाबलोविस्मितमानसः ॥ २ ॥ इत्येवंबलदेवेतुस्थितेकृष्णसमीपतः ॥
तस्मिन्नेवक्षणेराजन्क्रोधाद्राजासुयोधनः ॥ ३ ॥ भ्रामयित्वागदांघोरांभीमंवक्षस्यताडयत् ॥ तद्घातात्धरणींप्राप्यनिश्चेष्टः
समपद्यत ॥ ४ ॥ तंपरासुंसमाज्ञायजितमित्यवदन्नृपः ॥ सुयोधनोमहावीरोमातृदृष्टात्मवैभवः ॥ ५ ॥ पांडवारुरुदुःसर्वेमृ
तकल्पंवृकोदरम् ॥ दृष्ट्वासंवेशयामासुर्हाहताःस्मेतिवादिनः ॥ ६ ॥ एवंतान्पांडवान्कृष्णोदृष्ट्वाशोकेनपीडितान् ॥ प्रोवाचप्र
हसन्वाक्यंशोकनाशोयथाभवेत् ॥ ७ ॥ श्रीकृष्णउवाच ॥ शृण्वंतुपांडवाःसर्वेधर्मराजपुरःसराः ॥ भीमोजीवतिपश्यंतुगदा

165

मादायचोत्थितः ॥ ८ ॥ वैशंपायनउवाच ॥ इतिकृष्णेवदत्येवंभीमोगर्जन्समुत्थितः ॥ गदामाविध्यसबलोदुर्योधनमथा
ह्वयत् ॥ ९ ॥ वीरागच्छकथंमांत्वंपातयित्वागमिष्यसि ॥ गदामोकंसहस्वादावित्युक्त्वाभ्रामयन्गदाम् ॥ १० ॥ पुनर्दुर्यो
धनोराजागदामुद्यम्यवेगतः ॥ दंतदंष्ट्राधरोवीरोरक्ताक्षश्चलितेंद्रियः ॥ ११ ॥ रणभूमिंगतोवीरःप्रोवाचभीममाहवे ॥ शीघ्रं
प्रहरकौंतेयस्कंधोऽस्तिपुरतस्तव ॥ १२ ॥ इतितस्यवचःश्रुत्वाभीमःक्रोधपरिप्लुतः ॥ गदयाताडयन्वीरंभूयःस्कंधेसुयोधन
म् ॥ १३ ॥ नचकंपेतदाराजापुष्पाहतइवद्विपः ॥ अकंपंतंसमालोक्ययराजानंहर्षसंयुतः ॥ १४ ॥ पुनर्भीमोगदाघातंचकार
ब्रह्मरंध्रके ॥ शिरस्त्राणंसमुकुटंचूर्णंकृत्वागदातदा ॥ १५ ॥ चूर्णीकृत्वाभवच्छीर्षेलग्नासान्नृपतेस्तदा ॥ पुनरन्यांगदांभीमो
जगृहेक्रोधसंयुतः ॥ १६ ॥ तदादुर्योधनोभीमंप्रोवाचभर्त्सयन्वचः ॥ नृपउवाच ॥ भोभोभीमत्वयामंदगदाघातोममोप
रि ॥ १७ ॥ क्षिप्तोस्कंधेतथाशीर्षेभ्रमोऽपिनाभवन्मम ॥ गदाघातंसहस्वैकमित्युक्त्वासिंहवन्नदन् ॥ १८ ॥ भ्रामयित्वाग
दांघोरांजघ्नेशीर्षेवृकोदरम् ॥ तद्घाताच्चूर्णतांप्राप्तौशिरस्त्राणावतंसकौ ॥ १९ ॥ शिरोऽपिभीमसेनस्यजर्जरंसमपद्यत ॥ जर्ज
रेशिरसिभीमोसमूर्च्छःपुनरासदत् ॥ २० ॥ वैशंपायनउवाच ॥ पतितंभीममालोक्यकृष्णःकरुणचेतनः ॥ करेधृत्वासमुत्था
ययुध्यस्वेतिसमादिशत् ॥ २१ ॥ प्राप्तसंज्ञोयदाभीमःप्रहारंकर्त्तुमिच्छया ॥ बभ्रामचगदांघोरांप्रतिघाताच्चशंकितः ॥ २२ ॥
भग्नगात्रःस्खलत्पादोभ्रमचित्तोवृकोदरः ॥ इत्थंविव्हलतांप्राप्तंप्रतिघातसहन्हरिः ॥ २३ ॥ दीनवच्चरणेश्वस्यदंतदष्ट्रंवृकोदर
म् ॥ विलोक्यसंज्ञयातस्मैकटिघातंसमादिशत् ॥ २४ ॥ कृष्णसंज्ञांसमाज्ञायजाताल्हादोवृकोदरः ॥ २५ ॥ जघानबलमा
श्रित्यचारुदेशेसुयोधनम् ॥ भग्नोरुर्धरणीपीठेपपातचसुयोधनः ॥ २६ ॥ हाहतोस्मिह्यहंचात्रकृष्णेनैवतुकेवलम् ॥ इत्येवं

पतितंवीरंपदाशीर्षेवृकोदरः ॥ २७ ॥ क्रोधाज्जद्वेचसर्वेषांपश्यतांचबलस्यच ॥ भीमस्यचानयंदृष्ट्वारक्तनेत्रोभवद्बलः ॥ २८॥
क्रोधपूर्णश्चलद्गात्रोहलमुद्यम्यचोत्थितः ॥ सिंहनादंतदाकृत्वाभीममाहूयतंबलः ॥ २९ ॥ प्रोवाचवचनंतत्रकौरवेंद्रस्यपश्य
तः ॥ पंचानामपियोभर्त्तानासौप्रकृतिमानवः ॥ ३० ॥ मावृकोदरपादेनएकादशचमूपतिम् ॥ शीर्षेकिंस्पृशसेमंदनास्तिजातः
कुयोनिकः ॥ ३१ ॥ कुयोधंकुत्सितंवक्ताकुयोनिनिरतःसदा ॥ इत्येवंरोषसंपूर्णबलंमत्वाहिसांत्वयन् ॥ ३२ ॥ मंदमूर्खवृ
थापुष्टबह्वाशिन्मानवर्जित ॥ भीमत्वंहिमहाराजंमानिनंमानदंनृणाम् ॥ ३३ ॥ नानावीरप्रहंतारंकिंपदास्पृशसेनृपं ॥ इत्ये
वंभर्त्सयन्भीमंतोषयन्बलमाहवे ॥ ३४ ॥ धर्मार्जुनयुतःकृष्णोबलभद्रमुवाचह ॥ श्रीकृष्णउवाच ॥ बलदेवसुवीरोऽसि
त्वत्पुरःपांडवास्तथा ॥ ३५ ॥ अहंयादवसंयुक्तस्तथायेभूतलेनराः॥ देवलोकेचयेदेवाःपुरंदरपुरस्सराः ॥ ३६ ॥ पातालेचत
थासर्पाःशेषाद्याविषसिंधवः ॥ विष्णुशंकरब्रह्माणोयेचान्येचमहाबलाः ॥ ३७ ॥ रणेस्थातुंनशक्तास्तेकथमेकोवृकोदरः ॥
इत्येवंसांत्वयन्वाक्यंबलमुक्त्वाहरिर्हसन् ॥ ३८ ॥ पांडवैःसहतोमूर्ध्नाबलस्यपादमग्रहीत् ॥ पादयोःपतितंकृष्णंब्रह्मादीना
मधीश्वरम् ॥ ३९ ॥ स्थित्युत्पत्तिविनाशानांकर्त्तारंलीलयाप्रभुम् ॥ विलोक्यहलमुत्तार्थकृष्णपादौननामसः ॥ ४० ॥ उत्था
प्यचतदावीरोलज्जायुक्तोबभूवह ॥ लज्जितंचसमाज्ञायमानीदुर्योधनोऽब्रवीत् ॥ ४१ ॥ दुर्योधनउवाच ॥ बलदेववृथावादं
माकुरुशृणुमेवचः ॥ काकादयःसमागत्ययथास्पृशंतिमस्तकम् ॥ ४२ ॥ तथायंभीमसेनोमेपदास्पृशतिमस्तके ॥ तमामंत्र्य
चकृष्णंचबलदेवोजगामह ॥ ४३ ॥ द्वारकांप्रतिराजेंद्रपांडवाहर्षसंयुताः ॥ कृष्णंप्रणेमुस्तेप्रीत्यापालिताःप्रभुणावयम् ॥
॥ ४४ ॥ इतिनानाविधैर्वाक्यैस्तुष्टुवुस्तंनरेश्वरम् ॥ ४५ ॥ इतिश्रीमहाभारतेभारतसारेगदापर्वणिदुर्योधनपतनंनामचतुः

सप्ततितमोऽध्यायः ॥ ७४ ॥ पंचसप्ततिमेऽध्यायेगांधार्याश्चविलापनम् ॥ अथभीमस्यचूर्णत्वंधृतराष्ट्रेणकथ्यते ॥ १ ॥
वैशंपायनउवाच ॥ जन्मेजयमहाराजकौरवाणांबलंतदा ॥ निर्नाथंभूयसंत्रस्तंजगामचदिशोदश ॥ २ ॥ दुर्योधनस्यपितरा
वागत्यपुत्रसन्निधौ ॥ रुरुदातेशपंतौतंपुत्रंपापमतिंतदा ॥ ३ ॥ भोपुत्रपापबुद्धेत्वंसाधून्पडियसेसदा ॥ तेनेमांभोदशांनीतो
देवेनपातितोरणे ॥ ४ ॥ उत्तिष्ठत्वंमहावीरगृहंयामोऽधुनावयं ॥ नागमिष्यसिचेत्तातनयास्मान्यत्रतेमनः ॥ ५ ॥ नयत्र
पुत्रतौवृद्धौत्यक्तुंनैवोचितोस्यलम् ॥ इत्येवंविलपंतौतौदृष्ट्वाधर्मजनार्दनौ ॥ ६ ॥ प्रश्रयावनतौतत्रगत्वावृद्धौचनेमतुः ॥
सांत्वयामासतुःसम्यग्भवंतःपुत्रकाइमे ॥ ७ ॥ पांडवाधरणीमेतांतवैवादेशसंयुताः ॥ भोक्ष्यंतेभवतादत्तांपोष्यादासा
स्तथैवच ॥ ८ ॥ अहंयादवसंयुक्तोदासोऽस्मितवमानद ॥ इतिसंतोष्यतौकृष्णःसर्वेषांचित्तहारकः ॥ ९ ॥ पुनःप्रोवा
चगांधारींदर्शयन्कौतुकंसुतान् ॥ उत्तिष्ठोत्तिष्ठगांधारिपुत्रशोकंचमाकुरु ॥ १० ॥ धर्मगेहेत्वमागच्छधर्मपुत्रंचपालय ॥
निवेशनंस्थितंतत्रभोजनंकुरुतत्रवै ॥ ११ ॥ त्वयिभुक्तेहिपश्चाद्वैभोजयिष्यंतिपांडवाः ॥ गांधार्युवाच ॥ नकरिष्याम्य
हंकृष्णभोजनंपतितेसुते ॥ १२ ॥ सर्वसंगंपरित्यज्यकाष्ठभक्ष्यंकरोम्यहम् ॥ एवमुक्त्वास्थितायावत्तावद्विस्तारिताक्षु
धा ॥ १३ ॥ कृष्णेनतत्परीक्षार्थंतद्देहेसासुवासिता ॥ पक्वापक्वफलैःकीर्णंबहुच्छायंसुविस्तरम् ॥ १४ ॥ ततोहिफल
भक्षार्थंग्रहणेच्छातयाकृता ॥ तयासंपीड्यमानातुक्षुधयाविव्हलीकृता ॥ १५ ॥ एतस्मिन्नंतरेकालेस्वाम्रमेकंददर्शसा ॥ त
त्फलंनिजहस्तेवैनस्पृशेद्व्यंगुलोन्नतम् ॥ १६ ॥ ततःसाचसमागत्वापुत्रोपरिफलेच्छया ॥ तथापिनस्पृशेद्धस्तेद्व्यंगुलोन्नतमे
वतत् ॥ १७ ॥ शतपुत्रैस्तयापंक्तिःकृतातस्यांसमाविशत् ॥ आम्रोनपश्यतेयावत्तावत्कृष्णःसमाययौ ॥ १८ ॥ श्रीकृष्ण

उवाच ॥ किमर्थमागतादेवित्वमुतभोजनंकुरु ॥ वासुदेवजराकष्टंकष्टाज्जीवश्वनिर्द्धनः ॥ १९ ॥ पुत्रशोकंमहाकष्टंकष्टात्कष्टव
तीक्षुधा ॥ कृतेह्यस्थिमयाःप्राणास्त्रेतायांमांससंश्रिताः ॥ २० ॥ मज्जाश्रिताद्वापरेचकलौचान्नमयाःस्मृताः ॥ तस्मादन्नमिदं
ब्रह्मनित्यंसेव्यंतुमानवैः ॥ २१ ॥ अन्नार्थंहिजनाःसर्वेकुर्वंतिपरसेवनम् ॥ घातपातादिकान्यान्यानधर्मांश्चभयंकरान् ॥२२॥
अन्नार्थंहिप्रकुर्वंतिमानवाभुविमानिनि ॥ इतितस्यवचःश्रुत्वागांधारीमानवर्जिता ॥ २३॥ धृतराष्ट्रंतुसंगृह्यगताधर्मनिकेतम् ॥
धृतराष्ट्रेणवीरेणभीमंलोहमयंतदा ॥ २४ ॥ बाहुभ्यांपीडितंज्ञात्वातद्दुःखंद्विगुणीकृतम् ॥ इतिकृत्वाततःकृष्णोमृतायेसंयुगेत
दा ॥ २५ ॥ दाहाद्युत्तरसंस्कारैःकारयामासपांडवैः ॥ कुरुक्षेत्रेतदाकृष्णःपांडवैर्जयसंयुतम् ॥ २६ ॥ स्थापयित्वाजयस्तंभं
तूर्यघोषपुरःसरम् ॥ सिंहासनेसमास्थाप्यवस्त्रालंकारभूषितम् ॥ २७ ॥ पांडवंधर्मराजानंकृतकृत्योऽभवत्तदा ॥ कृष्णःकम
लपत्राक्षःसर्वानाहूयपांडवान् ॥ २८ ॥ मंत्रयामाससर्वज्ञोमंत्रंधर्मपुरःसरम् ॥ २९ ॥ इतिश्रीमहाभारतेभारतसारेगदापर्व
णिपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ इतिगदापर्वसमाप्तम् ॥ ॥ अथस्त्रीपर्वआह ॥ षट्सप्ततितमेऽध्यायेकुरुस्त्रीणां
विलापनम् ॥ द्रौपदीपुत्रनाशश्चह्यश्वत्थाम्नेहकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ तान्दृष्ट्वाशरसंभिन्नान्त्रुटितानप्यनेकधा ॥
तेषांस्त्रियोरुदंत्यस्ताःसमाजग्मुःस्वभर्तृकान् ॥ २ ॥ समालिंग्यस्वभर्तृणांकायान्छिन्नाननेकधा ॥ रुरुदुःसुस्वरंराजन्हाह
ताःस्मभृशंप्रभो ॥ ३ ॥ एवंविलप्यताःसर्वाःकाष्ठराशिंविरच्यतुः ॥ आत्मानंदाहयामासुःस्वभर्त्राचविशांपते ॥ ४ ॥ अद
ग्धान्दाहयामासकृष्णःसर्वांश्चपांडवैः ॥ श्वापदैर्भक्षितंसैन्यंनिशायांकौरवंकियत् ॥ ५ ॥ ॥ इतिस्त्रीपर्वसमाप्तम् ॥ ॥
अथसौप्तिकपर्वआह ॥ वैशंपायनउवाच ॥ पतितोयत्रराजावैभग्नगात्रःसुयोधनः ॥ अपश्यदश्वत्थामानंरणमध्येसमागतम् ॥

॥ ६ ॥ तमाहूयाब्रवीद्वाक्यंराजादुर्योधनस्तदा ॥ दुर्योधनउवाच ॥ नकोऽपिपांडवोविप्रदृष्टोरणहतोमया ॥ ७ ॥ तेनमेदुःखि
ताःप्राणाःप्रयांतिगुरुपुत्रक ॥ अश्वत्थामोवाच ॥ तवप्राणाःसुखंयांतुघातयेपंचपांडवान् ॥ संगरेहन्मिराजेंद्रसत्यंसत्यंवचोमम॥
॥ ८ ॥ इत्युक्त्वाह्यागतोविप्रोवीणकेधर्मजस्यच ॥ सच्छिद्रंवीणकंदृष्ट्वासुप्तान्हत्वाहिबालकान् ॥ ९ ॥ शिरांसितान्गृही
त्वातुह्यागतोनृपसन्निधौ ॥ शिरांसितान्प्रदृष्ट्वासमृतोराजासुयोधनः ॥ १० ॥ एतस्मिन्समयेराजन्प्रबुद्धाद्रौपदीतदा ॥ नि
जबालान्हतान्दृष्ट्वाहाहाःकारमथाकरोत् ॥ ११ ॥ द्रौपदीरोदनंश्रुत्वाउत्थिताःपांडवास्तदा ॥ पांडवाउचुः ॥ केनैतच्चकृ
तंकर्मकेनवाघातिताःसुताः ॥ १२ ॥ इतितेषांवचःश्रुत्वाकृष्णेनकथितंतदा ॥ अश्वत्थाम्नाहताःपुत्राद्रौपद्याःपंचधर्मजाः ॥
॥ १३ ॥ इत्युक्त्वाकृष्णपार्थौचगतौगुरुसुतंप्रति ॥ आगतौतौतदादृष्ट्वाचाश्वत्थामामुमोचह ॥ १४ ॥ वधायतत्रपार्थायशरं
नारायणाभिधम् ॥ पार्थेनापितदस्त्रंहिनारायणशरेणवा ॥ १५ ॥ स्वकीयेनतदाराजन्संवृतंकृष्णवाक्यतः ॥ पश्चात्पलायि
तोविप्रोनिःशस्त्रस्तत्रसंगरे ॥ १६ ॥ रथस्थौकृष्णपार्थौचपृष्ठलग्नौचजग्मतुः ॥ दशशतपदेपश्चात्गृहीतोगुरुपुत्रकः ॥ १७ ॥
कृष्णेनकथितंपार्थघातयस्वहिदुष्टकम् ॥ हंतारंबालकानांचस्त्रीणांविश्वासनाशनम् ॥ १८ ॥ साधूनांघातकोयस्तुतस्यघातेन
दूषणम् ॥ इतिकृष्णवचःश्रुत्वाफाल्गुनस्तमुवाचह ॥ १९ ॥ पार्थउवाच ॥ एवंकर्मकृतंनिंद्यमस्माभिर्मधुसूदन ॥ राज्यभो
गायलोभाययद्द्रोणःसंगरेहतः ॥ २० ॥ द्वितीयंहिकथंकर्मकुत्सितंविप्रघातनम् ॥ गुरुपुत्रंवदस्वामिन्कथमत्रविनाशये ॥२१॥
एवमुक्त्वातुपार्थेनच्छिन्नातस्यशिखातदा ॥ तत्रत्यंमणिमादायचागताःस्वस्यवीणके ॥ २२ ॥ पूर्ववृत्तांतमावेद्यद्रौपद्यैह्यर्पि
तोमणिः ॥ २३ ॥ इतिश्रीमहाभारतेभारतसारेसौप्तिकपर्वणिअश्वत्थाम्नोमणिहरणंनामषट्सप्ततितमोऽध्यायः ॥ ७६ ॥

॥ इतिसौप्तिकपर्वसमाप्तम् ॥ ॥ अथशांतिपर्वआह ॥ ॥ सप्तसप्ततितमेऽध्यायेपांडवानांचपृच्छताम् ॥ सदसिनिस्तृ
तंज्ञानंभीष्मस्यास्याच्चकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ एवंकार्यंचसंपाद्यकृष्णःकमललोचनः ॥ पांडवान्शांतिशिक्षार्थमान
यद्भीष्मसंनिधौ ॥ २ ॥ भीष्मंगत्वातुसंतोष्यमधुरैर्वाक्यजल्पकैः ॥ संवेक्ष्यचस्थिताःसर्वेसेवांचक्रुःसमाहिताः ॥ ३ ॥ ता
नुवाचहिधर्मात्माभीष्मोवैवदतांवरः ॥ भीष्मउवाच ॥ किमर्थमागतंधर्मकिंपृष्टंममसंनिधौ ॥ ४ ॥ तवास्तिकोऽपिसंदेहःस
मीपेमधुसूदने ॥ यद्यागतोऽसिधर्मात्मन्कृष्णभक्त्यावदध्रुवम् ॥ ५ ॥ धर्मशृणुहिमेवाक्यंशांतिमार्गेमनःकुथाः ॥ प्रपंचोनि
ष्फलोनृणांदारापुत्रधनादिकम् ॥ ६ ॥ मृगतृष्णासमंराज्यंस्वप्नमायाहिधर्मज ॥ तस्मात्त्वंसमचित्तःसन्प्रपंचस्थोहरिंभज ॥
॥ ७ ॥ भुक्तिदंसर्वजीवानांमुक्तिदंसुखदंनृणाम् ॥ यस्यसेवाकृतापुंसाशुद्धेनमनसातदा ॥ ८ ॥ ददातिसर्वसंपत्तिंसुखमव्यय
माधिहन् ॥ अतःपरंधर्मराजमदुक्तंवचनंकुरु ॥ ९ ॥ पूर्णब्रह्मस्वरूपोयंकृष्णस्तवसमीपगः ॥ कर्त्तापालयितादेवोहर्त्ताचायं
व्यवस्थितः ॥ १० ॥ सनकाद्याब्रह्मपुत्रामानसाश्चोर्द्ध्वरेतसः ॥ ज्ञाततत्त्वाश्चऋषयोधर्मशीलाजितेंद्रियाः ॥ ११ ॥ तथादेव
गणाःसर्वेमर्त्यलोकेचमानवाः ॥ पातालेपन्नगाःसर्वेदैत्यदानवराक्षसाः ॥ १२ ॥ एवंध्यायंतितेसर्वेज्ञात्वासर्वेश्वरेश्वरं ॥ हर
ब्रह्मस्वरूपोऽयंसृष्टिसंहारकारणम् ॥ १३ ॥ तस्मात्सर्वप्रयत्नेनकृष्णंभजमहामते ॥ अस्मादनन्यंचैवास्तिस्थावरंचरमेवच
॥ १४ ॥ नस्थूलोऽयंनाणुरयंनह्रस्वोयमदीर्घकः ॥ अक्लेद्योऽयमभेद्योऽयमानंदेतियमावदन् ॥ १५ ॥ तस्मात्कोपिनजा ॥८६॥
नातिपरमात्मानमव्ययम् ॥ अनेनानुग्रहोमेऽद्यकृतःकिंवच्मितेधुना ॥ १६ ॥ क्षत्रियंमांसमाज्ञायक्षत्रसामर्थ्यमर्पितम् ॥
अनेनैवमहाराजप्रभुंक्ष्वभुवनत्रयं ॥ १७ ॥ ख्यातिंनीतोधर्मराजकिंवदामिपुरस्तव ॥ स्वप्रतिज्ञांविहायाशुमदीयांपालय

न्प्रभुः ॥ १८ ॥ स्वदत्तेनचवीर्येणसंतोषंप्रापसत्वरम् ॥ मुक्तिंदातुंस्थितश्चाग्रेहृदयेनजनेस्थितः ॥ १९ ॥ इतिश्रीमहाभा
रतेभारतसारेशांतिपर्वणिभीष्मोपदेशोनामसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ इतिशांतिपर्वसमाप्तम् ॥ ॥ अथानु
शासनपर्वआह ॥ ॥ अष्टसप्ततितमेध्यायेप्रजाधर्मेणपालयन् ॥ धर्मोराज्यंचकारात्रभ्रातृभिस्तत्तुवर्ण्यते ॥ १ ॥ वैशं
पायनउवाच ॥ ॥ शांतिंवैकथयित्वातुपांडवेभ्यस्ततःपरम् ॥ शासनंकथ्यतेराजंस्तेनभीष्मेणधीमता ॥ २ ॥ भी
ष्मउवाच ॥ ॥ अतःपरंधर्मराजकृष्णस्यैवप्रसादतः ॥ वैकुंठंगंतुकामोऽहंमदीयंशासनंकुरु ॥ ३ ॥ पूजोपहारमा
नीयमदग्रेस्थापयाधुना ॥ कृष्णंसंस्थाप्यमांदृष्ट्वापूजयैनंममाज्ञया ॥ ४ ॥ तस्यपादच्युतैस्तोयैर्मांत्वंस्नापयधर्मज ॥ कृ
ष्णपूजावशिष्टेनपूजाद्रव्येणपावये ॥ ५ ॥ शरशय्यागतंमांत्वंभूमावुत्तार्यपूजय ॥ विप्रानाहूयसंपूज्यपूजयेद्विधिपूर्वतः ॥
॥ ६ ॥ विप्रेषुपूजितेष्वेवविष्णुःसंतुष्टएवसः ॥ कार्तिकस्यसितेपक्षेएकादश्यांविशेषतः ॥ ७ ॥ विष्णुपूजाप्रकर्त्तव्याकर्त्तव्यं
विप्रपूजनम् ॥ भोजनीयास्तुतेयेवैभोजनायसमागताः ॥ ८ ॥ वेदपाठःप्रकर्त्तव्यःपाठःपौराणिकस्तथा ॥ गीतासहस्रा
भिधानंपठितव्यंसमाहितैः ॥ ९ ॥ श्राव्याहरिकथासर्वैर्दानंदेयंद्विजातये ॥ एकादशींसमारभ्ययावद्राकादिनंभवेत् ॥१० ॥
तावन्महोत्सवःकार्यःसर्वैश्चमुक्तिलिप्सुभिः ॥ जयकृष्णेतिसंवाच्यंसर्वैर्मृत्युतलस्थितैः ॥ ११ ॥ एवंराकादिनस्यांतेमुक्तिं
यास्यामिनिश्चितम् ॥ भवद्भिरपिराजेंद्रकृष्णःसेव्योनिरंतरम् ॥ १२ ॥ मुक्तिदोभवतामेषराज्यदाताचयादवः ॥ जयदःस
त्यपालोऽयमुद्धरिष्यतिनान्यथा ॥ १३ ॥ अनुशासनमेतत्तेकथितंभक्तिपूर्वतः ॥ अंतेमेनशनंचास्तिमौनमेवंधराम्यहम् ॥
॥ १४ ॥ इत्युक्त्वाभीष्मदेवस्तुमौनंचकृतवान्दृढम् ॥ तदाधर्मादयःसर्वेजयकृष्णेतिचावदन् ॥ १५ ॥ कृष्णंचपरमंज्ञात्वा

विष्णुनेमुःप्रहर्षिताः ॥ इतितस्यवचःश्रुत्वासर्वेसंपाद्ययत्नतः ॥ १६ ॥ कुरुक्षेत्रेस्थितोधर्मःश्रीकृष्णसंयुतस्तदा ॥ एतस्मि
न्समयेराजन्देशभागानददौहरिः ॥ १७ ॥ भीमादीन्पुरतःकृत्वायथायोग्यंविभज्यच ॥ विभागसमयेराजन्भीमार्जुन
पुरःसराः ॥ १८ ॥ स्पर्द्धांतुचक्रिरेतत्रलोभमोहसमाश्रिताः ॥ युद्धंकृतंमयासम्यक्नान्यैर्मिथ्याभिगर्जकैः ॥ १९ ॥ प्रत्येकं
प्रवदंतस्तेक्रोधपूर्णास्तुपांडवाः ॥ प्रत्येकंयुद्धमिच्छंतोप्यन्योन्यंमत्सरान्विताः ॥ २० ॥ स्पर्द्धंतस्तान्समाज्ञायपांडवान्मद
दर्पितान् ॥ तेषामुत्तारयन्गर्वंप्रोवाचसंहसन्हरिः ॥ २१ ॥ श्रीकृष्णउवाच ॥ भीमार्जुनमुखावीराःकृतयुद्धारणांगणे ॥
आगच्छंतुमयासार्द्धंवर्वरीकंममाज्ञया ॥ २२ ॥ युद्धावलोकनार्थंहिभवतांस्थितएवसः ॥ यथायैर्यादृशंयुद्धंकृतंस्यात्तुतथैवतु
॥ २३ ॥ यथार्थसत्यवादित्वाद्वदिष्यतिनचान्यथा ॥ इतिकृष्णवचःश्रुत्वाभीमसेनपुरःसराः ॥ २४ ॥ जग्मुःकृष्णेनसहि
तायत्रभीमसुतोबली ॥ तत्रगत्वाहरिर्वाक्यंप्रोवाचभीमनंदनम् ॥ २५ ॥ श्रीकृष्णउवाच ॥ वर्वरीकमहावीरपांडवानांजय
प्रद ॥ आत्मनोनाशमापद्यपित्रेराज्यंहिदत्तवान् ॥ २६ ॥ अस्माकंपृच्छतांतस्यतद्वदस्वनचान्यथा ॥ मासिमासिरजस्त्री
णांयोनौवहतिशोणितं ॥ २७ ॥ पिबंतिपितरस्तस्यविवादेयोऽनृतंवदेत् ॥ इतितस्यवचःश्रुत्वावर्वरीकोऽवदद्धसन् ॥ २८ ॥
वर्वरीकउवाच ॥ कृष्णकृष्णाप्रमेयात्मन्नाथदुष्टनिबर्हण ॥ कृत्यायुतंमयादृष्टंचक्रंतवसुदर्शनम् ॥ २९ ॥ वीराणांछेदकंत्तत्तु
कृत्यातेषांतुभक्षिका ॥ उभयोर्बलयोर्मध्येनान्यदृष्टंविनाशनम् ॥ ३० ॥ वीराणांभूरिभाराणांहंत्रीसंयोजितात्वया ॥ चक्रमे
वमयादृष्टंनाथदुष्टविनाशकम् ॥ ३१ ॥ तातादयोमहावीराउभयोःसैन्यसंगरे ॥ गर्जंतोक्षेपणार्थायनाचलज्जवमात्रकम् ॥
॥ ३२ ॥ इत्थमावेदयंतंतंपुत्रंभीमःपदाऽहनत ॥ समुद्रेक्षेपणार्थायनाचलज्जवमात्रकम् ॥ ३३ ॥ कृष्णोगृहीत्वाहस्ताभ्यांत ॥८७॥

173

च्छिरःपरमाद्भुतम् ॥ वर्वरीकस्यराजेंद्रस्वल्पहास्यसमन्वितम् ॥ ३४ ॥ तन्मुखान्निःसृतंतेजःकृष्णस्यमुखमाविशत् ॥ पश्चा
त्तुतच्छिरोरम्यंचलत्कुंडलमंडितम् ॥ ३५ ॥ प्राक्षिपत्गगनेकृष्णोभूषणायहरस्यच ॥ ततःकृष्णंमहादेवंस्वेषांविक्रमदंप्रभु
म् ॥ ३६ ॥ मन्यमानास्तदासर्वेभीमार्जुनपुरःसराः ॥ अस्पर्द्धतोगर्वहीनाबभूवुःशांतचेतसः ॥ ३७ ॥ कृष्णमेवंप्रशंसंतस्त
द्वत्तंदेशमाददुः ॥ एतदंतेतदाभीष्मोवैकुंठंगंतुमुद्यतः ॥ ३८ ॥ प्राप्तेराकादिनेकृष्णोविमानंसमुपाव्हयत् ॥ तत्रस्थित्वागतो
भीष्मोवैकुंठंचातिनिर्मलम् ॥ ३९ ॥ ततःकृष्णश्वविश्वात्मासर्वान्संगृह्यपांडवान् ॥ जगामहस्तिनपुरंपताकामंदिरान्वितम्
॥ ४० ॥ तत्रगत्वाधर्मराजंसंस्थाप्यचवरासने ॥ ब्राह्मणैर्वेदशास्त्रज्ञैःस्नातकैर्विविधैर्विभुः ॥ ४१ ॥ अभिषेकंचकाराथतूर्य
घोषसमन्वितम् ॥ नार्योवर्द्धापयामासुर्नृपतिंधर्मनंदनम् ॥ ४२ ॥ पतिपुत्रयुतास्ताश्चननृतुर्वारयोषितः ॥ एवंमहोत्सवंकृ
त्वाराज्येसंस्थाप्यधर्मजम् ॥ ४३ ॥ कृतकृत्यंसआत्मानंमेनेकृष्णस्तदानृप ॥ एवंसंहृत्यभूभारंराज्यंनिष्कंटकंददौ ॥ ४४ ॥
धर्मायधर्मपालोऽयंविष्णुःसर्वगुहाशयः ॥ कुंतींचद्रौपदींदेवीमुत्तरांधर्ममेवच ॥ ४५ ॥ गांधारींधृतराष्ट्रंचसर्वांस्तोष्यपृथक्
पृथक् ॥ जगामद्वारकांराजन्कृष्णःस्नेहपरिप्लुतः ॥ ४६ ॥ तत्रगत्वामहाविष्णुर्मायाकपटमानवः ॥ वसुदेवोग्रसेनाग्रेकथया
मासतांकथाम् ॥ ४७ ॥ वैशंपायनउवाच ॥ हस्तिनापुरमध्यस्थोराजाधर्मःप्रतापवान् ॥ इंद्राद्यैःपूज्यतेनित्यंकिंपुनर्मनुजैर
पि ॥ ४८ ॥ धर्मेणपालयन्नुर्वीराज्यंचक्रेयुधिष्ठिरः ॥ ४९ ॥ इतिश्रीमहाभारतेभारतसारेअनुशासनपर्वणियुधिष्ठिरराज्या
भिषेकोनामअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ऊनाशीतितमेध्यायेऽन्यायेनद्रव्यसंचयः ॥ कुरूणामिवऐश्वर्यंहंतीतिह्युच्य
तेऽधुना ॥ १ ॥ वैशंपायनउवाच ॥ भूतलेयेमहावीरावीर्यसैन्यसमावृताः ॥ अक्षौहिणीनांदशकंचाष्टौहत्वाचकेशवः ॥ २ ॥

धर्मायधर्मपुत्रायराज्यंनिष्कंटकंददौ ॥ इत्येवंमनसिध्यात्वाभयात्तस्यकरंददौ ॥ ३ ॥ एवंदासावदंतस्तेप्रणेमुस्तस्यपंकज
म् ॥ जन्मेजयउवाच ॥ एतादृशामहावीराविष्णुनादत्तविक्रमाः ॥ ४ ॥ स्वमृत्युंकथयित्वातुकथंमृत्युवशंगताः ॥ दुर्योधनो
महावीरोवीरैश्चपरिवेष्टितः ॥ ५ ॥ सोपिनाशंकथंप्राप्तःकथयस्वमहामुने ॥ कथंदुर्योधनोराजाभीमेनैवनिपातितः ॥ ६ ॥
यादृशंभीमसेनस्यबलंदुर्योधनस्यच ॥ दिवाशायीचनैवाऽसौनरात्रौदधिभोजनः ॥ ७ ॥ सगर्भिणींनैवगंतानचगंतारजस्व
लाम् ॥ नित्यंसंध्यात्रयंराजन्नकरोतिसकथंमृतः ॥ ८ ॥ रथेरथसमोवाजिप्रमाणेनसमानकः ॥ ईदृशोहिमहावीरःकथंमृत्यु
वशंगतः ॥ ९ ॥ वैशंपायनउवाच ॥ पावनंसर्ववीराणांशूराणांपौरुषप्रदम् ॥ कुरुक्षेत्रंहिराजेंद्रदीक्षितोऽभूद्युधिष्ठिरः ॥ १०॥
पांडवानांचविजयंकौरवाणांपराजयम् ॥ इतिवेदंपठंतिस्मशूराःसंग्रामयज्ञके ॥ ११ ॥ वेदींकृत्वाकुरुक्षेत्रंयूपंकृत्वाजनार्दनम्
दुर्योधनंपशुंकृत्वाहूयतेराजशोणितम् ॥ १२ ॥ अष्टादशाक्षौहिणीनांशोणितंहूतद्रव्यकम् ॥ तद्यागिकमिदंसर्वंस्वाहास्वधा
विवर्जितम् ॥ १३ ॥ एवंकृत्वातुकृष्णेनकृतसंग्रामसंज्ञकः ॥ धर्मोजयतिनाधर्मःसत्यंजयतिनानृतम् ॥ १४ ॥ क्षमाजयति
नक्रोधोविष्णुर्जयतिनासुरः ॥ धर्मेणैवस्थितंराज्यंधर्मेणैवस्थितंकुरु ॥ १५ ॥ अधर्मनिरतायेवैनपश्यंतिचिरान्नृप ॥
ब्राह्मणेषुचयेशूराःस्त्रीषुबालेषुगोष्वथ ॥ १६ ॥ फलानिवृंततोयद्वत्तद्वत्तेहिपतंतिवै ॥ पापद्रव्येनपुष्टानिवाहनान्यायुधानिच
॥ १७ ॥ युद्धकालेविशीर्यंतेवायुनाचवनायथा ॥ नविषंविषमित्याहुर्ब्रह्मस्वंविषमुच्यते ॥ १८ ॥ विषमेकाकिनंहंतिब्रह्म
स्वंपुत्रपौत्रकम् ॥ १९ ॥ क्रुद्धैर्द्विजैःकृतमपेयजलंसमुद्रेनारायणोपिनिहतःसकलत्रपौत्रः ॥ उन्मीलितेनदिविदेववरस्यलिंगं
कोब्रह्मशापनिरतोनिधनंनयाति ॥ २० ॥ ब्रह्महत्यादिपापानांस्मरणात्क्षयकारकम् ॥ सारमेतन्मयाख्यातंनिर्मथ्यभारतो

दधिम् ॥ २१ ॥ इतिश्रीमहाभारतेभारतसारेअनुशासनपर्वणिएकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ इत्यनुशासनपर्वस
माप्तम् ॥ अथअश्वमेधपर्वआह ॥ अशीतितमअध्यायेगोत्रहत्यानिवृत्तये ॥ राजसूयेधर्मकृतेव्यासागमनमुच्यते ॥ १ ॥ वैशंपाय
नउवाच ॥ एवंपापान्महाराजकौरवाःक्षयमागताः ॥ पांडवावर्द्धितास्तत्रपुण्येनहरिसेवनात् ॥ २ ॥ जन्मेजयउवाच ॥ कथंयुधिष्ठिरः
पूतोममपूर्वपितामहः ॥ हयमेधंक्रतुवरंचक्रेबंधुभिरन्वितः ॥ ३ ॥ वैशंपायनउवाच ॥ शृणुराजन्प्रवक्ष्यामिधर्मराजस्यचोदितम् ॥
दिवंपितामहेयातेधर्मपुत्रोऽतिदुःखितः ॥ ४ ॥ शुशोचभृशदुःखार्तोहत्वाद्रोणमुखान्गुरून् ॥ यदृच्छयाचसंप्राप्तंव्यासंपप्रच्छसाद
रं ॥ ५ ॥ केनोपायेनमेब्रह्मन्गोत्रक्षयकृतंभयम् ॥ सर्वविनाशमाप्नोतितन्मेब्रूहितपोधन ॥ ६ ॥ व्यासउवाच ॥ अश्वमेधंक्रतुवरंयज
स्वकुरुनंदन ॥ रामेणापिपुरावीरहयमेधत्रयंकृतम् ॥ ७ ॥ यज्ञंकृत्वातथावीरराज्यंपालयमारिष ॥ एतच्छ्रुत्वावचस्तस्यव्या
सस्यामिततेजसः ॥ ८ ॥ उवाचदीनयावाचाधर्मपुत्रोयुधिष्ठिरः ॥ नवित्तंविद्यतेमह्यंनसहायाश्चकेचन ॥ ९ ॥ व्यासउवाच ॥
मरुत्तेनकृतोयज्ञोबहुदत्तंधनंद्विजैः ॥ त्यक्तंतद्विपुलंभूमौकांचनंनृपनंदन ॥ १० ॥ हिमाचलेतिष्ठतितत्पतितंत्वंसमानय ॥
युधिष्ठिरउवाच ॥ धन्योऽसौमरुत्तोराजायेनयागस्तथाविधः ॥ ११ ॥ कृतोबहुसुवर्णाढ्योयत्रविप्राःसुतर्पिताः ॥ त्यक्त्वा
सुवर्णंगच्छंतुकथंतदहमानये ॥ १२ ॥ ब्राह्मणानांविशेषेणवित्तंकष्टतरंमम ॥ एकंचपापमेवास्तियन्मयाबांधवाहताः ॥ १३ ॥
द्वितीयेषाचमहतीब्रह्मवित्तमिहानये ॥ व्यासउवाच ॥ यदात्यक्तंधनंतैर्हिस्वामित्वंनैवविद्यते ॥ १४ ॥ रामेणापिपुरादत्ताक
श्यपायमहात्मने ॥ दैत्यैर्धराजिताचेयंपुनःसाक्षत्रियैर्जिता ॥ १५ ॥ गतंस्वाम्यंचविप्राणांतस्माद्दोषोनविद्यते ॥ यदायेनध
राप्राप्तातद्धनंतस्यवैतदा ॥ १६ ॥ धर्मउवाच ॥ ब्राह्मणाःकतिसंख्याकादक्षिणाकीदृशीकृतौ ॥ हयश्चकीदृशोभव्यस्तन्मेग

दितुमर्हसि ॥ १७ ॥ व्यासउवाच ॥ द्विजाविंशतिसाहस्राःप्रत्येकंदक्षिणांशृणु ॥ एकोगजोरथश्चैकोहयश्चैकःसकांचनः ॥
॥ १८ ॥ प्रत्येकंगोसहस्रंचरत्नपुष्पंसुपूजितम् ॥ भारश्चकांचनस्यैकःप्रदेयादक्षिणामखे ॥ १९ ॥ दक्षिणाकथिताराजन्तुरं
गंकथयामिते ॥ श्यामकर्णचशुभ्रंचपीतपुच्छंतथासितम् ॥ २० ॥ चैत्रमासस्यराकायांमोच्योऽयंतुरगोनृप ॥ वर्षमात्रंरक्षणी
यःसर्वैर्योधैर्महाबलैः ॥ २१ ॥ पुत्रंवाबांधवंशूरंरक्षणायनियोजयेत् ॥ स्वयंयःकुरुतेयज्ञमसिपत्रव्रतंचरेत् ॥ २२ ॥ हयःपु
रीषंमूत्रंवाकुरुतेयत्रतत्रहि॥गोसहस्रंप्रदेयंचकर्त्तव्यंहवनंद्विजैः ॥२३॥ ललाटेतुरगस्यापिपत्रंसंलेख्यकांचनम् ॥ बध्वास्वना
मसंयुक्तंकथनीयमिदंतदा ॥ २४ ॥ मयायंतुरगोमुक्तःकश्चिद्गृण्हातुचेद्बली ॥ मोचयिष्यामितंजित्वासत्यंसत्यंवचोमम ॥२५॥
अनेनविधिनावीरक्रतुरेषःप्रजायते ॥ असिपत्रव्रतयुतोबहुपुण्यफलप्रदः ॥ २६ ॥ सहायास्तेहिराजेंद्रकृष्णभीमयमार्जुनाः ॥
सर्वथायंमहाराजसाधनीयःक्रतुस्त्वया ॥ २७ ॥ हयस्तुविद्यतेराजन्पुरींभद्रावतींप्रति ॥ यौवनाश्वेनवीरेणरक्षमाणोनिरंतर
म् ॥ २८ ॥ अक्षौहिणीभिर्दशभिःपाल्यतेधर्मनंदन ॥ इतिव्यासोदितंश्रुत्वाभीमोवचनमब्रवीत् ॥ २९ ॥ भीमउवाच ॥
अहंतुरंगंतुबलादानयिष्यामिमानद ॥ एकाकीतत्रयास्यामिजित्वातंबलिनंनृपम् ॥ ३० ॥ वासुदेवंचिंतयानोनरःकर्मकरो
तियः ॥ सर्वथासिद्धिमाप्नोतिनात्रकार्याविचारणा ॥ ३१ ॥ वासुदेवमनादृत्यतपोयज्ञादिकंचयत् ॥ निष्फलंजायतेसर्वं
यथाभाग्यस्यचेष्टितम् ॥ ३२ ॥ नानयेतुरगंचाहंगतिंघोरामवाप्नुयाम् ॥ इत्युक्तेभीमसेनेतुधर्मःप्रोवाचहर्षितः ॥ ३३ ॥ ॥८९॥
धर्मउवाच ॥ कथमेकोहिसंयासिपुरींभद्रावतींप्रति ॥ यौवनाश्वोमहाराजाबलिनस्तस्यसेवकाः ॥ ३४ ॥ तांस्त्वंजित्वारणेदु
ष्टान्कथमत्रानयिष्यसि ॥ दुर्ग्राह्योस्तिहयोनित्यंकथमत्रागमोभवेत् ॥ ३५ ॥ इत्युक्तेधर्मराजेतुव्यासोवचनमब्रवीत् ॥ व्यास

उवाच ॥ स्मरणाद्वासुदेवस्यसर्वंकार्यंभविष्यति ॥३६॥ तस्मात्त्वंधर्मराजत्वंवासुदेवंस्मराधुना ॥ इत्युक्त्वाचतदाव्यासोजगाम
स्वंनिकेतनम् ॥३७॥ गतेव्यासेतदाधर्मःसस्मारमनसाहरिम् ॥ धर्मउवाच ॥ हानिमग्नोऽस्मिगोविंदगोत्रवध्वार्णवेधुना ॥३८॥
कथंयज्ञंकरिष्यामिनागमिष्यसिचेत्प्रभो ॥ एतावदुक्त्वावचनंपुनःकृष्णकथामृतम् ॥३९॥ यावत्स्मरतिगोविंदंतावत्सोऽपिस
मागतः ॥ वैशंपायनउवाच ॥ तमागतंसमाज्ञायपांडवाहर्षनिर्भराः ॥ ४० ॥ यथायोग्यंसमालिंग्यस्वंस्वंकुशलवादिनः ॥ श्रीकृ
ष्णउवाच ॥ पृच्छामित्वांधर्मराजकिमर्थंभयविह्वलः ॥४१॥ करोषिहयमेधंहिघातयित्वारणेगुरून् ॥ मन्यसेपातकंजातमात्म
नस्तुकथंवरम् ॥ ४२ ॥ प्रददातुचतत्सर्वंमत्करेकिल्बिषंनृप ॥ नाशयिष्येखिलंपापंप्रीतस्तिष्ठतुधर्मजः ॥ ४३ ॥ भीमउवाच ॥
स्वकरेपातकंस्वामिन्स्वल्पंचबहुलंभवेत् ॥ तस्माद्यज्ञंहिकृत्वाशुकरेतेचार्पयेत्फलम् ॥ ४४ ॥ इतितस्यवचःश्रुत्वाकृष्णःसं
प्रीतमानसः ॥ तुरगानयनेराजन्भीमसेनमथादिशत् ॥ ४५ ॥ वृषकेतुर्मेघवर्णोभीमसेनोमहाबलः ॥ त्रयस्तेनिर्गताराजन्वा
सुदेवानुमोदिताः ॥ ४६ ॥ जग्मुस्तेनिर्भयास्तत्रपुरींभद्रावतींप्रति ॥ संप्राप्तास्तेपुरींराजन्यौवनाश्वेनपालिताम् ॥ ४७ ॥
तत्रगत्वाबहिर्देशेपर्वतोपरितेस्थिताः ॥ भीमउवाच ॥ त्रयोवयंपर्वतेऽस्मिंस्तावत्तिष्ठामपुत्रकाः ॥ ४८ ॥ यावदागम्यतेचात्र
तुरंगश्चाश्वमेधिकः ॥ आगतोतुरगेपश्चाद्ग्रहित्वायामनिश्चितम् ॥ ४९ ॥ एवंवदतिभीमेतुतावदश्वःसमागतः ॥ पूजितःस
र्वगात्रेषुमहाभटसमावृतः ॥ ५० ॥ तमायांतंसमालोक्यमेघवर्णोहरत्तदा ॥ मायांमेघांधकारंहिकृत्वाकुंभात्मजोबली ॥
॥ ५१ ॥ ह्रियमाणेतुतुरगेहाहाकारोभवत्तदा ॥ मेघवर्णस्तदातत्रघातयित्वारणेगुरून् ॥ ५२ ॥ गृहीत्वातुरगंपश्चादनय
द्भीमसंनिधौ ॥ ततोभीमोमहाबाहुर्यौवनाश्वायनिर्गतः ॥ ५३ ॥ तावत्कर्णात्मजोराजन्युद्धायसमुपस्थितः ॥ अत्रांतरेमहा

नासीद्धतेहयवरेतदा ॥ ५४ ॥ नीतोयंतुरगोराजन्केनाप्यागत्ययोद्धृणा ॥ इतितेषांवचःश्रुत्वायौवनाश्वोबलैर्युतः ॥ ५५ ॥
आययौरणमध्येवैयुद्धायकृतनिश्चयः ॥ यावदायातिराजासौतावदग्रेददर्शह ॥ ५६ ॥ वृषकेतुंमहाबाहुंसूर्यमंडलसंनिभम् ॥
वृषकेतुरुवाच ॥ निवर्त्तध्वंयथाप्राणान्मात्यजध्वंममांतिके ॥५७॥ एवमुक्त्वातुनाराचैर्भेदितास्तेत्वनेकधा ॥ महारथामहा
वीराःशरैश्छन्नानराधिप ॥ ५८ ॥ गजाविदारिताबाणैःपातिताधरणीतले ॥ सादिनःपत्तयःसर्वेविनष्टाःशतशोरणे ॥ ५९ ॥
तानिसैन्यानिभग्नानितस्मात्कर्णात्मजात्तदा ॥ स्मरणाद्वासुदेवस्यपातकानीवसर्वशः ॥ ६० ॥ हतेसैन्येतदाराजायौवनाश्वः
समागतः ॥ यौवनाश्वउवाच ॥ धन्योऽसिकर्णपुत्रत्वंप्रथमंप्रहराशुमाम् ॥ ६१ ॥ बालंचपलमालोक्यतस्मान्नप्रहराम्यहम् ॥
वृषकेतुरुवाच ॥ बहुपुत्रोऽसिराजेंद्रतस्माद्वृद्धतरोभवान् ॥ ६२ ॥ कृष्णदर्शनहीनोऽसिममचेतासिबालकः ॥ तच्छ्रुत्वावचनं
तस्यनृपतिर्दशभिःशरैः ॥ ६३ ॥ ताडयामासहृदयेवृषकेतुंहसन्निव ॥ तांश्छित्वावृषकेतुश्चदशभिर्नृपमाहनत् ॥ ६४ ॥ ते
बाणानृपतिंभित्वागत्वापातालरंध्रके ॥ अर्द्धचंद्रेणचिच्छेदकोदंडंनृपतेःपुनः ॥ ६५ ॥ सोऽन्यत्कार्मुकमादायसज्जंकृत्वामहा
बलः ॥ विव्याधकर्णजंषष्ट्याशरणांनतपर्वणाम् ॥ ६६ ॥ तेतस्यहृदयंभित्वाययुःपीत्वाचशोणितम् ॥ पुनरेकेनबाणेनहृदिवि
द्धोनृपस्तदा ॥ ६७ ॥ कर्णात्मजेनवीरेणकश्मलंपरमंययौ ॥ तावद्भीमःसुवेगश्चयुयुधातेपरस्परम् ॥ ६८ ॥ गदायुद्धंप्रकुर्वा
णौघातयंतौपरस्परम् ॥ एतस्मिन्नंतरेराजायौवनाश्वःसमूर्च्छितः ॥ ६९ ॥ मूर्च्छांत्यक्त्वातदाशीघ्रंकर्णपुत्रंननामह ॥ पश्चा
त्तद्दीनवद्राजाइदंवचनमब्रवीत् ॥ ७० ॥ यौवनाश्वउवाच ॥ प्राणदस्त्वंमदीयस्तुनयोत्स्येऽहंत्वयापुनः ॥ गृहाणराज्यंसक
लंजीवितंमेत्वयार्पितम् ॥ ७१ ॥ त्वत्प्रसादाद्धरिंवीक्ष्येभीमंदर्शयमारिष ॥ इत्युक्त्वाहिगतस्तत्रयत्रतौपतितौरणे ॥ ७२ ॥

तावत्सुवेगोभीमश्चत्यक्त्वामूर्च्छांसमुत्थितौ॥संस्तुत्यभीमंतरसापुरींप्रावेशयत्स्वकाम्॥ ७३॥ भीमसेनोमेघवर्णोवृषकेतुर्महा
बलः ॥ कतिचिद्दिवसान्संस्थित्वायौवनाश्वेनसंयुताः॥७४॥सबलेनसपुत्रेणहस्तिनापुरमाययुः ॥भीममागतमाकर्ण्ययौवनाश्वे
नसंयुतम्॥ ७५ ॥ वृषमेघहयैर्युक्तंधर्मःसंमुखमाययौ ॥ तदाकृष्णश्चविश्वात्मामायांतुजीवमोहिनीम् ॥ ७६ ॥ कृत्वाजगामरा
जानंसंमुखंतुरगान्वितम्॥ यौवनाश्वंगृहीत्वातुपुरंप्रावेशयद्धरिः ॥७७॥ यथायोग्यंचसंश्लिष्यस्वेस्वेस्थानेनिवेशयत् ॥ ७८ ॥
इतिश्रीमहाभारतेभारतसारेअश्वमेधपर्वणियौवनाश्वपुरप्रवेशोनामाशीतितमोऽध्यायः॥८०॥ एकाशीतितमेऽध्यायेमंडपादश्व
मुत्तमम्॥अनुशाल्वोजहारासौकृष्णद्वेषात्तदुच्यते॥१॥वैशंपायनउवाच॥मासमात्रंततःस्थित्वाकृष्णःप्रोवाचधर्मजम्॥श्रीकृष्ण
उवाच ॥ चैत्रीगतापौर्णिमास्मीधर्मराजनिबोधय॥२॥यज्ञस्यसमयोदूरेमासिचैकादशेशुभे॥ तस्माद्गच्छामिनगरीमुग्रसेनेनपालि
ताम्॥ ३॥ यौवनाश्वेनसहितोहयंपालयधर्मज ॥ तवयज्ञेवयंसर्वेत्वयादेवनिमंत्रिताः ॥४॥ आगमिष्यामहेसर्वेतथार्थंचविधीय
ताम्॥ वैशंपायनउवाच॥तच्छ्रुत्वावासुदेवस्यवचनंधर्मनंदनः ॥५॥ अनुज्ञांप्रददौतस्मैज्ञात्वाकृष्णस्यमानसं ॥ कृष्णेगतेधर्मरा
जोव्यासेनैवसमन्वितः ॥ ६॥ तुरगंपालयामासकारयामासमंडपम् ॥ व्यासंपप्रच्छधर्मात्मामरुत्तस्यकथामिमाम् ॥ ७ ॥ कति
चिद्दिवसांस्तत्रकथांश्रुत्वासुविस्तराम् ॥ वेदव्यासोमुनिवरोधर्मंप्रोवाचसादरम् ॥ ८ ॥ व्यासउवाच ॥ एतत्तेकथितंपार्थअ
तऊर्ध्वंनिशामय ॥ समानयत्वंगोविंदंयथायज्ञःप्रजायते ॥ ९ ॥ एतच्छ्रुत्वावचस्तस्यमुनेरमिततेजसः ॥ प्रत्युवाचतथारा
जाभीमसेनंयुधिष्ठिरः ॥ १० ॥ धर्माज्ञांशिरसाकृत्वाभीमोभीमपराक्रमः ॥ कुटुंबेनयुतंकृष्णमानेतुंद्वारकांययौ ॥ ११ ॥ या
वदायातिसद्द्वारितावद्वैभुज्यतेहरिः ॥ भीममागतमाज्ञायकृष्णःकौतुकमानसः ॥ १२ ॥ बहुधामाननंकृत्वापश्चादाकारितस्त

सः ॥ संभोज्यविविधान्भोगान्ततस्तांबूलमर्चनम् ॥ १३ ॥ वरासनेसमास्थाप्यपप्रच्छकुशलंहरिः ॥ कुशलंकथयित्वातुक
थितंप्रीतिदंवचः ॥ १४ ॥ धर्मराजस्ययज्ञार्थमागंतव्यंत्वयानघ ॥ इतितस्यवचःश्रुत्वाकृष्णःप्रवदतांवरः ॥ १५ ॥ दुंदुभिंता
डयामासयांतुसर्वेयुधिष्ठिरम् ॥ रामश्चवसुदेवश्चद्वारकांरक्षयंतुवै ॥ १६ ॥ अन्येयेनगरेलोकास्तेनिर्यांतुगजाव्हयम् ॥ एवमु
क्त्वातदाकृष्णःसर्वान्संगृह्यमानवान् ॥ १७ ॥ स्वजनैश्चसमायुक्तआजगामगजाव्हयम् ॥ कालिंदीतीरमासाद्यसंस्थाप्य
बाणकूबरम् ॥ १८ ॥ तत्रसर्वान्समास्थाप्यकृष्णोधर्मंसमागतः ॥ ततोधर्मादयःसर्वेगृहीत्वातुरगंवरम् ॥ १९ ॥ आजग्मु
र्मिलनार्थंवैकृष्णादेशाच्चवीणकम् ॥ तत्रतेपांडवाःसर्वेमिलितायादवादयः ॥ २० ॥ ततोब्रवीत्सभायांतुतुरगंवीक्ष्यमाधवः ॥
देवक्यासहिताःसर्वाःकौतुकंद्रष्टुमिच्छया ॥ २१ ॥ तच्छ्रुत्वावचनंतस्यकृष्णेनोक्तोहिधर्मजः ॥ धर्मउवाच ॥ सर्वेतिष्ठंतुवैवी
राःपरितस्तुरगस्यच ॥ २२ ॥ धौम्यःपूजांकरोत्वत्रपूजयंतुयदुस्त्रियः ॥ सर्वाभिःपूजितश्चासौबलिपूजोपहारकैः ॥ २३ ॥
आरूढायोषितस्तत्रगवाक्षेवीणकस्यच ॥ पश्यंतुतुरगंतत्रनृत्यमानंमहीपते ॥ २४ ॥ एतस्मिन्समयेराजन्प्राप्तवाननुशाल्व
कः ॥ जहारतुरगंतत्रपूर्ववैरमनुस्मरन् ॥ २५ ॥ कृष्णस्यबंधुघातस्यगर्जयन्विष्णुरातज ॥ शृणुराजन्प्रवक्ष्यामितदाकृष्णे
नयत्कृतम् ॥ २६ ॥ पांडवानांहयंनीतंविलोक्यलज्जितोहरिः ॥ उवाचधर्मराजानंविषादंमाकुरुप्रभो ॥२७॥ घातयित्वानुशा
ल्वंवैचानयिष्यामिवाजिनम् ॥ इत्युक्त्वाचतदाकृष्णोहस्तेसंगृह्यवीडकम् ॥ २८ ॥ स्थितोसौवीणकेराजन्कोपिगृह्णातुवीड
कम् ॥ तेसर्वेकृष्णवचनंश्रुत्वावीराःसुदारुणम् ॥ २९ ॥ स्थिताविगतसंकल्पाःपश्यंतिचपरस्परम् ॥ ततःकृष्णसुतःश्रीमान्प्र
द्युम्नोहस्तसंस्थितम् ॥ ३० ॥ गृहीत्वावीडकंतंतुवचनंचेदमब्रवीत् ॥ प्रद्युम्नउवाच ॥ अनुशाल्वंघातयित्वाआनयिष्या

मिवाजिनम् ॥ ३१ ॥ सबलंहितृणीकृत्यपश्यंतुममपौरुषम् ॥ द्वितीयंचात्रगृह्णातुमत्करात्कोपिवीडकम् ॥ ३२ ॥ प्र
द्युम्नसहितोयातुपौरुषंयस्यविद्यते ॥ इत्युक्तेचहरौवाक्यंवृषकेतुर्महाबलः ॥ ३३ ॥ गृहीत्वावीडकंतत्रगतःप्रद्युम्नसंनिधौ
॥ वृषकेतुरुवाच ॥ अनुशाल्वंमहावीरंगृहीत्वातवसंनिधौ ॥ ३४ ॥ नानयेयदिगोविंदप्रतिज्ञांशृणुमेप्रभो ॥ ब्राह्मणीगम
नाच्छूद्रोलभतेयांगतिंविभो ॥ ३५ ॥ प्राप्नुयांतामहंकृष्णयद्यहंनानयेहयम् ॥ वैशंपायनउवाच ॥ इत्युक्त्वावृषकेतुश्चप्रद्यु
म्नेनसमन्वितः ॥ ३६ ॥ प्रविवेशतदासैन्यमनुशाल्वेनयोधितुम् ॥ अनुशाल्वउवाच ॥ तपस्विनोयत्रसंतियत्रचैवपतिव्रताः ३७
विवेकरहितोलोकःपौरुषंतत्रतावकम् ॥ तच्छ्रुत्वावचनंतस्यप्रद्युम्नःपंचभिःशरैः ॥ ३८ ॥ ताडयामाससहसायुद्धंतमनुशाल्व
कम् ॥ अनुशाल्वोपितान्बाणान्मध्येचिच्छेदवेगतः ॥ ३९ ॥ बाणेनैकेनहृदयंबिभेदप्रहसन्निव ॥ सभिन्नहृदयःकार्ष्णिःक
श्मलंचाविशन्महत् ॥ ४० ॥ भ्रममाणःशरेणाजौपतितःकृष्णसंनिधौ ॥ प्रद्युम्नंपतितंवीक्ष्यलज्जितोहृदिमाधवः ॥ ४१ ॥
ताडयित्वापदापुत्रमिदंवचनमब्रवीत् ॥ श्रीकृष्णउवाच ॥ उत्तिष्ठोत्तिष्ठरेमूढनेयंद्वारवतीपुरी ॥ ४२ ॥ यत्रत्वयाक्रीडयतेहि
स्थानमेतत्सुदारुणम् ॥ इतितस्यवचःश्रुत्वाभीमोभीमपराक्रमः ॥ ४३ ॥ अनुशाल्वस्यचरणेप्रद्युम्नसहितोययौ ॥ तत्रग
त्वाभीमसेनोगदाघातेनचूर्णितम् ॥ ४४ ॥ अनुशाल्वबलंभूरिबलिनाचात्रसंगरे ॥ अनुशाल्वेनवीरेणबाणेनैकेनवक्षसि ॥
॥ ४५ ॥ ताडितोभीमसेनस्तुपतितःकृष्णसंन्निधौ ॥ पतितंभीममालोक्यकृष्णःकोपसमन्वितः ॥ ४६ ॥ स्वयंयोद्धुंययौरा
जंस्तदद्भुतमिवाभवत् ॥ अनुशाल्वंत्रिभिर्बाणैर्जघानसमरेहसन् ॥ ४७ ॥ अनुशाल्वोऽपिसहसातान्शरान्माधवस्यहि ॥
मध्येचिच्छेदतरसावचनंचेदमब्रवीत् ॥ ४८ ॥ मदीयमाशुगंचैवनभवान्छेत्तुंक्षमः ॥ त्वंसहस्वस्थिरोभूत्वाघातयामिन

संशयः ॥ ४९ ॥ ततोमुमोचनाराचंवासुदेवस्यवक्षसि ॥ तेनबाणप्रहारेणसंतुष्टइवमूर्च्छितः ॥ ५० ॥ दारुकोवीक्ष्यगोविं
दंसंतुष्टंतस्यतेजसा ॥ रथंरणादपोवाहयत्रराजायुधिष्ठिरः ॥ ५१ ॥ हाहाकारोमहानासीद्वीक्ष्यकृष्णंतथाविधम् ॥ पलायि
तंबलंसर्वंपांडवानांचपश्यताम् ॥ ५२ ॥ तत्रपुत्रान्पितॄन्बंधून्सुहृत्संबंधिबांधवान् ॥ उत्सृज्योत्सृज्यगच्छंतिवदंत्येकेपरस्प
रम् ॥ ५३ ॥ पुत्रमांनयसंग्रामात्पिताहंपतितस्तव ॥ पुत्रःप्रोवाचजनकंपलायित्वानराधिप ॥ ५४ ॥ तवश्राद्धंगयातीर्थेक
रिष्यामिविनिर्गतः ॥ मूर्च्छितंतंसमालोक्यहाहाकृत्वाप्रधाविताः ॥ ५५ ॥ कृष्णभार्यास्तुसकलारुक्मिणीप्रमुखान्नृप ॥ त
थाविधंहरिंवीक्ष्यसत्यभामाब्रवीद्वचः ॥ ५६ ॥ सत्यभामोवाच ॥ समागतंरणेपुत्रंप्रद्युम्नंरणकोविदम् ॥ कथंपदाहतंस्वामि
न्अकरोस्तच्छरार्दितम् ॥ ५७ ॥ भवान्प्रातःकथंयुद्धादनुशाल्वभयार्दितः ॥ पलायिताजनास्तेवैमृत्योर्भीताजगत्पते ॥
॥ ५८ ॥ स्वयंगच्छामिकिंनाथचंडीभूत्वामहाहवे ॥ हंतुंतमनुशाल्वंहियस्माद्भीतःसमागतः ॥ ५९ ॥ इतिश्रीमहाभार
तेभारतसारेअश्वमेधपर्वणिकृष्णमूर्च्छापत्तौनामैकाशीतितमोऽध्यायः ॥ ८१ ॥ द्व्यशीतितमअध्यायेनीलध्वजपराभवः ॥
अर्जुनादभवत्तावत्तत्साग्रमिहवर्ण्यते ॥ १ ॥ वैशंपायनउवाच ॥ इतितस्यवचःश्रुत्वानिर्ययौभगवान्पुनः ॥ अनुशाल्वंरणे
योद्धुंतस्मिन्कालेविशांपते ॥ २ ॥ वृषकेतुर्हरेःपूर्वंकृत्वासंग्राममाहवे ॥ केशेष्वागृह्यदैत्यंतमानयत्सहयंहरिम् ॥ ३ ॥ तथा
विधंतमालोक्यवृषकेतुंजनार्दनः ॥ संतुष्टःपरमस्तत्रसाधुसाध्वितिचावदत् ॥ ४ ॥ श्रीकृष्णउवाच ॥ धन्योसिकर्णपुत्रत्वंभा
षितंसफलंकृतम् ॥ अनुशाल्वंकस्त्वदन्योरणादिहसमानयेत् ॥ ५ ॥ इत्युक्त्वावृषकेतुंहिअनुशाल्वंसवाजिनम् ॥ सर्वान्ज
नान्पुरस्कृत्यगीतवादित्रमंगलैः ॥ ६ ॥ कृष्णःकमलपत्राक्षोह्याजगामगजाह्वये ॥ तत्रसर्वान्जनान्कृष्णोयथास्थानेनि

वेशयत् ॥ ७ ॥ समागतेहृषीकेशेदिनानांविंशतिर्गता ॥ चैत्रीप्राप्तापौर्णमासीदीक्षितोभूद्युधिष्ठिरः ॥ ८ ॥ द्रौपदीसाहि
नोरौद्रमसिपत्रव्रतंचरत् ॥ स्वंस्वीकृत्यहयंतत्रपूजयित्वायथाविधि ॥ ९ ॥ असिपत्रव्रतंचैतत्प्रवदंतिमनीषिणः ॥ यत्रै
कशयनस्थानेप्रमदानोपभुज्यते ॥ १० ॥ ब्राह्मणान्पूजयित्वातुतुरगंपूज्यतत्रवै ॥ मुमोचधर्मराजासौबद्धभूषणचामर
म् ॥ ११ ॥ पालनार्थेऽयस्यैवप्रेषयामासचार्जुनम् ॥ वासुदेवप्रसादेननिर्विघ्नंतेधनंजय ॥ १२ ॥ पितृहीनान्बाल
कांश्चरणेचैवपलायितान् ॥ सरोगान्वृद्धकान्पार्थत्वंमाघातयमारिष ॥ १३ ॥ इतितस्यवचःश्रुत्वापार्थःस्मृत्वातुकेशवम् ॥
नमस्कृत्यगुरून्सर्वान्प्रययौसत्सहायकः ॥ १४ ॥ ब्राह्मणांश्चगवांयूथंहोमद्रव्यंतुवाजिनम् ॥ पुरस्कृत्यतदाराजन्गतोमा
हिष्मतींपुरीम् ॥ १५ ॥ नीलध्वजेनवीरेणरक्षितांदुर्गमंडिताम् ॥ १६ ॥ नर्मदाजलपानेनलिंगाकारंतुभारत ॥ नानायुद्धंतत्र
कृत्वानिर्जितःससपुत्रकः ॥ १७ ॥ येनजामातरंयुद्धेप्रेरितंपांडवेदले ॥ वन्हिवैवन्हिसूक्तेनसोपिनीलध्वजोजितः ॥ १८ ॥
॥ जन्मेजयउवाच ॥ कथंजामातरंवन्हिलब्धवान्समहीपतिः ॥ काचकन्यापावकायतेनदत्तामहात्मने ॥ १९ ॥ एतत्सर्वंस
माचक्ष्वमयापृष्टोऽसिभोद्विज ॥ वैशंपायनउवाच ॥ नीलध्वजस्यमहिषीज्वालानाम्नीसुमध्यमा ॥ २० ॥ स्वाहांकन्यांप्रासू
तसासुंदरीधर्मतत्परा ॥ नीलध्वजेनसापृष्टाभर्त्ताकस्तवरोचते ॥ २१ ॥ तयातस्यापितुःप्रोक्तंभर्त्तामेहव्यवाहनः ॥ सर्वेलोका
श्चावसानेयस्मिन्देहंत्यजंतिहि ॥ २२ ॥ इत्युवाचततःस्वाहातपसेकृतनिश्चया ॥ वन्हिसूक्तेनमंत्रेणतुष्टावहव्यवाहनम् ॥
॥ २३ ॥ ततोऽग्निर्विप्ररूपेणप्राप्तोनीलध्वजंप्रति ॥ नीलध्वजस्तुतंविप्रंपूजयित्वाविशांपते ॥ २४ ॥ कस्त्वंकुतःसमायातः
किंत्वयाचविमृग्यते ॥ विप्रउवाच ॥ कन्यार्थिनंविद्धिराजन्विप्रंशांडिल्यगोत्रजम् ॥ २५ ॥ गृहेतेविद्यतेबालामह्यंतांदेहि

कन्यकाम् ॥ राजोवाच ॥ अनयाचवृतःस्वामिन्वरत्वेपावकोवृतः ॥ २६ ॥ विप्रउवाच ॥ मांविद्धिपावकंराजन्विप्रवेषेण
चागतम् ॥ प्रधानउवाच ॥ कन्यानिमित्तेविप्रोसौजायतेनीलपावकः ॥ २७ ॥ विनापावकनाथेनस्वाहादेयानकस्यचित् ॥
प्रधानेनतथाचोक्तंपरीक्षांदर्शयद्विज ॥ २८ ॥ इत्युक्तेहिप्रधानेनविप्रास्यान्निःसृतातदा ॥ ज्वालातयाचसंदग्धामंत्रिणःकूर्च
मूर्च्छिका ॥ २९ ॥ एतस्मिन्नंतरेराजन्विनोदोऽथमहानभूत् ॥ मातृस्वसातुकन्यायाराजानंवाक्यमब्रवीत् ॥ ३० ॥ नदात
व्यात्वयाकन्याब्राह्मणायकदाचन ॥ इंद्रजालिकरूपोऽयंदृश्यतेविप्रवेषधृक् ॥ ३१ ॥ राज्ञाप्रोक्तंचभोभद्रेनयविप्रंस्वकंगृहम् ॥
परीक्षयविशालाक्षिविप्रोवावाडवोह्ययम् ॥ ३२ ॥ ततोगतागृहंदेवीतेनविप्रेणसंयुता ॥ प्रत्युवाचपरीक्षांमेविप्रदर्शयमाचिरम्
॥ ३३ ॥ अग्निर्ददाहकुपितस्तदीयंमंदिरंतदा ॥ ततःसादग्धवस्त्राचनग्नारंडाब्रवीदिदम् ॥ ३४ ॥ राजन्जामातरंतेद्यनयत्वंम
दिरंस्वकम् ॥ अस्मैदेयातुकन्यावैनिश्चयंवडवानलः ॥ ३५ ॥ एतस्मिन्समयेराजासमाहूयविभावसुम् ॥ सहतेनैवसमयंकृ
त्वास्वाहाविवाहिता ॥ ३६ ॥ तदाप्रभृतिभोराजन्जामाताचास्यपावकः ॥ सोपिनीलध्वजोराजन्ससैन्योनिर्जितोरणे ॥
॥ ३७ ॥ अर्जुनेनचवीरेणप्रसादात्केशवस्यच ॥ ३८ ॥ इतिश्रीमहाभारतेभारतसारेअश्वमेधपर्वणिनीलध्वजनिर्जयोनाम
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ त्र्यशीतितमअध्यायेअर्जुनेनसौभरेश्वह ॥ उद्दालककथाव्याजात्सर्वंतदिहभण्यते ॥ १ ॥
वैशंपायनउवाच ॥ नीलध्वजस्यभार्यावैनाम्नाज्वालेतिविश्रुता ॥ अर्जुनोपरिक्रुद्धावैगताभ्रातृनिवेशनम् ॥ २ ॥ निष्काशि
तातदाभ्रात्राज्वालिताजान्हवीतटे ॥ शराभूत्वास्थितातत्रबभ्रुवाहस्यतूणके ॥ ३ ॥ गंगाशापात्तदाजातापार्थनाथस्यकारणा
त् ॥ ततोनीलध्वजपुरात्पार्थवाजीचनिर्गतः ॥ ४ ॥ ततोहयःशिलांदृष्ट्वामहतींयोजनायताम् ॥ स्वांगंघर्षितुमारेभेतस्यांह

षदिसंस्थितः ॥ ५ ॥ वज्रलेपत्वमापन्नंचलितुंनैवशक्यते ॥ जडीभूतंसमालोक्यतंहयंहरिसेवकाः ॥ ६ ॥ साट्टहासंजगर्जुस्ते
जातकोपास्तुतेतदा ॥ केचित्तस्यार्जुनस्याग्रेकथयंतितुरंगमम् ॥ ७ ॥ बद्धंदृषदिभोराजन्कर्त्तव्यंकिमतःपरम् ॥ इतितेषांवचः
श्रुत्वापार्थश्चितापरोभवत् ॥ ८ ॥ इतस्ततोविलोक्याथयावदग्रेचगच्छति ॥ तावत्पार्थोददर्शाथमुनेराश्रममुत्तमम् ॥ ९ ॥
तंगत्वासौभरिंविप्रंपार्थोबुद्धिमतांवरः ॥ शिलाबद्धतुरंगस्यपप्रच्छकारणंतदा ॥ १० ॥ सौभरिरुवाच ॥ शृणुराजन्प्रवक्ष्या
मिशिलेयंब्राह्मणीपुरा ॥ एकदातस्यविप्रस्यपितुःश्राद्धंसमागतम् ॥ ११ ॥ उद्दालकस्तुयद्वक्तिविपरीतंकरोतिसा ॥ एकदात
स्यविप्रस्यपितुःश्राद्धंसमागतम् ॥ १२ ॥ तद्दिनेतद्गृहेराजन्कौंडिण्योमुनिसत्तमः ॥ तीर्थयात्राप्रसंगेनशिष्यैःकतिपयैर्युतः ॥
॥ १३ ॥ आगतंतंसमालोक्यसोत्साहोद्दालकोऽभवत् ॥ अर्घ्यादिकर्मकस्तावत्ग्लान्याचसपुरस्थितः ॥ १४ ॥ कौंडिण्यउ
वाच ॥ कस्मात्शोचसिभोविप्रकिंतेदुःखंहिवर्त्तते ॥ उद्दालकउवाच ॥ आगतेदिवसेमेऽत्रपितुःश्राद्धंभविष्यति ॥ १५ ॥ कथं
करोमिभोस्वामिन्चिंतास्तिमहतीमम ॥ यद्यद्वच्मिप्रियांब्रह्मंस्तद्विपरीतकारिणी ॥ १६ ॥ कौंडिण्यउवाच ॥ अत्रागच्छोद्दा
लकस्त्वंकर्णेकिंचिद्वदामिते ॥ विपरीतंतदात्वंहियद्यदाकर्त्तुमिच्छसि ॥ १७ ॥ स्त्रियंप्रतिहिविप्रर्षेतत्तत्साधुभविष्यति ॥ प्रा
तरत्रागमिष्यामिगत्वाहंगौतमंप्रति ॥ १८ ॥ इतितस्यवचःश्रुत्वासंप्रीतोद्दालकस्तदा ॥ अनेनैवप्रकारेणसर्वंश्राद्धंकृतंतदा ॥
॥ १९ ॥ उद्दालकेनविप्रेणसंतुष्टमनसातदा ॥ भार्यामाहइमान्पिंडान्गंगायांत्वंविनिक्षिप ॥ २० ॥ तदातयाचतेपिंडाःशौ
चकूपेचत्याजिताः ॥ तदाकोपयुतोविप्रस्तामाहचंडिनींप्रति ॥ २१ ॥ उद्दालकउवाच ॥ रेरेदुष्टेदुराचारेशिलाभवभयानका ॥
यदार्जुनःसमायातितदामुक्तिर्भविष्यति ॥ २२ ॥ सेयंशिलामहाराजशापात्त्वंतांहिमोचय ॥ इत्युक्तेहिमुनौपश्चात्अर्जुनेन

कृतंहितत् ॥ २३ ॥ साशिलात्वंपरित्यज्यसुंदरीचाभवत्तदा ॥ मोचितस्तुरगःशीघ्रंययौचंपावतींपुरीम् ॥ २४ ॥ हंसध्वजेन वीरेणपालितांप्रमदामिव ॥ हंसध्वजस्यपुत्रास्तेपंचैवचप्रकीर्तिताः ॥ २५ ॥ सुरथःसुबलश्चैवशमःसुंदरदर्शनः ॥ सुधन्वापंच मःपुत्रस्तस्यराज्ञःसुतेजसः ॥ २६ ॥ एवंविधेनसैन्येनस्थितःपार्थबलंप्रति ॥ नीतःकटाहस्तैलेनपूरितोराजशासनात् ॥ २७ ॥ यश्चपश्चात्समायातितंक्षिपामिकटाहके ॥ सर्वेसमागतावीराःसुधन्वाबहिरागतः ॥ २८ ॥ विलंबितस्त्रियासोऽपितच्छृणुष्व महामुने ॥ यावद्द्वारेरथस्थोऽसौसुधन्वाबहिरागतः ॥ २९ ॥ तावद्दृष्ट्वास्वकीयांवैप्रमदांचप्रभावतीम् ॥ प्रभावत्युवाच ॥ ऋतुदानंचदत्वामेयाहिवल्लभसंगरे ॥ ३० ॥ ऋतुभंगान्महापापंबालहत्यादिकंभवेत् ॥ अत्याग्रहंप्रियायास्तुश्रुत्वावीरोवि लंबितः ॥ ३१ ॥ तदाराज्ञाश्रुतंकर्मकुत्सितंहंसकेतुना ॥ भृत्यैराकारयामाससुधन्वानंसुताग्रणिम् ॥ ३२ ॥ एतस्मिन्नंतरेहं ताप्रेषितःशंखसंन्निधौ ॥ इमंवृत्तांतमाज्ञायक्षोभितोलिखितस्तदा ॥ ३३ ॥ तावत्सुधन्वाचानीतःकटाहंतप्ततैलकम् ॥ शंखले खौस्थितौतत्रन्यायान्यायप्रवादकौ ॥ ३४ ॥ प्राहतुस्तौसुधन्वानंकथंपश्चाद्विलंबितम् ॥ किंमूर्खोऽसिमहावीरनज्ञातंराजशास नम् ॥ ३५ ॥ इत्युक्तेचगुरौपश्चात्सुमतिःसचिवोगतः ॥ सुमतिरुवाच ॥ किंकरोमिमहावीरराजाज्ञावर्ततेमम ॥ ३६ ॥ वैशंपा यनउवाच ॥ सुधन्वानंतथाभूतंस्नानंदिव्यांबरावृतम् ॥ तुलसीदलजांमालांदधानंहरिजल्पकम् ॥ ३७ ॥ उत्थाप्यतैलकुंडे सुधन्वानंपातयत्तदा ॥ ३८ ॥ हंसध्वजःशंखयुतोददर्शपुत्रंकटाहेप्रतरंतमेनं ॥ पुण्यानिनामानिहरेर्जपंतंगोविंददामोदरमाधवेति ॥ ३९ ॥ शंखोब्रवीत्तंनृपतिंकिमेतत्तैलंनतप्तंज्वालिताग्निनापि ॥ किमौषधंमंत्रवरंसुतश्चजानातिराजन्नथकैतवंच ॥ ४० ॥ क्षि प्तंहुताशेनवनालिकेरकंभवेत्तदातैलमिदंपरीक्षितम् ॥ ४१ ॥ इतितस्यवचःश्रुत्वानालिकेरंक्षिपत्तदा ॥ तप्ततैलेनभिन्नंतत्सं

जातंशकलद्वयम् ॥ ४२ ॥ एकंशंखललाटेहिद्वितीयंलिखितस्यच ॥ लग्नंतदाप्रहारेणमूर्च्छितौपातितौभुवि ॥ ४३ ॥ इति श्रीमहाभारतेभारतसारेअश्वमेधपर्वणिशंखलिखितमूर्च्छनंनामत्र्यशीतितमोऽध्यायः ॥८३॥ चतुरशीतितमेऽध्यायेवधंपार्थः सुधन्वनः ॥ चकारकृष्णकृपयातत्सविस्तरमुच्यते ॥ १ ॥ वैशंपायनउवाच ॥ ततःसुधन्वासुस्नातःप्रययौसंगरेत दा ॥ पार्थसैन्यंतदाघोरंनानाहेतिभिराहनत् ॥ २ ॥ पत्तिःपदातिंरथिनंरथेशस्तुरंगसादीतुरगाधिरूढम् ॥ यंतागज स्थोऽभ्यपतद्गजस्थंतुल्यप्रतिद्वंद्वबभूवयुद्धम् ॥ ३ ॥ एवंयुद्धंतुतुमुलंकृतंतस्मिन्सुधन्वना ॥ पार्थेननिहतंतत्रबलंभूरिसु धन्वनः ॥ ४ ॥ ततःपार्थोबाणशतंसंदधेकोपपूरितः ॥ सुधन्वातान्शरान्सर्वांश्चिच्छेदप्रहसन्निव ॥ ५ ॥ दशभिस्ताड यामासशरैःकुंतीसुतंहसन् ॥ शतेनचसहस्रेणायुतेनप्रयुतेनच ॥ ६ ॥ बाणैराच्छादयामासरणेक्रुद्धोधनंजयम् ॥ अर्जुनोपि शरांस्तस्याचिच्छेदतिलशस्तदा ॥ ७ ॥ आग्नेयास्त्रंतुपार्थेनवारुणंचसुधन्वना ॥ पुनःपार्थस्तुवायव्यंपर्वतास्त्रंपरंबली ॥ ८ ॥ अर्जुनश्चैंद्रकंचास्त्रंसुधन्वातंत्रिभिर्हनत् ॥ एवंयुद्धेतुसंजातेपार्थःसस्मारमाधवम् ॥ ९ ॥ तावद्रथेसमायातःकृष्णःक्लेशविना शकः ॥ सुधन्वाचतदावाक्यंप्रोवाचविजयंप्रति ॥१०॥ सुधन्वोवाच ॥ कुरुप्रतिज्ञांपार्थत्वंमद्वधेकृष्णसंनिधौ ॥ पार्थउवाच ॥ एभिस्त्रिभिःशरैःपार्थःशिरस्तेपातयाम्यहम् ॥ ११ ॥ पतंतुपितरोमेवैयद्यहंनैवपातये ॥ कुरुत्वंहिप्रतिज्ञांहिप्रतिज्ञेयंमयाकृ ता ॥ १२ ॥ सुधन्वोवाच ॥ शरत्रयंछेद्मिवीरपश्यतांसर्वभूभुजाम् ॥ यद्यहंनकरोम्यद्यगतिंवोरामवाप्नुयात् ॥ १३ ॥ श्री कृष्णउवाच ॥ पश्यपांडववीरस्यपौरुषंत्वंसुधन्वनः ॥ वृथात्वयाप्रतिज्ञाचत्रिभिर्बाणैःकथंवधः ॥ १४ ॥ सुधन्वनस्यभूत स्यसाहसंततक्थंत्वया ॥ ततःपार्थोमहाबाहुःसंदधेकार्मुकेशरम् ॥ १५ ॥ कालानलनिभंरोषात्मुमोचास्मैप्रतापवान् ॥ तं

187

शरंवीक्ष्यगोविंदःस्वपुण्यंसमयोजयत् ॥ १६ ॥ गोवर्द्धनोद्धरेणैवरक्षिताधेनवःपुरा ॥ तेनपुण्येनबाणोऽस्यसन्नद्धोभवतात्ध्रु
वम् ॥ १७ ॥ दिविदेवाश्चसंप्राप्तास्तयोर्युद्धदिदृक्षवः ॥ सुधन्वासशरेणैवपार्थसायकमच्छिनत् ॥१८॥ द्वितीयंसायकंपार्थो
यावद्योजयतेपुनः ॥ तावत्कृष्णेनसशरःश्रेयसाबहुलीकृतः ॥ १९ ॥ ततोमुमोचबाणंससूर्यमंडलसंनिभम ॥ पांडवःक्रोध
नयनोयथास्वंकृपणोधनम् ॥ २० ॥ तंबाणंचसमालोक्यसुधन्वास्वंचयोजयत् ॥ गर्जयन्स्वेनबाणेनपार्थबाणंत्रिधाच्छिन
त् ॥ २१ ॥ च्छिन्नेद्वितीयबाणेचहाहाकारोमहानभूत् ॥ गृहीत्वासायकंहस्तेपांडवेनमहात्मना ॥ २२ ॥ ब्रह्माणंपश्चिमे
भागेमध्येरुद्रंमुखेहरिम् ॥ एतादृशंमहद्बाणंमुमोचसधनंजयः ॥ २३ ॥ पुण्यंरामावतारेणकृतंतत्सायकेऽर्पयत् ॥ तंशरंचस
मालोक्यसुधन्वावाक्यमब्रवीत् ॥ २४ ॥ शरणंदेहिगोविंदचरणान्मांवियोजय ॥ जन्मजन्मनिमेदास्यंदेहिमेमधुसूदन ॥
॥ २५ ॥ अर्द्धचंद्रंमुमोचाथसुधन्वासायकंवरम् ॥ तेनबाणेनमहतापार्थबाणस्तुछेदितः ॥ २६ ॥ पश्यतांसर्वभूतानांतथा
कृष्णस्यपश्यतः ॥ मध्यतश्छेदयामासतदग्रंचाग्रतोययौ ॥ २७ ॥ शिरसःकुंडलंच्छिन्नंतदग्रेणसुखीभवत् ॥ २८ ॥ इति
श्रीमहाभारतेभारतसारेअश्वमेधपर्वणिसुधन्ववधोनामचतुरशीतितमोऽध्यायः ॥ ८४ ॥ पंचाशीतितमेऽध्यायेसुरथेनाभव
द्रणः ॥ पार्थस्यबभ्रुवाहेनसंगमस्त्विहकथ्यते ॥ १ ॥ वैशंपायनउवाच ॥ सुधन्वनिहतेवीरेभ्राातातस्यमहाबलः ॥ आज
गामरणेयोद्धुंहरिपार्थौगतौतदा ॥ २ ॥ नपश्यतियदातत्रसुरथोवाक्यमब्रवीत् ॥ सुरथउवाच ॥क्वगतौकृष्णपार्थौचयूयंमेक
थ्यतांजनाः ॥ ३ ॥ इत्युक्त्वासुरथःपश्चात्सर्वान्बाणैर्जघानह ॥ बाणवृष्ट्याचतेसर्वेपतिताधोमुखाहिते ॥४॥ तावत्कृष्णा
र्जुनौतत्रचायातौरणकोविदौ ॥ सुरथउवाच ॥ अर्जुनत्वंप्रतिज्ञांहिमद्वधेकुरुनिश्चितम् ॥ ५ ॥ अर्जुनउवाच ॥ त्वामहंतुह

निष्यामिसमक्षंजनकस्यच ॥ इयंप्रतिज्ञामेवीरत्वंचापिकुरुमानद ॥ ६ ॥ त्वामहंपातयिष्यामिह[illegible] ।।चभूतले ॥ एवंकृ
त्वातुतौवीरौयुयुधातेपरस्परम् ॥ ७ ॥ बाणैर्भल्लैर्मुद्गरैश्चमुशलैर्मुष्टिभिस्तथा ॥ एवंपरस्परंयुद्धंतुमुलंचाभवत्तदा ॥ ८ ॥ तदा
र्जुनेनवीरेणसुरथस्यसकुंडलम् ॥ पातितंतच्छिरोरम्यंसस्मितंकृष्णसन्निधौ ॥ ९ ॥ तेनशीर्षेणपार्थोहिहृदिहत्वानिपातितः ॥
तदाकृष्णेनतच्छीर्षंगरुडायसमर्पितम् ॥ १० ॥ गरुडःशीर्षमादायगतोऽसौजान्हवींप्रति ॥ शंकरेणतदादृष्टंकिमिदंनीयतेख
ग ॥ ११ ॥ सुरथस्यशिरःस्वामिन्प्रयागेपातयाम्यहम् ॥ तदाशिवेनचगणाःप्रेषितामस्तकायवै ॥ १२ ॥ तत्रतेनिर्बलारा
जन्बलीवर्दःसमागतः ॥ बलीवर्दस्यफूत्कारैर्गरुडोप्यतिलुंठितः ॥ १३ ॥ यावत्प्रयागेप्राप्तोऽसौतावन्युक्तंहिमस्तकम् ॥ प्र
यागेपतितंपश्चाद्गृहीतंनंदिनातदा ॥ १४ ॥ एवंकृतंतदाराजन्हंसकेतुःसमाययौ ॥ रणेतुयावदायातितावत्कृष्णेनसंयुतः ॥ १५ ॥
॥ श्रीकृष्णउवाच ॥ मुंचाश्वंपांडवंरक्षगमिष्यामियुधिष्ठिरम् ॥ ततोऽर्जुनंसमानीयकेशवःक्लेशनाशनः ॥ १६ ॥ उभयोःसं
गतिंकृत्वामोचयित्वातुरंगमम् ॥ पंचरात्रंस्थितास्तस्मिन्नगरेकेशवोगतः ॥ १७ ॥ युधिष्ठिरगृहंरम्यंप्राप्तंसर्वंनिवेदितुम् ॥
वैशंपायनउवाच ॥ ततःपार्थहयोराजन्देशान्देशान्भ्रमत्तदा ॥ १८ ॥ एकत्रजलपानार्थंयावद्गच्छतिवाहयः ॥ तावत्सुतु
रगीजातातदातेविस्मयंगताः ॥ १९ ॥ पुनरन्यतडागेचयावद्विशतिसायदा ॥ तदाव्याघ्रस्तुसंजातोदैवात्सतुरगोऽभवत् ॥
॥ २० ॥ एवंभ्रमंस्तदावाजीस्त्रीराज्यदेशमेकदा ॥ प्रमिलानामराज्ञीवैयक्षनारीसमावृता ॥ २१ ॥ चंद्राननास्ववीर्यावात
स्मिन्देशेतिदारुणे ॥ तस्यायुद्धमभूद्घोरंताभिस्तस्यार्जुनस्यच ॥ २२ ॥ अथांतरेश्रुतावाणीपार्थेनाकाशगामिनी ॥ आका
शवाण्युवाच ॥ मापार्थसाहसंकार्षीःसंग्रामेस्त्रीवधंप्रति ॥ २३ ॥ इमांवरयभद्रंतेयदिजीवितुमिच्छसि ॥ पार्थस्तद्भाषितंश्रु

त्वासर्वंचकेयथोचितम् ॥ २४ ॥ तासांवृंदंसमादायप्रेषितंहस्तिनापुरे ॥ अर्जुनस्यहयोराजन्भ्रमन्देशाननेकधा ॥ २५ ॥
पार्थोबलेनसंयुक्तोबिभीषणपुरींययौ ॥ राक्षसास्तत्रबहवोवसंतिपुरुषादकाः ॥ २६ ॥ तैर्युद्धमभवद्घोरमर्जुनस्यमहात्मनः ॥
तान्जित्वाधनमादायतुरगान्हस्तिनोबहून् ॥२७॥ गृहीत्वानिर्ययौपार्थस्तुरगेणसमन्वितः ॥ अर्जुनस्यहयोराजन्गतोम
णिपुरंतदा ॥ २८ ॥ पुत्रेणबभ्रुवाहेनपालितंधर्मतःसदा ॥ नराःसत्यव्रतायत्रनार्यश्चपतिसेवकाः ॥ २९ ॥ बंधनंकेशपुण्या
नांसारिणांचैववातनम् ॥ चिंतयन्वासुदेवस्यसर्वेकुर्वंतिनान्यथा ॥ ३० ॥ द्वितीयमिववैकुंठंस्थापितंविष्णुनापुरा ॥ निरी
क्ष्यतत्तथारूपंनगरंचार्जुनोब्रवीत् ॥ ३१ ॥ वयंकुशलसंप्राप्तामरालध्वजशासने ॥ ३२ ॥ इतिश्रीमहाभारतेभारतसारेअ
श्वमेधपर्वणिबभ्रुवाहनपुरप्रवेशोनामपंचाशीतितमोऽध्यायः ॥ ८५ ॥ षडशीतितमेऽध्यायेबभ्रुवाहनपार्थयोः ॥ युद्धेर्जुनबल
स्यैवभंगस्तदिहवर्ण्यते ॥ १ ॥ हंसध्वजउवाच ॥ बभ्रुवाहननामात्रवर्ततेराजसत्तमः ॥ यस्यास्तिहेमसंपूर्णशकटानांसहस्र
कम् ॥ २ ॥ प्रत्यब्दंदीयतेपार्थमयान्यैःपार्थिवैःसह ॥ सर्वैर्गुणैःसमायुक्तोयथानारायणोहरिः ॥ ३ ॥ सुमतिश्चास्यविख्या
तःप्रधानोधर्मतत्परः ॥ महताक्लेशयोगेनजेतव्योऽयंत्वयार्जुन ॥ ४ ॥ एवंब्रुवंतिवीरेहिगृध्रःपरमदारुणः ॥ धनंजयकिरीटा
ग्रेस्थितोमृत्युप्रदर्शकः ॥ ५ ॥ तेनतेविस्मिताःसर्वेत्रासिताविष्णुरातज ॥ अत्रांतरेचतुरगोदृष्टस्तस्यतुसेवकैः ॥ ६ ॥ कथि
तंपार्थपुत्रायगृहीतोलीलयाहयः ॥ बभ्रुवाहेनवीरेणदृष्टंपार्थबलंतदा ॥ ७ ॥ निर्भयोऽत्रमहाराजतृणवन्मन्यतेहितत् ॥ वी
रैःसंसदिद्द्यानीतंददर्शहरिसत्तमम् ॥ ८ ॥ पूजितंसर्वतोरम्यंसर्वाभरणभूषितम् ॥ सिंहासनेचोपविष्टोबभ्रुवाहोमहाबलः ॥
॥ ९ ॥ चित्रांगदासुतोवीक्ष्यतुरगंपत्रवाचनात् ॥ युधिष्ठिरस्यतंज्ञात्वापार्थेनप्रतिपालितम् ॥ १० ॥ सुमतिंपरिपप्रच्छमंत्रि

णमंत्रिसत्तमम् ॥ जननीमेपार्थपत्नीनृत्यंतीपितृसद्मनि ॥ ११ ॥ तालहीनायदायाता शप्ता महात्मना ॥ नक्रीभूताजले
तिष्ठचिरंवितथपालके ॥ १२ ॥ यदार्जुनस्यचरणौप्राप्स्यसेदैवयोगतः ॥ सत्वांमोचयिताभर्त्ताभविष्यतिनसंशयः ॥ १३ ॥
यदाजातंपुरापार्थात्संजातोऽहंपुरेशुभे ॥ जननीमांपरित्यज्यगच्छत्वंहियुधिष्ठिरम् ॥ १४ ॥ मयाराज्यंमहत्प्राप्तंपुत्रोऽहंपांड
वस्यहि ॥ किंकरोमिसुबुद्धेऽत्रकथंमेवैशुभंभवेत ॥ १५ ॥ स्वपितुस्तुरगश्चायंसमानीतोविचारतः ॥ सुबुद्धिरुवाच ॥ एवमेत
न्नसंदेहःप्रथमंनविचारितम् ॥ १६ ॥ त्वयैवपालनीयोऽयंवर्षमात्रंतुरंगमः ॥ अधुनाविधृतंराज्यंवित्तंचनृपसत्तम ॥ १७ ॥
समर्पयार्जुनंयाहिप्रसादयनिजंगुरुम् ॥ वैशंपायनउवाच ॥ श्रुत्वासुबुद्धेर्वचनंपश्चात्सबभ्रुवाहनः ॥ १८ ॥ तुरगंचगृही
त्वातुसबलःपितरंययौ ॥ संस्थाप्यवस्तुजातंतद्यदानीतंतदग्रतः ॥ १९ ॥ विनयाचारसंयुक्तोनत्वापार्थंपुरस्थितः ॥ बभ्रुवा
हनउवाच ॥ तवाहंपुत्रकस्तातउलूप्यापरिवर्द्धितः ॥ २० ॥ चित्रांगदाप्रसूतोहंत्वत्तस्तीर्थकरात्पुरा ॥ बभ्रुवाहननामानंन
जानेतुरगंतव ॥ २१ ॥ गृहाणराज्यंनिखिलंशाधिमांत्वंधनंजय ॥ तंतथाभाषमाणंहिसंवीक्ष्यार्जुनसेवकाः ॥ २२ ॥ प्रद्यु
म्नप्रमुखाःप्रोचुःपार्थंप्रतिविशांपते ॥ कथंपुत्रंनगृण्हासिब्रुवंतंपरमंहितम् ॥ २३ ॥ पुत्रःसपतितःपादौतमुत्थापयपांडव ॥
पश्यबुद्धिश्चमहतीस्वपुत्रस्यातितेजसः ॥ २४ ॥ वैशंपायनउवाच ॥ तेषांभाषितमाकर्ण्यपार्थःक्रोधसमन्वितः ॥ भावितेन
विनाशेननिर्गुणोवाक्यमब्रवीत ॥ २५ ॥ तदात्वंताडयित्वातुबभ्रुवाहनमौरसम् ॥ मस्तकेभर्त्सयन्कोपाद्दारुणंसमभाषत ॥
॥ २६ ॥ नत्वंममौरसःपुत्रोभयत्रस्तकलेवरः ॥ चित्रांगदाप्रसूतस्त्वंवेश्यायामन्यतस्तथा ॥ २७ ॥ प्रथमंविधृतःकस्मात्तुर
गोमेविनाबलात् ॥ सुभद्रातनयश्चैवममपुत्रःप्रतापवान् ॥ २८ ॥ येनद्रोणमुखावीराःसंग्रामेविमुखीकृताः ॥ चक्रव्यूहंविनि

भिर्यरक्षितोधर्मनंदनः ॥ २९ ॥ मूढसैन्यंनपतितंतावकंमच्छरैश्छितम् ॥ नत्राणाहदितेलग्नाःकथंभीतोऽसिदुर्मते ॥ ३० ॥
गंधर्वराजदुहिताजननीतावकीकृता ॥ तांचनर्त्तयभोदुष्टगापयस्वगृहेगृहे ॥ ३१ ॥ इतितस्यवचःश्रुत्वाबभ्रुवाहस्तुकोपितः ॥
वस्तुजातंपुनर्नीत्वायुद्धायकृतनिश्चयः ॥ ३२ ॥ गजाश्वरथपत्तींश्चवीरान्संगृह्यचागतः ॥ बभ्रुवाहेनवीरेणबलंपार्थस्यवेष्टितम्
॥ ३३ ॥ नानाशस्त्रप्रहारेणपार्थसैन्यंविघातितम् ॥ ततोरथंसमारुह्यदिव्यंकनकभूषितम् ॥ ३४ ॥ उवाचकार्ष्णिःपितरंतिष्ठदर्शयपौ
रुषम् ॥ घातयामिशरैर्घोरैःकस्त्वांत्राताऽद्यविद्यते ॥ ३५ ॥ यत्नात्तेनगृहेतातगताद्यपैत्रकंगृहं ॥ वैशंपायनउवाच ॥ अनुशा
ल्वोरथारूढस्तमियायरणप्रियः ॥ ३६ ॥ नानाहेतिभिराहत्यजितःसोपिरणांगणे ॥ वीरेणवाभ्रुवाहेणपश्यतांसर्वभूभुजाम्
॥ ३७ ॥ विसंज्ञंहिसमीक्ष्याथप्रद्युम्नोयोद्धुमाययौ ॥ बभ्रुवाहेनवीरेणबाणैर्भल्लैस्तुभेदितः ॥ ३८ ॥ कश्मलंप्रापराजेंद्रसर्वे
षांपश्यतांतदा ॥ वृषकेतुर्नीलकेतुर्यौवनाश्वःसपुत्रकः ॥ ३९ ॥ हंसध्वजःपुत्रयुतोमेघवर्णोबलाधिकः ॥ एतेसर्वेतमेकंवैना
तुयोधयितुंक्षमाः ॥ ४० ॥ पंचभिःपंचभिर्बाणैःसर्वांस्तान्निजघानह ॥ पलायंतितुभिन्नास्तेनानाहेतिभिराहताः ॥ ४१ ॥
कश्चित्प्रविष्टोनागस्यमृतस्यचकलेवरम् ॥ जीवनायस्थितोयावत्तावत्प्राप्तोमहान्वृकः ॥ ४२ ॥ गजदेहात्समाकृष्यचकार
चक्षुवर्जितम् ॥ बिभेदहृदयंतस्यवृकोमांसंतुभक्षयत् ॥ ४३ ॥ कश्चिच्छिन्नशिरायोद्धावृतश्चाप्सरसांगणे ॥ एवंतेनतदायुद्धं
कृतमर्जुनसूनुना ॥ ४४ ॥ अर्जुनस्यबलंसर्वपातितंशरजालकैः ॥ छिन्नभिन्नाश्चयेवीराउभयोर्दलयोरपि ॥ ४५ ॥ नीत्वा ॥९७॥
तेनगृहेतेनबभ्रुवाहेनयोषितः ॥ रथवाजिगजद्रव्यंदासीदासगणाश्चये ॥ ४६ ॥ तेनीताबभ्रुवाहेनअग्नेपार्थबलेतदा ॥ ४७ ॥
इतिश्रीमहाभारतेभारतसारेअश्वमेधपर्वणिबभ्रुवाहेनपार्थसैन्यभंगोनामषडशीतितमोऽध्यायः ॥ ८६ ॥ सप्ताशीतितमेऽध्या

192

येबभ्रुवाहिनसंयुगे ॥ वृषकेतोःशिरश्छिन्नंतत्सर्वमिहचोच्यते ॥ १ ॥ वैशंपायनउवाच ॥ संग्रामस्त्वभवद्राजन्बभ्रुवाहन
पार्थयोः ॥ यथाकुशस्यरामस्यवाजिमेधहयेहृते ॥ २ ॥ जनमेजयउवाच ॥ कथंरामस्यपुत्रस्यसंग्रामस्तुमुलोऽभवत् ॥ संदे
हस्तुमहान्ब्रह्मन्नतस्त्वंच्छेत्तुमर्हसि ॥ ३ ॥ वैशंपायनउवाच ॥ रामस्तुरावणंजित्वाकुंभकर्णंमहाबलम् ॥ तथान्यान्राक्षसा
न्जित्वासतींचगृहमानयत् ॥ ४ ॥ नववर्षसहस्राणिराज्यंचक्रेसराघवः ॥ ततःकालेनमहतासीतागर्भयुताभवत् ॥ ५ ॥
तदारामेणसापृष्टाकिंतेमनसिरोचते ॥ तयानिवेदितंस्वामिन्नृषिसेवांकरोम्यहम् ॥ ६ ॥ गंतुंभागीरथीतीरेममेच्छापरिवर्त्त
ते ॥ इतितस्यावचःश्रुत्वारामश्चिंतापरोऽभवत् ॥ ७ ॥ तावच्चारमुखाद्वार्त्ताश्रुतामानसदुःखदा ॥ रजकोक्तंवचस्तत्ररामेण
मनसिधृतम् ॥ ८ ॥ लक्ष्मणंकथयामासत्यजेमांवाल्मिकाश्रमे ॥ तेनोक्तंयद्वचस्तथ्यंलक्ष्मणेनतथाकृतम् ॥ ९ ॥ पश्चात्तया
प्रसूतौचसुतौकुशलवौतदा ॥ एतस्मिन्नंतरेराजन्विरक्तोराघवस्तथा ॥ १० ॥ ब्रह्महत्याविनाशायहयमेधंचकारह ॥ तस्मि
न्कालेरामहयोगतोवैवाल्मिकाश्रमे ॥ ११ ॥ तत्रबद्धोबलेनापिकुशेनैवमहात्मना ॥ भरतलक्ष्मणशत्रुघ्नैःकृतंयुद्धंमहत्तदा ॥
॥ १२ ॥ निर्जितास्तेत्रयस्तत्रकुशेनापिमहात्मना ॥ लवेनपातितंसैन्यंरामस्यचमहात्मनः ॥ १३ ॥ रामोपिबलवांस्तत्रम
हाबलसमायुतः ॥ आजगामरणेवीरःक्षणात्पुत्रेणनिर्जितः ॥ १४ ॥ तथैवबभ्रुवाहेननिर्जितोऽसौजयस्तथा ॥ एतत्तेकथितं
राजन्यत्पृष्टोहंत्वयाऽनघ ॥ १५ ॥ अतोग्रेऽहंप्रवक्ष्यामिबभ्रुवाहनचेष्टितम् ॥ यत्कृतंरणमध्येतुतत्सर्वंत्वंनिशामय ॥ १६ ॥
हंसध्वजेनवीरेणकृतंयुद्धंसुदारुणम् ॥ बभ्रुवाहेनवीरेणभग्नंरथसहस्रकम् ॥ १७ ॥ हंसध्वजःक्षणात्तत्रबभ्रुवाहेननिर्जितः ॥
पतितेचमहावीरेहंसकेतौमहात्मनि ॥ १८ ॥ सुवेगःसमरेयोद्धुंबभ्रुवाहनमागतः ॥ जघानवभिर्बाणैःपार्थसूनुर्महाबलः ॥

॥ १९ ॥ शिरांसिपक्कफलवत्पतंतिरणमंडले ॥ पक्षिणोनागचरणैश्छत्रैर्मुशलकंदलम् ॥ २० ॥ हस्तिशुंडस्यभेरीवैकरोति
तत्रभैरवः ॥ बाणेनैकेनसंग्रामेपार्थपुत्रेणपातितः ॥ २१ ॥ सुवेगोपिमहाराजतदद्भुतमिवाभवत् ॥ तस्मिन्कालेस्थितौद्वौतु
पार्थःकर्णसुतस्तदा ॥२२॥ येयेरणेहताराजन्तेगतास्तुपुरींतदा ॥ उलूपीपालयामासविविधैरौषधैश्चतान् ॥ २३ ॥ वैशंपा
यनउवाच ॥ पार्थेनकथितंतत्रवृषकेतोमहाबलम् ॥ बभ्रुवाहेनबलिनाबहुलंहिनिपातितम् ॥ २४ ॥ नदृश्यास्तत्रवीरास्तुन
जानेतेगतामृताः ॥ एवंब्रुवतिपार्थस्तुतावत्तस्याग्रतोनृप ॥ २५ ॥ तदापार्थकिरीटस्थोगृध्रस्तीव्रंववाशिरे ॥ एवमालोक्य
पार्थोपिवृषकेतुमुवाचह ॥ २६ ॥ याहित्वंभीमसेनंहिकथयत्वंयुधिष्ठिरम् ॥ मरणंमेथवाभंगःसूतवाजिविनाशनम् ॥ २७ ॥
भवान्वैकिंमयासार्द्धंप्राप्स्यसेमरणंध्रुवम् ॥ तवाद्यनाशेनष्टास्तेभविष्यंतिनसंशयः ॥ २८ ॥ अकार्यंचमहाजातंमत्तोराजा
चदीक्षितः ॥ असिपत्रव्रतधरोनचयज्ञक्रियाभवेत ॥ २९ ॥ वृषकेतुरुवाच ॥ नव्रजामिभयान्मृत्योरणंत्यक्त्वाधनंजय ॥
सूर्यःपितामहोभ्रातिमद्रूपात्पतितोभवेत् ॥ ३० ॥ इत्युक्त्वापंचभिर्बाणैःपार्थसूनुंजघानह ॥ बभ्रुवाहोपिबाणौघैरर्दयत्कर्ण
पुत्रकम् ॥ ३१ ॥ एवंबहुतरंयुद्धंकृतंकर्णात्मजेनच ॥ तदालाघवमाश्रित्यबभ्रुवाहेनधीमता ॥ ३२ ॥ बाणेनवृषकेतोर्हिशिरः
कंठान्निपातितम् ॥ पश्चात्कंदुकवत्प्राप्तंपार्थस्यपादयोःशिरः ॥३३॥ इतिश्रीम०भा०अश्वमेधपर्वणिवृषकेतुवधोनामसप्ताशीति
तमोऽध्यायः ॥ ८७ ॥ अष्टाशीतितमेऽध्यायेबभ्रुवाहेनघातितः ॥ पुनरुज्जीवितःपार्थःकृष्णेनतदिहोच्यते ॥ १ ॥ वैशंपा
यनउवाच ॥ वृषकेतोःशिरस्तद्वैसंग्रामेतुमहत्तदा ॥ जयकेशवरामेतिगोविंदेतिमुदावदन् ॥ २ ॥ अग्रहीत्तरसापार्थःकराभ्यां
कुंडलान्वितम् ॥ तत्स्वरूपंसमालोक्यविललापार्जुनस्तदा ॥ ३ ॥ अर्जुनउवाच ॥ हाकष्टंसुमहत्प्राप्तंविनात्वांपुत्रसंगरे ॥



194

195

कथयिष्यामिकिंगत्वाधर्मात्मानंयुधिष्ठिरम् ॥ ४ ॥ घातितस्तेपितापुत्रपश्चात्त्वमपिघातितः ॥ मयाराज्यस्यलोभायतत्त्वंक्ष
मितुमर्हसि ॥ ५ ॥ इत्युक्त्वासक्तकंठःसनूरुरोदहरिमास्मरन् ॥ क्वगतोसिजगन्नाथदुःखितंमांनविंदसि ॥ ६ ॥ नायासि
स्मृतमात्रस्त्वमन्यसक्तोऽसिसांप्रतम् ॥ एतावदुक्त्वावचनंमूर्च्छितोनिपपातह ॥ ७ ॥ हृदयेतच्छिरःकृत्वातस्मिन्महतिसंग
रे ॥ ततश्चित्रांगदासूनुःपतितंपितरंतदा ॥ ८ ॥ धनुष्कोट्याप्रतोद्यैनंप्रहसन्वाक्यमब्रवीत् ॥ वयंवैश्यभवापार्थतोलनार्थंस
मागताः ॥ ९ ॥ वृषकेतुंचत्वामद्यतोलयामिधनंजय ॥ कोदंडतुलयावीरमदीयैःपौरुषैःसह ॥ १० ॥ अधिकंयच्चयन्न्यूनंत
दद्यप्रविलोकये ॥ ततश्चुक्रोधबलवान्पार्थःक्रोधसमन्वितः ॥ ११ ॥ तच्छिरोन्नतमादायनमयित्वादधेधनुः ॥ उवाचपुत्रं
तरसाशूरस्त्वंबभ्रुवाहन ॥ १२ ॥ सर्वेवीरामदीयावैत्वयैकेननिपातिताः ॥ त्वांहत्वामोचयाम्येतान्कुपितोहंमहाहवे ॥१३॥
गृहाणसायकंवीरवृषकेतोश्चघातकम् ॥ मांचघातयतेनैवनान्यथात्वंकृतीक्षितौ ॥ १४ ॥ सहस्वमत्प्रहारंवैभेदनंपर्वतस्यच ॥
ततोमुमोचनाराचान्पार्थोबलवतांवरः ॥ १५ ॥ चित्रांगदात्मजस्यैवतद्भिन्नंप्रचुरंबलम् ॥ शरीरंतस्यवीरस्यभित्त्वापार्थोननना
दह ॥ १६ ॥ पार्थबाणैर्बलंव्याप्तंस्वकीयंबभ्रुवाहनः ॥ मुमोचशरजालंहितेनपार्थबलंहतम् ॥ १७ ॥ हत्वापार्थंजघानाशु
पार्थोवैमूर्च्छितःकृतः ॥ एवंयुद्धमभूद्घोरंबभ्रुवाहनपार्थयोः ॥ १८ ॥ गंधर्वादेवताःसर्वेपश्यंतिकौतुकंमहत् ॥ बभ्रुवाहनउ
वाच ॥ धनुर्विद्यात्वयापार्थशिक्षिताद्द्रोणतःपुरा ॥ १९ ॥ विस्मृतासाकथंपार्थकथंतेनागतोहरिः ॥ त्वयामेदुःखितापार्थजन
नीसापतिव्रता ॥ २० ॥ तेनपापेननायातिसर्वज्ञोजगदीश्वरः ॥ एवंब्रुवाणेपुत्रेतुपार्थोविव्याधसादरम् ॥ २१ ॥ युद्ध्यमाने
तदापार्थेबभ्रुवाहोमहाबलः ॥ बाणेनैकेनपार्थस्यशिरःकंठादपातयत् ॥ २२ ॥ हाहाःकारोमहानासीत्तत्रपार्थेनिपातिते ॥

भारत अनेकरत्नसंयुक्तमेकादश्यांनिशामुखे ॥ २३ ॥ कार्तिकेमासिसोमेचनक्षत्रेचोत्तराभिधे ॥ मुखंपार्थस्यतच्छिन्नंवासुदेवेतिज सार॰
ल्पकम् ॥ २४ ॥ तदाचित्रांगदाप्राप्तामणिनागपुरान्नृप ॥ श्रुत्वायुद्धेवपातंचफाल्गुनस्यैवनारदात् ॥ २५ ॥ रथारूढाचान्य
॥९९॥ जनाविनापुत्राज्ञयातदा ॥ अत्रांतरेमहाराजपार्थपुत्रोमहाबलः ॥ २६ ॥ गतोमणिपुरंरम्यंरत्नहर्म्यविभूषितम् ॥ सिंहास
नेचोपविष्टःस्तुतोमागधबंदिभिः ॥ २७ ॥ अत्रचित्रांगदाग्रेवैकथयंतिपुरस्त्रियः ॥ धन्यासिदेविवीरंत्वंप्रसूतासिमहाबलम् ॥ अ॰८८
अ.मे.पर्व १५ ॥ २८ ॥ येनायंनिहतःपार्थोविजयीयःसदाक्षितौ ॥ तासांवचनमाकर्ण्यवस्त्रालंकारमंडिता ॥ २९ ॥ नीराजनार्थपुत्रस्यचा
यातासापपातह ॥ हाहाकारस्तदाजातोबभ्रुवाहनमंदिरे ॥ ३० ॥ तदातुबभ्रुवाहेनमातुरग्रेनिवेदितम् ॥ यत्कृतंपूर्ववृत्तां
196 तंतत्सर्वंचश्रुतंमया ॥ ३१ ॥ ततोलूप्यान्वितासाचआयातापार्थसन्निधौ ॥ ततःपार्थशिरोगृह्यवृषकेतोस्तथैवच ॥ ३२ ॥
उलूप्यासहितातत्रस्थितासाऽतिरुरोदह ॥ उलूप्युवाच ॥ क्षणंप्रतीक्षतांपुत्रतातघातकदुर्मते ॥ ३३ ॥ उपायःकरणीयोऽत्र
यदिजीवेद्धनंजयः ॥ पातालेवर्त्ततेपुत्रमणिःसंजीवकस्तदा ॥ ३४ ॥ तमानयत्वंभोपुत्रयथाजीवेद्धनंजयः ॥ इतितस्यावचः
श्रुत्वाबभ्रुवाहोमहाबलः ॥ ३५ ॥ जगामनागलोकंतंपुंडरीकंबलैर्युतः ॥ मध्वस्त्रेणगतास्तेवैसर्पामधुमयास्तथा ॥ ३६ ॥
पिपीलिकाग्रव्यथितामणिस्तैस्तुसमर्पितः ॥ तंगृहीत्वापुनःप्राप्तःपार्थपुत्रोनिजंगृहम् ॥ ३७ ॥ यावदायातिगेहेऽसौधृतराष्ट्र
सो मीता सुतौतदा ॥ आगत्यशिरसानत्वापार्थकर्णात्मजंतथा ॥ ३८ ॥ कोपोस्माकंमहाराजनतदद्भुतमिवाभवत् ॥ एतस्मिन्नंतरे ॥९९॥
कालेस्वप्नंकुंतीददर्शह ॥ ३९ ॥ तस्यभावंविचार्याथकृष्णःसस्मारवाहनम् ॥ गरुडेतुसमारुह्यकृष्णःक्लेशविनाशनः ॥ ४० ॥
यशोदादेवकीचैवभीमःकुंतीतथैवच ॥ एतेसर्वेसमाजग्मुर्द्रष्टुंतत्रधनंजयं ॥ ४१ ॥ वृषकेतोश्चपतितंशिरोहीनंकलेवरम् ॥

अर्जुनस्य पितत्रैवदृष्टंतत्रकबंधकम् ॥ ४२ ॥ ततःप्रबुद्धोवीरोऽसौबभ्रुवाहोमहाबलः ॥ ददर्शभीमंकृष्णंचनत्वासर्वान्नस्थितः
स्वयम् ॥ ४३ ॥ बभ्रुवाहनउवाच ॥ संजीवकोनाममणिश्चानीतोयंमयाऽधुना ॥ विभोर्भाविविनाशस्यजयस्यजीवनायवै ॥
॥ ४४ ॥ परंचाहंनजानेवैकेनाप्यागत्यमस्तके ॥ नीतेकृष्णनपश्यामिमस्तकेउभयोरपि ॥ ४५ ॥ श्रीकृष्णउवाच ॥ शृण्वं
तुवचनंसर्वेमदीयंमंत्रसंयुतम् ॥ यद्यहंब्रह्मचर्येणनभग्नोभूतलेक्वचित् ॥ ४६ ॥ तेनपुण्येनमेकुंतीपार्थस्यायातुतच्छिरः ॥ यै
र्नीतंतेपतंत्वद्यशीर्षहीनाममाज्ञया ॥ ४७ ॥ एवंवदतिदेवेशेतौविनष्टौमहाविषौ ॥ तयोस्तुशिरसीप्राप्तेतदामणिपुरंप्रति ॥
॥ ४८ ॥ पश्चात्तेनचकृष्णेनमणिनाजीवितोजयः ॥ पश्चात्तेनैवमणिनाकर्णपुत्रस्तुजीवितः ॥ ४९ ॥ सर्वेह्यालिंगितास्तत्रय
थायोग्यंपरस्परम् ॥ कथितंकृष्णदेवेनशृणुमेपार्थभाषितम् ॥ ५० ॥ गंगाशापेनतेजातंपतनंवैधनंजय ॥ पुनःकृष्णप्रसादे
नजीवितोऽसिनसंशयः ॥ ५१ ॥ एवंपंचदिनान्स्थित्वारम्येमणिपुरेतदा ॥ भीमादींश्चागतान्येवैकृष्णःसर्वान्व्यसर्जयत्
॥ ५२ ॥ इतिश्रीमहाभारतेभारतसारेअश्वमेधपर्वणिअर्जुनसंजीवनंनामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥ एकोननवतितमे
द्विजरूपधरोहरिः ॥ मयुरध्वजंजिगायासौसपार्थस्तत्तुभण्यते ॥ १ ॥ वैशंपायनउवाच ॥ स्वयंकृष्णस्तुभगवानर्जुनेनसम
न्वितः ॥ ररक्षवाजिनंराजन्मुक्तंमणिपुरात्तदा ॥ २ ॥ तावत्ताम्रध्वजस्यैवदृष्टोवाजिःससैनकः ॥ उभौचवाजिनौतत्रमिलि
तौचातिदर्शनौ ॥ ३ ॥ नासानासंचसंस्पृश्यरेजतुस्तौचवाजिनौ ॥ ततस्ताम्रध्वजोराजाज्ञात्वापार्थसमागतम् ॥ ४ ॥
कृष्णंचदेवप्रवरंबबंधतुरगंतदा ॥ ततोनानाविधैःशस्त्रैर्युद्धंकृत्वात्वनेकधा ॥ ५ ॥ सर्वान्वीरान्विजित्याशुतुरगौस्वपुरंनयत् ॥
मयूरध्वजउवाच ॥ अकार्यंसुमहत्कृत्वापुत्रःप्राप्तोममांतिकम् ॥ ६ ॥ गृहीत्वातुरगौमंदहाकष्टंवंचितोऽस्म्यहम् ॥ एतस्मि

न्नंतरेकालेपार्थःप्रोवाचमाधवम् ॥ ७ ॥ कृष्णकृष्णाप्रमेयात्मन्कथमश्वंविमोक्षये ॥ ताम्रध्वजोमहायोद्धातमुपायंवदप्रभो ॥ ८ ॥ श्रीकृष्णउवाच ॥ भोपार्थशृणुमेवाक्यंधर्मवान्सत्यसंगरः ॥ दाताशूरश्चविद्वांश्चमयूरध्वजनामतः ॥ ९ ॥ अस्य पुत्रःसुवित्तोवैताम्रध्वजइतिस्मृतः ॥ एहित्वंतुमयासार्द्धंपरीक्षांदर्शयामिते ॥ १० ॥ वृद्धोऽहंब्राह्मणोभूत्वाप्रार्थयेतादृशंनृपम् ॥ त्वांबालकंकरिष्यामिहितार्थंतवसुव्रत ॥ ११ ॥ ततःप्रभातेविमलेमाधवोर्जुनसंयुतः ॥ प्रययौनृपतिंद्रष्टुमुपविष्टंवरासने ॥ १२ ॥ दीक्षितंजाययायुक्तंतुरंगद्वयसंयुतम् ॥ स्वस्तितेनृपशार्दूलविद्धिमांद्विजमागतम् ॥ १३ ॥ शृणुराजन्प्रवक्ष्यामि यदर्थमहमागतः ॥ नगरेतवराजेंद्रसुशीलोनामवैद्विजः ॥ १४ ॥ तस्यैकाकन्यकाराजन्रूपयौवनसुंदरी ॥ तांनुप्रार्थयितुंराजन्नगराद्वजसाव्हयात् ॥ १५ ॥ आयामिपुत्रसहितोयावत्तेनगरींप्रति ॥ तावन्मार्गेवनेघोरेसिंहःकोपसमन्वितः ॥ १६ ॥ अग्रहीत्तरुणंपुत्रंपश्यतोममपार्थिव ॥ ततोभयात्स्वपुत्रस्यमोक्षणायोद्यमःकृतः ॥ १७ ॥ स्मृतोनृसिंहस्तत्राशुनागतःस्मरणान्मम ॥ दुःखितंमांसमालोक्यसिंहःप्रोवाचविस्मयन् ॥ १८ ॥ वृथाश्रमंमाविप्रेंद्रपुत्रंप्रतिकुरुप्रभो ॥ मयाग्रस्तंहिकालेननान्योमोचयितुंक्षमः ॥ १९ ॥ विप्रउवाच ॥ मांहिभक्षयसिंहत्वंमुंचपुत्रंमहाबलम् ॥ वृथास्याप्यायुषोऽर्थंजीवितंपुत्रवर्जितम् ॥ २० ॥ केनोपायेनदानेनतपसात्वंप्रमुंचसि ॥ यदुक्तंसिंहराजेनतत्कथंतेवदाम्यहम् ॥ २१ ॥ राजोवाच ॥ यत्प्रार्थितंकेसरिणातत्तेदास्यामिनिश्चितम् ॥ २२ ॥ अपुत्रत्वंदारुणंहिकःप्राणान्दास्यतेमम ॥ तेनोक्तंहिमहारण्येशरीरार्द्धंसमानय ॥ २३ ॥ मयूरकेतुपुत्रस्यततोमुंचामिभूसुर ॥ त्वदीयंतपसादग्धंवृद्धंगात्रंनरोचते ॥ २४ ॥ नानास्वादुफलैर्जुष्टंदिव्यदुग्धरसैर्युतम् ॥ मयूरकेतोर्निर्भिन्नंसुप्रियंममदीयताम् ॥ २५ ॥ यावत्त्वंनयसेगात्रंतादृशन्तावदेवहि ॥ पुत्रंनतेभक्षयेयमहंस

त्यंवदामिते ॥ २६ ॥ विप्रउवाच ॥ किमर्थंस्वशरीरंहिराजामेसंप्रदास्यति ॥ सिंहोक्तंदानशूराणांदुस्त्यजंतुनकिंचन॥२७॥
इत्थंतेनवनेप्रोक्तं.सिंहेनामिततेजसा ॥ साशिष्यस्त्वद्गृहंप्राप्तःपुत्रशोकातुरोनृप ॥ २८ ॥ नाप्युपायांतरेणैवसिंहात्पुत्रंसमान
ये ॥ यादृशःकेसरीजातःकथयन्दारुणंवचः ॥ २९ ॥ नृपउवाच ॥ तिष्ठविप्रेंद्रदास्यामिमंडपेस्वंकलेवरम् ॥ एवमुक्त्वाव
चोराजापुत्रेराज्यंसमर्पयत् ॥ ३० ॥ सुस्नातोजान्हवीतोयैःशालिग्रामशिलाजलैः ॥ तुलसीदलजांमालांकंठेकृत्वाहसन्निव
॥ ३१ ॥ शंखचक्रांकितंदेहंकृत्वाराजामुदान्वितः ॥ राजामंडपमागत्यसर्वानिदमभाषत ॥ ३२ ॥ राजोवाच ॥ एवंविप्रंकृ
ष्णरूपंपुत्रार्थंचसमागतम् ॥ अर्पयामिस्वदेहंचयथापुत्रयुतोभवेत् ॥ ३३ ॥ पश्यंतुकौतुकंसर्वेयज्ञेमेयेसमागताः ॥ घातुका
श्चसमायांतुकरपत्रसमन्विताः ॥ ३४ ॥ स्तंभौरोपयतांतत्रभिंदंतुममंमस्तकम् ॥ येषांप्रियोयंसततंतैर्नवाच्यंहिदूषणम् ॥
॥ ३५ ॥ ततोनृपःप्रसन्नोऽसौदत्वादानान्यशेषतः ॥ प्रविवेशतयोर्मध्येस्तंभयोःसुप्रतिष्ठयोः ॥ ३६ ॥ करपत्रंस्वयंधृत्वाम
स्तकेस्थापितंतदा ॥ क्षालयित्वाविप्रपादौराजावचनमब्रवीत् ॥ ३७ ॥ राजोवाच ॥ शरीरार्द्धेनगोविंदःप्रीयतांयज्ञनायकः ॥
गृहाणविप्रभिन्नंमेशरीरार्द्धंसमर्पितम् ॥ ३८ ॥ इत्युक्त्वासौतदाराजाशरीरमभिनत्स्वयम् ॥ परोपग्रहणेयेषांशरीरंवित्तसंग्र
हः ॥ ३९ ॥ यातियद्यत्स्थितंशोच्यमुभयोर्दानवर्जितम् ॥ तस्मात्प्रहर्षःकर्त्तव्योमांनिरीक्ष्यसभासदैः ॥ ४० ॥ यावद्भिन
त्तिगात्रंसस्तावद्भार्याब्रवीद्वचः ॥ कुमुद्वत्युवाच ॥ ममदेहंगृहाणत्वंविप्रमोचयतंसुतम् ॥ ४१ ॥ शरीरार्द्धंहिभार्याचश्रुति
रेषाप्रसिद्धिका ॥ सजीवंदीयतेदानंनिर्जीवंचनदीयते ॥ ४२ ॥ परेणभिन्नंपंचास्योनगृण्हातिमतिर्मम ॥ प्राणनाथस्यपुरतो
यानारीमृत्युमाव्रजेत् ॥४३॥ धन्यांगतिमवाप्नोतिनात्रकार्याविचारणा ॥ विप्रउवाच ॥ सिंहेनकथितंराजन्वामांगंनैवरोच

 ते ॥ ४४ ॥ दक्षिणांगंप्रदेयंमेतत्कथंनीयतेमया ॥ ततःप्रोवाचपुत्रोसौताम्रकेतुर्द्विजंप्रति ॥ ४५ ॥ दक्षिणांगमहंस्वामिन् 
नृपस्यास्मिद्विजोत्तम ॥ आत्मावैजायतेपुत्रःश्रुतिरेषाबलीयसी ॥ ४६ ॥ विप्रउवाच ॥ सत्यंत्वंभाषसेपुत्रवचःकेसरिणःशृ
 णु ॥ पुत्रेणभार्ययाभिन्नंमयूरध्वजमस्तकम् ॥ ४७ ॥ द्विधाजातंशरीरार्द्धंदक्षिणांगंत्वमानय ॥ कथंतदन्यथाकर्त्तुंशक्यतेम 
 द्विधेनहि ॥ ४८ ॥ वैशंपायनउवाच ॥ ततःसन्नृपशार्दूलोवारयित्वाप्रियांसुतम् ॥ तयोःकरेददौराजन्करपत्रंमुदान्वितः ॥
 ॥ ४९ ॥ गायन्हरिगुणांस्तत्रहरिभक्तिरतःसदा ॥ करपत्रंकरेधृत्वानिजनाथंविदारयत् ॥ ५० ॥ विभेदकरपत्रेणसमक्षंकृ
ष्णपार्थयोः ॥ हाहाकारोमहानासीत्तदाजन्मेजयप्रिय ॥ ५१ ॥ वामनेत्रजलंप्राप्तंवीक्ष्यविप्रोदुरासदः ॥ प्रत्युवाचमही
पालंरक्ताक्षःसन्द्विजोत्तमः ॥ ५२ ॥ नगृहीष्यामितेगात्रंरुदंत्यजसिमारिष ॥ अभावोपहतंदानंनगृण्हंतिविपश्चितः ॥५३॥
विनापुत्रेणमेस्वर्गोमाभूयात्तुमहीपते ॥ सिंहोयातुयथास्थानंगृहीत्वाममबालकम् ॥ ५४ ॥ एतावदुक्त्वावचनंपरित्यज्यमही
पतिम् ॥ प्रययौपश्यतांस्थानात्शिष्ययुक्तोजनार्दनः ॥ ५५ ॥ गच्छंतंब्राह्मणंवीक्ष्यपतिंप्राहकुमुद्वती ॥ सत्यव्रतमहाभाग
वदान्यानांशिरोमणे ॥ ५६ ॥ ब्राह्मणोर्द्धंशरीरस्यपरित्यज्याथगच्छति ॥ नाथवारयगच्छत्वंविप्रंदेहार्द्धयाचकम् ॥ ५७॥
अगृहीत्वागतेविप्रेकीर्त्तिस्तेविफलाभवेत् ॥ मागच्छमुनिशार्दूलश्रुत्वायाहिवचोमम ॥ ५८ ॥ दक्षिणाब्राह्मणार्थेयंमदीयंच
समागतम् ॥ वामांगंपतितंभूमौवृथायायास्यतिमेकथम् ॥ ५९ ॥ एवमुक्तेतुवचनेकृष्णोविह्वलमानसः ॥ समालिंग्याब्रवीद्वी 
रंस्वरूपंपरिदर्शयन् ॥ ६० ॥ श्रीकृष्णउवाच ॥ धन्योऽसिनृपशार्दूलमयूरध्वजसुव्रत ॥ परीक्षितोसिबहुधामयाछद्मद्विजेन
च ॥ ६१ ॥ यज्ञंकुरुमहाबाहोसपत्नीकःसपुत्रकः ॥ मयूरध्वजउवाच ॥ ब्रह्मस्वरूपगोविंदवंशोमेपावितस्त्वया ॥ ६२ ॥

किंमेयज्ञेनगोविंदयदिदृष्टोऽसिकेशव ॥ दृष्टेत्वयिजगन्नाथेकीर्त्तिश्चनमितेस्तुते ॥ ६३ ॥ यज्ञकोटिकृतंपुण्यंभविष्यतिनसंश
यः ॥ ६४ ॥ इतिश्रीमहाभारतेभारतसारेअश्वमेधपर्व्वणिमयूरध्वजोनामैकोननवतितमोऽध्यायः ॥ ८९ ॥ नवतितमअ
ध्यायेचंद्रहासकथावदन् ॥ कृष्णस्तच्चरितंपार्थमादिदेशेतिवर्ण्यते ॥ १ ॥ वैशंपायनउवाच ॥ तुरगेतुगतेराजंस्ततोवैवीरव
र्मणः ॥ धर्मश्चतुष्पाद्यत्रैवतेनभूपतिनाकृतः ॥ २ ॥ जामातायस्यसयमोराष्ट्रेतिष्ठतिमूर्तिमान् ॥ सारस्वतेपुरेरम्येलोकाधर्म
परायणाः ॥ ३ ॥ अर्जुनंकृष्णसहितंरक्षंतंवरवाजिनौ ॥ सुश्राववीरवर्मासौराष्ट्रेबहुलसैनिके ॥ ४ ॥ दधारतुरगौतत्रवीरवर्मा
महाबलः ॥ चकारतुमुलंयुद्धंसर्वान्वीरान्जयत्तथा ॥ ५ ॥ धर्मराजेनपार्थस्यपातितंविविधंबलम् ॥ हतप्रवीरमत्युग्रंश्वशु
राग्रेनराधिप ॥ ६ ॥ पार्थोवीक्ष्यहतंसैन्यंजःपात्रावीरवर्मणः ॥ उवाचकेशवंवीरोविस्मयन्निवभारत ॥ ७ ॥ कोसौदेवोजग
न्नाथनररूपेणमेबलम् ॥ पातितंसकलंबाणैःसमक्षंतवसंनिधौ ॥ ८ ॥ माधवउवाच ॥ यमंविद्धिमहाबाहोपुरतःस्थितमाह
वे ॥ प्रार्थितंचैवकन्यार्थैस्त्वपुरेवीरवर्मणः ॥ ९ ॥ अर्जुनउवाच ॥ किमेतत्कृष्णकथितंयमोनृपसुतामिति ॥ कथमेतत्संग
तंहितत्सर्वंवदकेशव ॥ १० ॥ कृष्णउवाच ॥ मालिनीनामकन्यासासंजातावीरवर्मणः ॥ महतींतांतदादृष्ट्वापित्रापृष्टातुसा
तदा ॥ ११ ॥ सर्वेषुनरवर्येषुकस्तेभर्त्तातिरोचते ॥ तयातस्यतथैवोक्तंममभर्त्तायमःस्मृतः ॥ १२ ॥ शरणंयंचतुर्दिक्षुमृता
यांतिहिप्राणिनः ॥ इतितस्यावचःश्रुत्वावीरवर्मामहाबलः ॥ १३ ॥ यमसूक्तेनमंत्रेणस्तौतिधर्मंहिसर्वदा ॥ अत्रांतरेनारदेन
यमायसंनिवेदितम् ॥ १४ ॥ मालिनीधर्मनिरताकन्यावैवीरवर्मणः ॥ त्वांचध्यायतिसूक्तेनवरत्वंचकृपांकुरु ॥ १५ ॥ नार
दस्यवचःश्रुत्वाप्रस्थानंकृतवान्यमः ॥ वैशाखेमासिशुक्लेवैवरणायसमुद्यतः ॥ १६ ॥ यमोपिनायकानांतुशतमष्टोत्तरंतदा ॥

आदिदेशमहाकायान्महाबलपराक्रमः ॥ १७ ॥ तेषांमध्येमहाराजक्षयोवचनमब्रवीत् ॥ क्षयउवाच ॥ कथंममगतंनाथत
स्मिन्राष्ट्रेभविष्यति ॥ १८ ॥ विप्रप्रियाश्चतेलोकाराजापिद्विजसेवकः ॥ यमउवाच ॥ भवंतोविविधाकारामहाकायामहाब
लाः ॥ १९ ॥ यथाममपुरेवासःक्रियतेवचनंयथा ॥ तथासर्वेनपश्यामःकर्त्तव्यंवीरवर्मणः ॥ २० ॥ वैशंपायनउवाच ॥ त
तोयमस्तुतैर्भृत्यैःकामरूपैःसमन्वितः ॥ परिणेतुंनृपसुतांपुरेसारस्वतेययौ ॥ २१ ॥ वरयामासशर्मिष्ठांमालिनींचतदायमः ॥
तदाप्रभृतिधर्मोसौजामातावीरवर्मणः ॥ २२ ॥ इतिकृष्णवचःश्रुत्वामयायुद्धंकृतंतदा ॥ वीरवर्मोवाच ॥ चराचरंत्वयापा
र्थशक्यतेजेतुमाहवे ॥ २३ ॥ त्वद्वाक्येनामुनावीरप्रसन्नंममानसम् ॥ इत्युक्त्वाधनुरुत्सृज्यपतितःकृष्णपादयोः ॥ २४ ॥
दत्वाबहुतरंद्रव्यंगजाश्वरथसंकुलम् ॥ पंचरात्रंततःस्थित्वासहैवानिर्गतःस्वयम् ॥ २५ ॥ सारस्वतपुरान्मुक्तौवाजिनौनिर्ग
तौनृप ॥ चंद्रहासपुरंप्राप्तौयत्रकौंतलकोनृपः ॥ २६ ॥ पृष्ठतोनिर्ययुःसर्वेकृष्णार्जुनपुरःसराः ॥ योद्धाराऊचुः ॥ वाजिनौनः
कुतःप्राप्तौननीतौननभोगतौ ॥ २७ ॥ आकाशेविप्लुतौकिंवैतदुक्त्वादुःखिताभवन् ॥ तावद्ददृशुराकाशेपुरुषंनारदंवरम् ॥
॥ २८ ॥ पप्रच्छुस्तेतदातंवैकृष्णार्जुनपुरःसराः ॥ नारदउवाच ॥ पार्थतेतुरगावेतौगतौकौंतलकंपुरम् ॥ २९ ॥ चंद्रहासो
महाबाहुर्योद्धाताद्दृक्नविद्यते ॥ अर्मीनृपतयस्तस्यकलांनार्हंतिषोडशीम् ॥ ३० ॥ नारदस्यवचःश्रुत्वापार्थाःपुनरथाब्रवीत् ॥
स्वामिन्कश्चंद्रहासस्तुराजाकौंतलकेपुरे ॥ ३१ ॥ नारदउवाच ॥ केरलाधिपतिःपूर्वमासीद्राजासुधार्मिकः ॥ परलोकगतं
श्रुत्वापतिंसानिजमन्वगात् ॥ ३२ ॥ पितृभ्यांरहितंबालंधात्रीकुंतलकंपुरम् ॥ निन्येतंपालयामासनिजराज्ञःसुतंशुभम् ॥
॥ ३३ ॥ वर्षाणिचतथात्रीणिपालितोयत्नतःसुतः ॥ धान्याकंडनपेषादिकर्मभिःकौंतलेपुरे ॥ ३४ ॥ ध्यायतिस्वंनृपंरात्रौस्म

त्वाचार्यंदिनेदिने ॥ तदापंचत्वमापन्नाधात्रीबालंविनासती ॥ ३५ ॥ तदास्नेहेनबहुनाकेनचित्प्रतिपालितः ॥ तदापंचाब्दि
कोज्ञातस्ततःस्वैरंचचारसः ॥ ३६ ॥ वीक्ष्यतथार्भकैःसाकंरमतेपितथैवहि ॥ भोजयंत्यश्चतंकाश्चित्स्नापयंतिपुरस्त्रियः ॥
॥ ३७ ॥ कंचुकानिप्रयच्छंतिबहुमूल्यकराणिच ॥ उपानहौपट्टसूत्रंरक्तंशिरसिशोभनम् ॥ ३८ ॥ दुष्टबुद्धेःप्रधानस्यमंदिरं
स्वेच्छयागमत् ॥ विप्रैर्योगेश्वरैश्चैवमुनिभिःसमलंकृतम् ॥ ३९ ॥ तंशिशुंमुनयःसर्वेदृष्ट्वाविस्मयमागताः ॥ पश्चाच्चबुभुजुस्ते
नशिशुनापांडुनंदन ॥ ४० ॥ दुष्टबुद्धिर्विनीतःसंस्थान्मुनीन्परिपूजयत् ॥ ततःप्रसन्नमनसोमुनयःशंसितव्रताः ॥ ४१ ॥
आशीर्भिरभिनंद्याथचिरंजीवसुखीभव ॥ प्रोचुस्तेऋषयःसर्वेदुष्टबुद्धिंतदाऽर्जुन ॥ ४२ ॥ यस्त्वयावीक्ष्यतेबालःपुरस्तात्पंचवा
र्षिकः ॥ कोऽयंकस्यसुतःप्राप्तःकस्माद्देशात्समागतः ॥ ४३ ॥ इतिपृष्टेदुष्टबुद्धिःप्रत्युवाचसतान्मुनीन् ॥ दुष्टबुद्धिरुवाच ॥
कतिबालावसंतीहह्यनाथाऽस्मिन्पुरेशुभे ॥ ४४ ॥ राजकार्येगरीयस्तान्नाहंजानामिबालकम् ॥ ४५ ॥ मुनयऊचुः ॥ मनो
हरोलक्षणसंयुतोऽयंबालोध्रुवंराजधरोविभाति ॥ भोदुष्टबुद्धेपरिपालयैनंतत्संपदापालयितातवाग्रे ॥ ४६ ॥ ततोविसृष्टामुन
यःसरोषंबुद्ध्यासमीक्ष्याथसुखंनलेभे ॥ यथागतास्तेमुनयोहिजग्मुःसराजमंत्रीभृशमप्यतप्यत ॥ ४७ ॥ किमेभिरीडर्यैःक
थितंवचोमेत्वत्संपदानामधिपोभविष्यति ॥ बालःकथंतद्विपरीतकर्ताह्येषांमुनीनामहमस्मिवाक्यम् ॥ ४८ ॥ विचार्यमंत्रीनृ
पतेःशिशोर्वधंसमाव्हयच्चांत्यजवृंदमातुरः ॥ रेरेपशुघ्नावनगव्हरंमहत्निनायबालंप्रतिहंतुमर्हथ ॥ ४९ ॥ चिन्हंशरीरस्य
किमप्यदृष्टमानेयमस्मत्परितोषकारि ॥ ततोभवद्भ्योविविधामहिष्योमयाप्रदेयाघटदुग्धभाजनाः ॥ ५० ॥ नारदउवाच ॥
तस्यवाक्यंसमाकर्ण्यचांडालाहर्षनिर्भराः ॥ प्रातर्गृहीत्वातंबालंनिन्युर्वैवनगव्हरम् ॥ ५१ ॥ सुधार्मिकस्यतनयंहसंतमव

धार्यंच ॥ शस्त्राणिसितधाराणिकेशेषुजगृहुस्तदा ॥ ५२ ॥ भ्रमतातेनशिशुनायाद्दष्टाप्रतिमाहरेः ॥ शालिग्रामशिलारम्या
तांमुखेसोर्भकःक्षिपत् ॥ ९३ ॥ इतिश्रीमहाभारतेभारतसारेअश्वमेधपर्वणिचंद्रहासोपाख्यानेनवतितमोऽध्यायः ॥ ९० ॥
एकाधिकनवतितमेचंद्रहासस्यश्रीहरौ ॥ भक्तिर्विद्याग्रहश्चैववर्ण्यतेनरदुष्करः ॥ १ ॥ नारदउवाच ॥ सार्भकःपार्थदेवेशंदध्यौ
नारायणंस्वयम् ॥ कृष्णकृष्णजगन्नाथवासुदेवजनार्दन ॥ २ ॥ चांडालाःशितधारैश्वखड्गैर्घ्नंतिजगत्पते ॥ पाहिमांपरमानं
दसर्वव्यापिन्नमोस्तुते ॥ ३ ॥ ततोदेवःसभगवान्चांडालांस्तानमोहयत् ॥ मोहितास्त्वंत्यजावाक्यमब्रुवन्कीदृशःशिशुः ॥
॥ ४ ॥ सकुमारोविशालाक्षोदीर्घबाहुर्मनोहरः ॥ किंदुष्टबुद्धिनाप्रोक्तंहंतव्योबालकोवने ॥ ५ ॥ यद्वयमंत्यजाजाताःपूर्वपापे
नकर्मणा ॥ बालकस्यवधाद्धोराभविष्यामोऽत्रकीदृशाः ॥ ६ ॥ इत्युदीर्यशिरोदेशंनिरीक्ष्यतेऽस्यचांत्यजाः ॥ वामपादेचतांष
ष्ठीमंगुलीदद्दशुर्जनाः ॥ ७ ॥ नीत्वादास्यामश्चिन्हार्थंदुष्टबुद्धेर्दुरात्मनः ॥ इत्युक्त्वाचिच्छिदुःषष्ठीमंगुलींतांकराग्रतः ॥ ८ ॥
त्वरितास्तेपुरंजग्मुश्चिन्हमादायहर्षिताः ॥ दुष्टबुद्धिंनमस्कृत्यदर्शयामासुरंगुलीम् ॥ ९ ॥ जहर्षहृदिदुर्बुद्धिर्मयाऽकारिवचोऽनृ
तम् ॥ मुनीनामथचांडालान्महिषीभिरतोषयत् ॥ १० ॥ छिन्नषष्ठांगुलीबालःक्षरद्रुधिरलेपवान् ॥ भृशंरुरोददुःखार्तोमोह
यन्हरिणीगणान् ॥ ११ ॥ पाहिमांदेवदेवेशकृष्णनाथकृपानिधे ॥ कृच्छ्रान्मोचयमेनाथसर्वव्यापिन्नमोस्तुते ॥ १२ ॥ इ
त्युक्तवंतंतंबालंदुःखार्त्तंभयविह्वलम् ॥ पक्षिणोदुःखितास्तत्रछायांपक्षैःसमचक्रिरे ॥ १३ ॥ एतस्मिन्नंतरेप्राप्तोदेशाध्यक्षःकु
लिंदकः ॥ तद्देशरक्षणार्थायह्यागतोवनगव्हरम् ॥ १४ ॥ ततोददर्शतंबालंशतपत्रदलाननम् ॥ जपंतंहरिनामानिरामगोविं
दमाधव ॥ १५ ॥ श्रुत्वातुनृपतिस्तत्रकुलिंदोविस्मयान्वितः ॥ अवतीर्यहयात्क्षिप्रंबालंतंपरिसांत्वयन् ॥ १६ ॥ उवाच

वाक्यंमेधाविसोऽश्रूणिपरिमार्जयन् ॥ कःपितातेचकामाताक्कचतेसुहृदांगणाः ॥ १७ ॥ कथंत्वंनिर्जनेऽरण्येस्थितःप्रब्रूहिमां
शिशो ॥ बालकउवाच ॥ ममप्रमातापिताकृष्णस्तेनाहंप्रतिपालितः ॥ १८ ॥ तमपश्यन्महाराजरोदनंचकरोम्यहम् ॥ श्रु
त्वैनच्चिंतयामाससराजाविष्णुराटज ॥ १९ ॥ ममापुत्रस्यजायेतवैष्णवोऽसौसुतःशिशुः ॥ इत्युक्त्वातंसमालिंग्यवाजिपृष्ठे
त्वरोपयत् ॥ २० ॥ निनायनगरेरम्येनिजगेहेकुलिंदकः ॥ मेधावत्यैस्वराज्ञैतंपुत्रंलब्धंन्यवेदयत् ॥ २१ ॥ साहर्षिताऽब्र
वीद्वाक्यमशोकाहंत्वयाकृता ॥ नारदउवाच ॥ ततःकुलिंदोमेधावीउत्सवंसमचीकरत् ॥ २२ ॥ गणकाऊचुः ॥ अयंगुण
युतःश्रीमान्विष्णुभक्तोमहायशः ॥ चंद्रहासेतिनामासौभविष्यतिनसंशयः ॥ २३ ॥ तदाप्रभृतिभोपार्थचंद्रहासोदिनेदिने ॥
कुलिंदस्याशयासार्द्धंवर्द्धतेचयथाशशी ॥ २४ ॥ सप्ताब्दिकश्चंद्रहासःपपाठाक्षरनिर्णयम् ॥ विचार्यसम्यग्विधिनाहरिरित्य
क्षरद्वयम् ॥ २५ ॥ सजजापयदाकुद्धस्तदासोऽक्षरपाठकः ॥ प्राहचाहर्निशंबालंहरिरित्यक्षरद्वयम् ॥ २६ ॥ जपसेकिंजप
त्वंहिवर्णानांमध्यतोऽर्भक ॥ चंद्रहासउवाच ॥ सिद्धोवर्णसमाम्नायोरामाद्यागुरवोमम ॥ २७ ॥ हरिरित्यक्षरालापान्नान्यं
निःसरतेमुखात् ॥ गुरुस्तुशिक्षयामासकरेधृत्वाचतंसुतं ॥ २८ ॥ ककेतिवदरेशिष्यवृथान्यत्परिवर्त्तसे ॥ चंद्रहासउवाच ॥
यस्मिन्शास्त्रेपुराणेचहरिनामनकथ्यते ॥ २९ ॥ श्रोतव्यंनैवतच्छास्त्रंपरब्रह्मावदत्स्वयम् ॥ नारदउवाच ॥ एकादशीदिने
प्राप्तेनान्नंभुंक्तेनचानृतम् ॥ ३० ॥ ब्रह्मविद्यारतोनित्यंहरिभक्तिरतःसदा ॥ वर्त्ततामष्टमाब्देनमेखलाबंधनक्रियाम् ॥ ३१ ॥
कृत्वावेदस्यपठनंकृतंशास्त्रेणसंयुतम् ॥ चंद्रहासस्ततःपश्चाद्धनुर्वेदंसमभ्यसत् ॥ ३२ ॥ इतिश्रीमहाभारतेभारतसारेअश्वमे
धपर्वणिचंद्रहासव्रतबंधोनामएकनवतितमोऽध्यायः ॥ ९१ ॥ द्विनवतितमेऽध्यायेचंद्रहासस्यप्रस्फुटम् ॥ माहात्म्यंविप्रभ

भारत क्तिश्चकथ्यतेसुरदुष्करा ॥ १ ॥ नारदउवाच ॥ अथोनषोडशाब्देऽसौपितरंवाक्यमब्रवीत् ॥ यदिशिक्षासिचेन्मह्यमाज्ञांदि सार.
ग्विजयाश्रिताम् ॥ २ ॥ याम्यहंसकलान्भूपान्जित्वाऽहंधनमानये ॥ कुलिंदःप्रत्युवाचेदंकथमेकःप्रयास्यसि ॥ ३ ॥ रा
॥१०४॥ जानःसंतिदुर्जेयाःसैन्येनमहतावृताः ॥ अथवावासुदेवंतंसंस्मृत्यचरसेहठात् ॥ ४ ॥ अस्मत्स्वामीदुष्टबुद्धिर्मंत्रीकुंतलकस्य अ०८९
अ.मे.पर्व च ॥ शतग्रामाममैवासन्देशस्तेनार्पितोमम ॥ ५ ॥ इतितस्यैवनृपतेर्वैरिणोबलवत्तराः ॥ पीडयंतिस्ममद्देशंत्वामाकर्ण्यपर
१५ स्परम् ॥ ६ ॥ इत्थंपितुर्वचःश्रुत्वाचंद्रहासोययौमुदा ॥ पंचभिरंथिभिःसार्द्धंदेशांस्तान्द्रव्यपूरितान् ॥ ७ ॥ तान्सर्वानज
यद्धन्वीचंद्रहासोमहान्नृपः ॥ विजित्यनृपतन्सिर्वान्गजानश्वान्सहस्रशः ॥८॥ सुवर्णरत्नमुक्ताभिःपूरितान्शकटान्बहून् ॥
चंद्रहासःसमादायस्वपुरींचंदनावतीम् ॥ ९ ॥ प्रविवेशकुलिंदेनसन्मुखेनाभिवंदितः ॥ अथाभिषिच्यतंपुत्रंचंद्रहासंस्वकेपदे
॥ १० ॥ वेदविद्भिर्द्विजैःसार्द्धंकुलिंदःपंचमीदिने ॥ महोत्सवंतदाचक्रुःपौराःसर्वेयथाक्रमम् ॥ ११ ॥ एवंसंपूजितःपौरैश्चंद्र
हासोऽब्रवीद्वचः ॥ अतःप्रभृतिभोपौराःप्राप्तेयामेदिनेशुभे ॥ १२ ॥ उत्सवंब्रह्मचर्यंवायोनकुर्यात्समेरिपुः ॥ तथाविष्णवाव
दत्वान्नंयोभुंक्तेसमहानहिः ॥ १३ ॥ इत्यादिष्टास्तेनपौराहृदिपत्थंचमेनिरे ॥ सुवर्णरत्नवासोभिर्धनधान्यैश्चमंडितैः ॥१४॥
ब्राह्मणानर्चयंस्तत्रचंद्रहासोनृपोत्तमः ॥ वापीकूपतडागानितथाविष्णुगृहाणिच ॥ १५ ॥ शिवालयानिछात्राणिमठान्यो
गीश्वराश्रमान् ॥ प्रपाश्चकारविविधापत्तयोयोधिकास्तथा ॥ १६ ॥ नारदउवाच ॥ देशाद्देशात्तदालोकाआजग्मुश्चंदनाव ॥१०४॥
तीम् ॥ चंद्रहासस्यनगरींधनधान्यसमन्विताम् ॥ १७ ॥ तांचंदनाव्हांपरिपालयंतंतंचंद्रहासंजनकःकुलिंदम् ॥ उवाचवैपु
त्रमयाप्रदेयंनिष्कायुतंकुंतलकायराज्ञे ॥ १८ ॥ तदर्धमस्मत्प्रभवेप्रदेयंतदर्धमप्यर्द्धममुष्यतुल्यै ॥ तत्प्रेषयाशुत्वमुदारबुद्धे

प्रीतिंयथामंत्रकरोलभेत ॥ १९ ॥ इतःषड्योजनंवत्सविद्यतेकौंतलंपुरम् ॥ यस्मिन्कौंतलकोराजागालवेनपुरोधसा ॥२०॥
राज्यंचकुरुतेसम्यग्मंत्रिणादुष्टबुद्धिना ॥ चंद्रहासःसमाकर्ण्यपितृवाक्यंप्रहर्षितः ॥ २१ ॥ यन्मंत्रिणेचराज्ञेचपत्न्यैयत्प्रेष्य
तेवसु ॥ तत्सर्वंगालवायास्मैप्रेषयामासलीलया ॥ २२ ॥ चारुविज्ञप्तिसहितंपत्रंप्रेषितवान्पुनः ॥ पत्रंचतद्धनंचैवसमादा
यप्रतस्थिरे ॥ २३ ॥ सेवकाश्चंद्रहासस्यप्रापुःकुंतलकंपुरम् ॥ एकादशीदिनेप्राप्तेसायान्हेतस्यसेवकाः ॥ २४ ॥ स्नात्वान
त्वाहरिंसांद्राविविशुस्तंपुरंतदा ॥ एवंस्नाताश्चार्चिताश्चयदायांतिनिवेशनम् ॥ २५ ॥ सेवकाश्चंद्रहासस्यदुष्टबुद्धेश्चमंत्रिणः ॥
तानार्द्रवाससोदृष्ट्वादुष्टबुद्धिरतप्यत ॥ २६ ॥ मानसेत्थंकुलिंदोऽसौमृतस्तेनेदृशाअमी ॥ अथाब्रवीत्संप्रणतान्कुलिंदस्यच
सेवकान् ॥ २७ ॥ कदापंचत्वमापन्नःकुलिंदःकुत्सितोह्यभूत् ॥ सेवकाऊचुः ॥ अनिष्टंवैरिणांभूयान्माकुलिंदस्यजातुचित्
॥ २८ ॥ कुलिंदस्यचपुत्रेणचंद्रहासेनधीमता ॥ कृत्वादिग्विजयंयुष्मत्प्रीतयेप्रेषितंवसु ॥ २९ ॥ इतितेषांवचःश्रुत्वामंत्री
विस्मयमागतः ॥ अन्नंचानाययद्भृत्यान्भोज्यार्थंसचिवाधिपः ॥ ३० ॥ सेवकाऊचुः ॥ अद्यएकादशीमंत्रिन्नभोक्ष्यामो
हरेर्दिने ॥ इतितेषांवचःश्रुत्वामंत्रीभृशमतप्यत ॥ ३१ ॥ मंत्रिरुवाच ॥ मंत्रीचाहनमृतोऽयंकुलिंदस्यापिसेवकः ॥ अस्म
द्दत्तानिचान्नानिभोक्ष्यंतेतेतीवगर्विताः ॥ ३२ ॥ कुलिंदंनिगडैर्बध्वाघातयिष्यामितंदृढम् ॥ इत्युक्त्वादंडमादायघातनायसमु
त्थितः ॥ ३३ ॥ तदातेसेवकाःसर्वेचंद्रहासंसमाययुः ॥ आगत्यसर्ववृत्तांतंशशंसुःसस्मितास्तदा ॥ ३४ ॥ अत्रांतरेदुष्टबु
द्धिर्विचार्यमनसातदा ॥ मदनंपुरमावेश्यपुत्रंकुंतलकंतदा ॥ ३५ ॥ यदाययौकुलिंदस्यनगरंमंत्रिसत्तमः ॥ तावत्पुत्रीसमाग
त्यविषयावाक्यमब्रवीत् ॥ ३६ ॥ विषयोवाच ॥ क्वगम्यतेभवद्भिस्तुकिमानयनहेतवे ॥ पितोवाच ॥ याहियाहिगृहंपुत्री

विषयेचारुलोचने ॥ ३७ ॥ संतोषःक्रियतांबालेवरंद्रष्टुंहिगम्यते ॥ एवमुक्त्वादुष्टबुद्धिस्तामाश्वास्यचकन्यकाम् ॥ ३८ ॥
पुत्रंनिवेश्यनगरेकुलिंदंनिर्ययौस्वयम् ॥ अकस्मादागतंदृष्ट्वामंत्रिणंविस्मयान्वितः ॥ ३९ ॥ कुलिंदःसहपुत्रेणनमस्कृत्यानयद्गृ
हम् ॥ पूजयामासविधिवत्संयुतःप्रणतस्थितः ॥ ४० ॥ तंमंत्रीपरिपप्रच्छपुत्रस्तेऽयंकदाभवत् ॥ आख्यास्यैथसुपुत्रस्यभव
तःपुरतःकथाम् ॥ ४१ ॥ कुलिंदउवाच ॥ औरसोनहिपुत्रोमेस्वयंप्राप्तोमनोरथः ॥ एकदामृगयाविष्टोयातोहंवनगह्वरम् ॥
॥ ४२ ॥ प्रविष्टःकुंतलमुखान्योजनद्वयसंयुतम् ॥ तत्राद्राक्षमहंबालंच्छिन्नषष्ठांगुलिंसुतम् ॥ ४३ ॥ पंचाब्दमधिकंबालमौ
रसादधियंमम ॥ विष्णुभक्तंचंद्रहासंजानीहित्वंमहामते ॥ ४४ ॥ अंतर्दृष्टिरभूत्पार्थयोगीवदुष्टधीःक्षणम् ॥ सएवायंभवद्वा
लोजातोवैषोडशाब्दकः ॥ ४५ ॥ चांडालैर्वंचितश्चाहमंगुलीदर्शनेनवै ॥ यद्वृत्तंगतमेवास्तुकरिष्यामोनृतंवचः ॥ ४६ ॥
मुनीनामथनिश्चित्यमनसाचाब्रवीद्गिरम् ॥ धारयन्प्रांजलिश्चायंवाचोंतर्मलिनंतथा ॥ ४७ ॥ दुष्टबुद्धिरुवाच ॥ सफलंतव
जन्माद्ययेनप्राप्यसुतःशुभः ॥ समोमेहृदयेहर्षःसंजातःसुमहात्मनः ॥ ४८ ॥ इत्थंवचःस्माहनिगूढभावंक्षुरंप्रलिप्तंमधुनैव
तीक्ष्णम् ॥ यथातृणैश्छादितगर्त्तएषःक्षौद्रंयथाविष्टविषंविचित्रम् ॥ ४९ ॥ इतिश्रीमहाभारतेभारतसारेअश्वमेधपर्वणि
चंद्रहासोपाख्यानेदुष्टबुद्धिसमागमोनामद्विनवतितमोऽध्यायः ॥ ९२ ॥ त्रिनवतितमेऽध्यायेविषयाचंद्रहासयोः ॥ विवाह
श्चाभवत्प्रेम्णाततस्फुटंवर्ण्यतेऽधुना ॥ १ ॥ नारदउवाच ॥ पुनर्दध्यौदुष्टबुद्धिःकुबुद्धीनांशिरोमणिः ॥ कथंमुनिवचोतथ्यंक
थंपंचत्वमेत्ययम् ॥ २ ॥ शंभुनायत्धृतंकंठेतद्दानात्हन्मितंरिपुम् ॥ नान्येनैवप्रकारेणहंतुंशक्योस्मिसांप्रतम् ॥ ३ ॥ चंद्रहा
समितिज्ञात्वाहर्षितःसोऽब्रवीद्वचः ॥ चंद्रहासविचित्रंत्वंपत्रमानयलेखनीम् ॥ ४ ॥ इष्टंतथालिखित्वैकंपत्रंत्वांप्रेषयेपुरम् ॥

तेनापितमुपादायपत्रमेकांतमास्थितः ॥ ५ ॥ प्रधानश्चार्पयामासतस्मिन्नवर्णान्यथामति ॥ स्वस्तिश्रीरस्तुवदनेवक्तुंकारण
मीदृशम् ॥ ६ ॥ चंद्रहासोहितोतिविमयायंसंपदांप्रभुः ॥ ज्ञातव्योनात्रसंदेहःपुत्रकार्यंत्वयेदृशम् ॥ ७ ॥ मारूपंमावयोद्रा
क्षीःकुलंशीलंपराक्रमम् ॥ विद्यांवित्तंविलंबोमामित्रस्यास्यकरिष्यसि ॥ ८ ॥ विषमस्मैप्रदातव्यंत्वयामदनशत्रवे ॥ इतिपत्रं
समालिख्यचंद्रहासंतुप्रेषयत् ॥ ९ ॥ शीघ्रंवाजिनमारुह्यचतुर्भिःसेवकैर्वृतः ॥ याहिकौंतलकंपत्रंधर्मदर्शयपुत्रकम् ॥ १० ॥
नारदउवाच ॥ सतत्पत्रमुपादायहयमारुह्यशोभनम् ।. मात्राशीर्भिःसुतःसोथययौकुंतलकंपुरम् ॥ ११ ॥ प्रातःकुंतलका
भ्याशेरम्यंक्रीडावनेसरः ॥ तत्रस्नात्वाहरिंपूज्यपाथेयंभक्षितंतदा ॥ १२ ॥ क्षणमात्रंहिविश्रांतस्तत्ररम्यसरोवरे ॥ सुकुंतल
पुरेराज्ञःकन्याचंपकमालिनी ॥ १३ ॥ दुष्टबुद्धेश्चविषयासुंदरीसुभगातदा ॥ तेकन्येऽऽजग्मतुस्तत्रशतकन्यासमन्विते॥१४॥
वसंतागमपुष्पाणिगृण्हंत्योवैययुर्वनम् ॥ सार्द्धत्रयोदशाब्दास्तायौवनोद्भेदचापलाः ॥ १५ ॥ कौसुंभांबरधारिण्यःस्फुरत्कंचु
कपल्लवाः ॥ एवंतावत्सरःप्राप्ताःपद्मनीखंडमंडितम् ॥ १६ ॥ नारदउवाच ॥ सरस्तीरेदुकूलानिरम्यमौक्तिकवालुके ॥ कन्या
भिस्त्यज्यमानानिमर्मरेतिविशुश्रुवुः ॥ १७ ॥ जलक्रीडांततःकृत्वावस्त्राणिचसमादधुः ॥ पश्चाद्विनिर्गताःसर्वाःस्वंस्वंमंदिरमु
त्तमम ॥ १८ ॥ तासांमध्येमंत्रिपुत्रीविषयापृष्ठतःस्थिता ॥ तयादृष्टःकुमारोऽयंचंद्रहासोनृपोत्तमः ॥ १९ ॥ विषयानचचा
लाग्रेचंद्रहासगुणैर्धृता ॥ पुरंध्रींसासमाहूयनूपुरेप्रददौनृप ॥ २० ॥ ततःकटयांकरेकृत्वानिर्गतास्वनशंकया ॥ हंसीयातिय
थाहंसंकरिणंकरिणीयथा ॥ २१ ॥ एवंसानुगतातत्रयत्रसुप्तोनरेश्वरः ॥ पतिमाज्ञायविषयादत्तदृष्टिस्तुसर्वतः ॥ २२ ॥ ततोद
दर्शरुचिरंपत्रंकंचुकनिःसृतम् ॥ गृहीत्वातत्करेणाशुमुद्रामुद्भिद्यविस्मिता ॥ २३ ॥ वाचयामासतत्पत्रंपितुरत्यंतहर्षिता ॥ स्व

भारत स्तिश्रीरस्तुमदनेवक्तुंकारणमीदृशम् ॥ २४ ॥ चंद्रहासोहितोर्तिवममायंसंपदःप्रभुः ॥ ज्ञातव्योनात्रसंदेहःपुत्रकार्यंत्वयेदृशम् सार:
॥२५॥ मारूपंमावयोद्राक्षीःकुलंशीलंपराक्रमम् ॥ विद्याविनोविलंबोमामित्रस्यास्यकरिष्यसि ॥ २६ ॥ विषमस्मैप्रदातव्यंत्व अ०९३
॥१०६॥ यामदनशत्रवे ॥ दध्यौसाविषयापश्चादभिप्रायंविवृण्वती ॥२७॥ संपदांमेप्रभुर्मित्रंहितोमदनसंनिभः ॥ एवमादिमयापत्रेरुचि
रंवीक्ष्यतेतदा ॥२८॥ नारदउवाच ॥ वरंमनोरमंवीक्ष्यतद्रूपंहर्षनिर्भरम् ॥ विषमस्मैप्रदातव्यंहर्षान्मेस्खलितःपिता ॥ २९ ॥
अ.मे.प. १५ वृद्धत्वाद्दासूक्ष्मबुद्ध्यात्वीदृशंलिखितंध्रुवम् ॥ पितुःपत्रंसमालोक्यमदनोपिहनिष्यति ॥३०॥ कन्याकज्जलमादायनखेनानेनसुंद
रीरसालद्रुमनिर्यासंसंयुतंकंठहारतः॥३१॥मर्दयित्वामुदायुक्तालिलेखविषयातदा ॥विषयास्मैप्रदातव्यालिखित्वैवंतुनिःसृता
॥३२॥आगताविषयागेहंसखीभिश्चोपहासिता ॥ चंद्रहासोपिसायान्हेसभायांमदनस्यच॥ ३३॥आगतोमिलनार्थायहर्षनिर्भर
मानसः॥तंदृष्ट्वासहसोत्थायहर्षनिर्भरमानसः ॥३४॥ आलिलिंगमुदायुक्तश्चंद्रहासंतुवैष्णवम् ॥ पत्रंसपाठयामासचंद्रहासेर्पितं
पितुः ॥ ३५ ॥ पत्रस्थंभावमालोक्यसंतुष्टोमदनस्तदा ॥ अथविप्रान्समाहूयगणकान्शास्त्रकोविदान् ॥ ३६ ॥ पप्रच्छमद
नोलग्नंविषयाचंद्रहासयोः ॥ विप्रउवाच ॥ अद्यैवरुचिरंलग्नंसर्वदोषविवर्जितम् ॥ ३७ ॥ तेषामाकर्ण्यवचनंमदनोहर्षनिर्भरः॥
महामंगलनिर्घोषैरुद्वाहंकृतवांस्तदा ॥ ३८ ॥ गोत्रंपप्रच्छमदनश्चंद्रहासंतुवैष्णवम् ॥ ३९ ॥ चंद्रहासउवाच ॥ सचं
द्रहासोप्यवदत्स्वगोत्रंहरिःस्वयंमेजनकःसएव ॥ पितामहोवैप्रपितामहोहरिर्हरेर्नचान्योस्तिसुहृद्द्वितियः ॥ ४० ॥ स्व ॥१०६॥
सारमस्मैप्रददावथोच्चैर्लक्ष्मीपतिस्तृप्तिमुपेतुदानात् ॥ बद्धांजलीकुंकुमचर्चितांगौतौदंपतीप्रापतुराशुवेदीम् ॥ ४१ ॥ हुताश
नंतृप्यतिस्वाज्यपूरैः परंपरंसाप्तपदीविधाने ॥ ४२ ॥ ततोसौमदनोहृष्टःप्रददौचधनंवसु ॥ गावोगजारथाश्वोष्ट्रामहिष्यो

